[b]) यथा चोत्क्षेपणादिक्षणैरसमसमयभाविभिरप्यावृत्त्योत्क्षेपणत्वादिजातिरभिव्यज्यते तथा अधिश्रयणादिभिः क्रियाक्षणैः पचत्यादिक्रियाजातिरिति विचारयिष्यते। व्यक्तिद्वारकं चास्या नित्याया अपि साध्यत्वमुपपद्यते।

(15) [a]) उपसर्गादिभिरप्यत्र दर्शने नामाख्यातसहभावी तदर्थस्य विशेषावद्योतकत्वाज्जातिपदार्थ एव। विशेषस्य विशिष्टविश्रान्तस्यैवावसायात्कर्मप्रवचनीयोऽपि संबन्धजातिनिष्ठ एव। गुणशब्दानामपि शुक्लादीनां गुणजातिर्वाच्या। संज्ञाशब्दानामपि डित्थादिशब्दानां जातिवाचित्वं समर्थयिष्यते।

(16) [a]) तदित्थं **वाजप्यायनाचार्यमतेन** सार्वत्रिकी जातिपदार्थव्यवस्थोपपद्यते। **व्याडिमते** तु सर्वशब्दानां द्रव्यमर्थः, तस्यैव साक्षात्क्रियासमन्वयोपपत्तेः वाक्यार्थाङ्गतया चोदनाविषयत्वात्। यथाह—

'चोदनासु च तस्यारम्भात्' (Vā. on P. 1.2.64)

इति। एकजातिसमन्वयवशेन चात्र संकेतोपपत्तिः। [b]) अनभिधीयमानापि जातिरुपलक्षणीक्रियते शब्दार्थे यथा गृहादौ काकादि। आख्यातेऽपि च साधनाधारद्रव्यप्राधान्यं व्याडिमते। देवदत्तः पचतीति द्रव्येणैव साक्षात्सामानाधिकरण्योपपत्तेः। क्रिया तु गुणभूतात्र, व्यापाराविष्टं हि द्रव्यमाख्यातार्थः, इदं तदिति सर्वनामप्रत्यवमर्शयोग्यं चात्र द्रव्यमिति सार्वत्रिकीयं व्यवस्था। तथा च वक्ष्यति—

'द्रव्यधर्मा पदार्थे तु द्रव्ये सर्वोऽर्थ उच्यते।'

इति। [c]) अत एव शुक्लादीनामपि द्रव्यपदार्थता सिद्धा। तत्तदुपाधिव्यवच्छिन्नं वा ब्रह्म द्रव्यशब्दवाच्यं सर्वशब्दानां विषय इति वक्ष्यत एव। व्यक्तिपर्यायो वा द्रव्यशब्द इति जातिव्यक्तिविकल्पेन सर्वशब्दविषयः। तथा च सर्वशब्दानामित्यभिधानात्पदादप्यपोद्धारे

---

[b]) AH यथा वा. AD असमयभा°; $D_2$ सरमयूनाविभिः. C आवृत्त्यक्षेपण°. D आवृत्त्योक्षगण°. $D_2$ आवृत्तौत्क्षेपण°. M यथा (for तथा) M पच्यादि°. D चात्या (for चास्या); $D_2$ चास्य. C °पच्यते (for °पद्यते).

(15) [a]) B °सर्गादिभिरत्र. C °भावि (for °भावी). C °पदार्थक. $D_2$ °न्तस्यैकाव°. C संबन्धो. B गण° (for गुण°) C °शब्दना. $D_2$ वान्या (for वाच्या). C जातिशब्दत्वं.

(16) [a]) $D_2$ तर्हिंज (for तदित्थं) $D_2$ प्याडि (for व्याडि°) $D_2$ समन्यशो° (समन्वयो°) C वाक्यार्थान्तर्गततया; $D_2$ वाक्यार्थोवगत°. M. °क्रियया सम°. D ins. ब्रह्मसत्ता° (after एक°) $D_2$ °समत्वय (for °समन्वय°). [b]) L अनमिधेयापि. D °लक्षणा°. A सा भवनाधार°. C संबन्धोपपत्तेः $D_2$ °णभूतात्र. C व्यापारविशिष्टं LM वा (for चात्र) H ins. इति. (after वक्ष्यति) DM सर्वार्थे. [c]) D सिद्धो. H इत्यशब्दवाच्यं. $D_2$ नाति (for जाति°) BC °विषम (for विषयः) C om. प्रकृति°. D यथापोषं. D समाश्वातः. ACH ins. च (after तत्वं) L om. न. L विहन्यन्ते. C सदेव वा. C प्रतीते (for प्रतीतेः).

प्रकृतिप्रत्ययरूपस्यापि शब्दस्य यथायोगं क्रियाकारकसंख्यादिरपोद्धारपदार्थो जातिव्यक्तिभेदेन समाम्नातः । उभयस्यापि वा शब्दात्प्रतीतेरुभयं पदार्थः । गुणप्रधानभावभेदाश्रयस्तु मतविकल्पः । नित्यत्वोपवर्णनं च

'सिद्धे शब्दार्थसंबन्धे' (Vā. in पस्पशाह्निक of the M. Bh. Kiel. 1.6[16])

इत्यत्र भाष्ये—

'यस्मिंस्तत्त्वं न विहन्यते' (M. Bh. Cf. Kiel. 1.7[22])

इति द्रव्यस्यापि नित्यत्वम्, प्रवाहनित्यतया शब्दात्सदैव प्रतीतेः ॥ २ ॥

(17) तदेवं दर्शनभेदेन जातिर्द्रव्यं वा पदार्थ इत्युक्ते जातिपदार्थविषयशास्त्रोपयोगी विचारोऽत्र समुद्देशे । पदस्य हि परीक्षार्थमिदं काण्डम्, अर्थद्वारेण च पदपरीक्षा, वाक्यार्थौपयिकत्वेन च तद्विचार इति जातिपदार्थनये वाक्यार्थभूतया आख्यातपदवाच्यया क्रियया कथं समन्वयः । साधनेन हि क्रिया अन्वेति । न च जातिः साधनम् । तदाश्रयः साधनमिति चेत्, एवमपि जातेः साक्षाच्छब्देन चोदितत्वात्सामर्थ्यात्तदाधारप्रतिपत्तौ यथाचोदितानुषङ्ग इति—

'असंभवे प्रतिनिधिर्मा भून्नित्यस्य कर्मणः ।
काम्यस्य वा प्रवृत्तस्य लोप इत्यपदिश्यते ॥' (Vāk. a. II. 70)

इति प्रतिनिध्यनुपपत्तिरित्याशङ्क्य तत्समर्थनामाह—

**केषाञ्चित्साहचर्येण जातिः शक्त्युपलक्षणम् ।**
**खदिरादिष्वशक्तेषु शक्तः प्रतिनिधीयते ॥ ३ ॥**

(18) [a]) इह **केषाञ्चित्** जातिवादिनामेकार्थसमवायाच्छक्तेः प्रतिपादने **जातिः उपलक्षणम्**—उपायः इति मतम् । अन्येषां पुनस्तात्पर्येण जातिरेव शब्देन प्रतिपाद्यते, कार्ययोगस्तु तस्याः क्वचित्साक्षात्, क्वचिद्व्यक्तिद्वारेणेति मतम् । [b]) अथवा **केषाञ्चिद्** इति शब्दानाम् । ये साधनाभिधायिनः तत्र शक्तितात्पर्येण जातेरुपलक्षणत्वान्नान्तरीयकमुपादानम्, शक्तिवाचिन्या विभक्तेः केवलाया अप्रयोगार्हत्वात् । ततश्च प्रातिपदिकस्यावश्यमुपादानमिति तद्वाच्यया जात्या शक्तिरवच्छिद्यते सति संभवे ।

(17) L om. वा. D इत्युक्तं. C °विपये ; M °विषयः शा°. C परिक्षार्थ. C कारणं (for काण्डं). C °परिक्षा $ACDD_2H$ °भूताख्यात°. A °वाच्यमितिः $D_2$ °वाच्यवा (for °वाच्यया). $D_2$ क्रियाया. $D_2$ अत्वेति (for अन्वेति). M तत्राश्रयः. $D_2$ om. °धिर्मा मूत्...इति प्रतिनि°. D धा (for वा). AD °दिश्य इति. A विध्यनुपः D प्रतिनित्य उप° CL °समर्थनार्थ°.

का. ३ $ACDD_2H$ शक्तिः (for शक्तः).

(18) [a]) $D_2$ जातिद्वयल°. $D_2$ तासाः (for तस्याः). [b]) $CD_2$ शक्तिस्ता. M. °तात्पर्ये (for °तात्पर्येण). H °लक्ष्यत्वात्. $D_2$ केवलया. D °दानं सि (°दानमिति) D °दानमितः $D_2$ तद्वाप्यया जत्या.

[c]) तदभावे तु तत्सदृशापरजातिसहचरितापि शक्तिर्गृह्यते, तात्पर्येण चोदनात्। वाक्यार्थभूतया हि क्रियया साधनमात्रस्याक्षेपे सिद्धे विशिष्टजातीयप्रतिपत्त्यर्थं साधनश्रुत्युपादानेऽपि जातिविशेषस्यासंभवे क्रियासाधनशक्त्यावेदनपरतया जातेः प्रयोगान्माभूत्प्रधानभूतायाः शक्तेरपि त्यागे क्रियाया असंपत्तिरिति शिष्टसमाचारादन्यजातीयद्रव्यगतापि शक्तिः परिगृह्यते। [d]) न चैवमतिप्रसङ्गः, चोदितप्रतिनिधिविषय एवैतस्य न्यायस्येष्टत्वात्। तथा च गोदोहादिचोदनासु तदसामर्थ्ये न महिष्याद्याक्षेपप्रसङ्गः।

(19) [a]) उपलक्षणत्वाच्च जातिर्नियमं न विधत्ते। तद्यथा—उपघातकनिवारणपरे वाक्ये काकादिरिति सदृशोपादाने श्रौतार्थत्यागो न भवति। यत्र च संभवश्चोदितस्य श्रौतस्यार्थस्य, तत्र श्रुतिः सफला। तस्मात् 'खदिरे बध्नाति, पलाशे बध्नाति' इत्यादौ खदिरादेर्बन्धनसमर्थस्यालाभे तत्सदृशकदरादिशक्तसाधनपरिग्रहो युज्यते। [b]) अनाधारायाः शक्तेरसंभवात् नान्तरीयकत्वेन जातेरुपादानम्, नियमस्याविधानात्। जातिर्हि शक्त्युपलक्षणम् न कार्ययोगिनीति तदाश्रयस्याशक्तत्वे तमन्तरेण द्रव्यान्तरगतापि शक्तिर्गृह्यते। यदि तु तज्जातीयमेव शक्तं स्यात् तदा सन्निहितपरित्यागे कारणाभावात् तज्जातीयमेवोपादीयेत। [c]) तदशक्तत्वे तूपलक्षणस्योपलक्षणे चरितार्थत्वात् अन्यस्यापि तत्कार्ययोगे तदुपलक्षिता शक्तिः शास्त्रचोदितेत्यर्थान्तरगताप्यपर्युदस्तत्वादुपादीयते इति नियमो नास्ति। सदृशार्थान्तरगता च शक्तिर्गृह्यत इति नातिप्रसङ्गः॥ ३॥

(20) अथ येषां जातिवादिनां मते तात्पर्येण जातिरभिधेया न शक्त्युपलक्षणम्, तेषा कथं प्रतिनिधिरुपपद्यत इत्याशङ्क्याह—

---

[c]) एतत्सदृश°; $D_2$ यतः सदृशः. A om. शक्तिर्गृह्यते... जातीयप्रति. $CD_2$ °मात्राक्षेपे. $D_2$ सिद्ध (for सिद्धे). H विशिष्टजातीये. M. °जातिपत्त्यर्थः. A प्रत्यर्थं (for °पत्त्यर्थं) L om. प्रयोगात्. $D_2$ °भूतास्याः. C त्याग. $D_2$ स्यागः C क्रिया (for क्रियायाः) C विशिष्ट°; $D_2$ °शिष्टा°. $D_2$ °गृह्यतो. [d]) M ins. इतिनित्य (after चोदित) $D_2$ एतश्च (for एतस्य). M प्रवृत्तत्वात् (for इष्टत्वात्) C तदसामयर्थे.

(19) [a]) CL उपघात° (for °घातक°). L om. °निवारण°. C काकादिरीति; D कादिरिति; $D_2$ क्काकादिरिति; L काकादीति. $D_2$ °पादानं. $D_2$ °त्यागे. M तु (for च).C श्रौतार्थस्य; L om. श्रौतस्यार्थस्य. A सकला. $ADD_2LM$ पलाशं. $D_2$ °करादि°. [b]) C °रूपादानम्; LM °रुपादानात्. C ins. लक्षण° (after कार्य°). C °योगनी° (for °योगिनी°). LM om. इति. AH अशक्तत्वेनान्तरेण. $D_2$ शक्त (for शक्तं). $D_2$. त्वं जातीय°. $ACDD_2HL$ °दीयते. [c]) D °शक्तते. AD °लक्षणं. $ADD_2HM$ असत्यपि; C असन्यस्यापि; L अस्यापि. LM om. तत् (before कार्य°) $D_2$ °लभिता (for °लक्षिता). L अर्थात्पर°. ADM °गतार्थपर्यु° C °दियते (for °दीयते).

(20) B यैषा (for येषां) $D_2$ om. न. D कप (for कथं)

**अस्वातन्त्र्यफलो बन्धिः प्रमाणादीव शिष्यते ।**
**अतो जात्यभिधानेऽपि शक्तिहीनं न गृह्यते ॥ ४ ॥**

(21) [a]) **अत** इति । अस्वातन्त्र्यफलस्य वन्धेर्विधानात् चोदनात् जातेः प्रतिपाद्यत्वेऽप्युपलक्षणत्वाभावेऽप्यस्वातन्त्र्यप्रयोजनवन्धिविधिसामर्थ्याच्छक्तिहीनस्य खदिरादेस्त्यागे शक्तं कदरादि प्रतिनिधीयते । वाक्यार्थभूता हि वन्धिक्रिया प्रधानमिति तत्संपादनशक्तस्य पदार्थस्य परिग्रहो न्याय्यः । [b]) ननु च दृष्टफले बन्धौ कोऽनुरोध इत्याशङ्क्योक्तम् **प्रमाणादीव शिष्यते** इति । यथा दृष्टफलं **प्रमाणादि** चोदितं तथा तदङ्गभूतोऽपि बन्धिरिति सर्वथासावनुरोध्यः । तथा हि—असति पशोर्यूपे बन्धने प्रमाणाद्यनुपपत्तावववदानग्रहाभावात् स्वर्गफलस्य यजेरेवासंपत्तिः स्यादिति तदनुरोधात्तदङ्गसंपत्त्यर्थं तत्समुचितसाधनाक्षेपः । [c]) तत्र प्रमाणं हिंसाप्रारम्भः । मीञो हिंसार्थस्य ल्युट्येञ्विषये रूपम्, आत्वे च कृते मानम्, तस्यारम्भः प्रशब्देन द्योत्यते । आदिग्रहणादालम्भनादेरवदानग्रहणपर्यन्तस्य तदुत्तरस्य प्राकरणिकस्याङ्गकलापस्यानुरोधः । [d]) अयमत्र पक्षद्वयेऽप्याशयः । यदि नाम जातेः प्रकृत्यर्थभूतायाः शक्त्यवच्छेदकत्वेनोपात्ताया असंभवः तज्जात्यवच्छिन्नस्याशक्तत्वात् तथापि प्रत्ययार्थस्य शक्तेरवच्छेद्याया अपि त्यागो न युक्तः, अपि त्वन्यगतापि सा गृह्यते । मा भूत्तद्वाचिनः पदस्यानर्थक्यम्, वाक्यार्थस्य च क्रियाया असंपत्तिरिति गामालभेतेत्यादौ च सर्वत्र योग्यव्यक्तिविषयैव क्रियावतिष्ठते इति प्रतिनिधावपि किमिति संभ्रमः ॥ ४ ॥

---

का. ४. D बाध्नि. B °माणा परिशि°; C दौव° D °दाव. L °दिव C हिनं° (for हीनं)

(21) [a]) $D_2$ इत्येस्वात°. C विधे (for बन्धेः) C °विधिनां; D विधनां. $D_2$ विधिनो°. $ACD_2$ °दनाजातेः $D_2$ °पाद्यत्वेषुप°. B °लक्षणत्वभाक्ते°. D °सातन्त्र्य°. BDM °प्रयोजनं°. D °वध° (for °बन्धि°). M °हीनरवदि°. D °निधायते. C बन्धादि (for °भूतादि). $D_2$ दिचनिक्रियः. M. बधि°. AC तत्संपादान°; D तत्सपादान°. $D_2$ सुत्संपादान°. $BCD_2L$ om. पदार्थस्य. [b]) $D_2$ कोऽनुबन्धः. C इत्याशंक्यातं. C °णादाव°. L प्रमाणादिव. D शिष्यतं. $D_2$ om यथा. $CD_2$ यादृशं फलं (for दृष्टफलं). BL ध्निरिह. $D_2$ सर्यथा. B °वनुरोध°. $D_2$ वतुरोधः; L °वनुरोधः. $CD_2$ तथा सति. C पशोर्सपेः $D_2$ पशोर्पूयः°. M पशोर्यूप°. C बन्धन° D °द्यरपपत्तौ L °ग्रहयोरभावात्. D यजरेवा°. D असंपतिः. D तदउरो°. $D_2$ तवनुरो°. [c]) D प्रमाण्यं. D हियां (for हिंसां) D माञो. $D_2$ मासो. AHM ल्युटयेञ्विषय°; C ल्युडविषेये; D ल्युटयेविषय°; $D_2$ अयोञिषय°. B रूपवत्वे; D रूपमात्वं (for रूपम्; आत्वे) M °कते (for कृते) $D_2$ समानं (for मानं). M यस्य (for तस्य). D प्रशदन (for प्रशब्देन) $D_2$ दाननोद्° C om तदुत्तरस्य. C प्राकरणेकरय. $D_2$ °कल्पप° (for °कलाप°). BCLM उपरोधः. [d]) AD अथकथ मत्र. C पक्षद्वयथाशयः; D °क्षद्वये; $D_2$ द्यादायः (for °प्याशयः) A जातः; C ज्ञाते. D ज्ञातेः $ACDD_2H$ °वच्छेदेनो° L प्रत्ययार्थशक्ते° $D_2$ °खच्छेद्या अपि. D मुक्तो°. $D_2$ °त्वन्यत्वन्यग° ADL मा भूद्वाचिनः; $D_2$ सा भूद्वाचिनः. C पदथस्य (for पदस्य). $D_2$ नामारभे°. D °त्येत्यादौ.

(22) इदानीमत्रैव लिङ्गेनापि प्रतिनिधिमुपपादयति—

**संश्लेषमात्रं बध्नातिर्यदि स्यात्तु विवक्षितः ।**
**शक्त्याश्रये ततो लिङ्गं प्रमाणाद्यनुशासनम् ॥ ५ ॥**

(23) [a]) बध्नात्यर्थ उपचाराद् **बध्नातिः**इत्युक्तः । **संश्लेषो** यूपे पशोर्योजनम् तदेवास्वातन्त्र्यलक्षणफलानपेक्षं तन्मात्रम् । तद्यदि बध्नात्यर्थोऽभिमतः तदा तस्य खदिरलतयापि संपाद्यत्वसंभवे कदरोपादाने सामर्थ्यं नास्तीति **ततः** संश्लेशादुत्तरकालं प्रमाणादीनां 'पशुमालभेत', 'हृदयेऽवद्यति अथ वक्षसि' इत्यादिवचनेन यदनुशासनं तदत्र समर्थद्रव्योपादाने **लिङ्गम्** अनुमानम् । [b]) अथवा पूर्वं बन्धिरेव लिङ्गमासीत्, इदानीं यदि संश्लेषमात्रं बध्नातिस्ततः प्रमाणाद्यनुशासनं लिङ्गमित्यर्थः । पशुविशसनाङ्गस्य हि बन्ध्यर्थस्यात्रोपादान युक्तम् । असमर्थश्च विशसने बध्नात्यर्थो न तदङ्गमिति एकप्रकरणोपात्तप्रमाणाद्यर्थपर्यालोचनालभ्यः प्रतिनिधिः । [c]) पूर्वं पदार्थसामर्थ्यादनन्तरं वाक्यार्थसामर्थ्यात्प्रतिनिधिरुक्तः, संप्रति प्रकरणसामर्थ्यादिति पक्षत्रये विशेषः । शक्तेराश्रयः कदरद्रव्यं तत्रोपादीयमाने लिङ्गमिति संबन्धः । यद्वा शक्तिः कार्यस्य निर्वर्तको द्रव्यस्यात्मातिशयः, तदाश्रये तदभ्युपगमे इत्यर्थः ।

तदेवं यदुक्तं वाक्यकाण्डे—

'यश्च जातिसमुद्देशे प्रतिनिधिं प्रत्यपरो दर्शनभेदः' ।

इति सोऽयमिह व्याख्यातः । [d]) तत्र पुनरन्यो दर्शनभेदः प्रतिपादितः—असंभवनियमत्यागो नियममात्रबाधश्चेति । तथा हि—व्रीहिभिर्यजेतेति देवतोद्देशेन द्रव्यत्यागस्य यज्यर्थत्वाद्यजतिक्रियैकदेशभावापन्नं द्रव्यमात्रं यजेतेत्येव सामर्थ्यात्प्राप्तम् । एतावानेव हि

---

(22) H तदानीं. C लिङ्गनोऽपि; $D_2$ °तिमेनापि.

का. ५ C °मात्रबंध्ना°. B तता (for ततो)

(23) [a]) ADH °रित्युक्तम्. AD देवा° (for तदेवा°). $ACDD_2HM$ °लक्षणं. $ABCDD_2HM$ ins. स्व (before फला°). H °नपेक्षयं. $D_2$ ततेन्मात्रम्. $BD_2LM$ वन्ध्यर्थोऽ°. $D_2$ ऽभिमित्तः (for ऽयिमतः) All Mss and A संपाद्यत्वात्संभवे. L कदरेऽपादाने. M कदरोपासने. $D_2$ °षानुत्तरं. L °षानुतरं प्र°. C प्रमाणादिनां. C द्यदये° (for हृदये). C अपचसी. $D_2$ अपवजसी° (for अथ वक्षसी°) M वचने (for वचनेन). [b]) $AD_2$ rep. अथवा पूर्वं... प्रमाणाद्यनुशासनम्. H विधेरेव (for बन्धिरेव) LM om. यदि (after इदानीं). L om. हि; M एव (for हि). C बन्धना (for बन्ध्य°). B अन्यत्र (for अत्र). M °मर्थस्य. D पक° (for एक°). B प्रतिनिधि. [c]) D °निति° (for °निधि°). $DD_2$ सङ्गति (for संप्रति). $ABCDD_2H$ करण° (for प्रकरण°) B शक्तः C शक्ति. D शार्क्ति. LM कार्यनि°. BC निवर्तको. [d]) $CD_2$ om. दर्शन°. C नियमात्र°. (for नियममात्र°). D यज्यर्थता°. $D_2$ यति°. $D_2$ °क्रिधैक° (for °क्रियैक°) C °भावायत्त्रं°. $D_2$ °भावानं. BL °पन्नद्र°. $ADD_2HM$ द्रव्यैकमात्रं. $D_2$. सामर्थ्यात् प्राप्तानेव. LM °र्थ्यप्रा.

यज्यर्थ इति श्रुतिप्राप्तसन्निधानमेव द्रव्यमात्रम् । [e]) द्रव्यदेवतारहितस्य त्यागमात्रस्य यज्यर्थत्वायोगात्प्रतीते तस्मिन्नर्थसामर्थ्यादनन्तरं द्रव्याक्षेपस्यायोगात् । इत्थं च क्रियाप्रधानत्वेऽप्याख्यातस्य तदेकदेशभूतं साधनाधारमपि द्रव्यसामान्यं श्रुतिप्राप्तसन्निधानं शाब्दमेव । तत्र व्रीहिभिरिति व्रीहित्वेनाविरुद्धैकार्थसमवायेन विशेषेण परिपोषः, निर्विशेषस्य सामान्यस्याभावात् । [f]) अध्यावापार्था हि व्रीहिश्रुतिः शब्दसामर्थ्यप्राप्तं द्रव्यत्वमात्रमविरोधान्न बाधते । तद्धि श्रुतिसामर्थ्यप्राप्तम्, व्रीहित्वं पुनरर्थसामर्थ्यायातम्, निर्विशेषस्य सामान्यस्याभावात् । एवं च द्रव्यत्वमात्रस्य श्रुत्या अङ्गभावश्चोदितो न व्रीहित्वस्य विशेषस्येति तदसम्भवेऽपि विशेषान्तरेण सामान्यमात्रस्य परिपोषे प्रतिनिधिविषये चोदितस्य बाधा न भवति ।

(24) [a]) ननु चाध्यावापे व्रीहिभिर्द्रव्यत्वस्याबाधितत्वाद्विकल्पः प्राप्नोति सर्वत्र व्रीहिभिर्यवैर्वेत्यादि । अविशिष्टं हि द्रव्यत्वं श्रुतिसामर्थ्यप्राप्तम्, तस्य चेद् व्रीहिश्रुत्या विशेषान्तरादवच्छेदो न क्रियते तदा तदपि विशेषान्तरं तेन स्वीकृतं प्राप्तसन्निध्येवेति विकल्पप्रसङ्गः तथा च व्रीहिश्रुतेरानर्थक्यम् । [b]) अत्रोच्यते–इह व्रीहित्वेन द्रव्यत्वे विशेषिते वस्तुसामर्थ्याद्यवत्वादीनामसंभवः । न हि यत्र व्रीहित्वैकार्थसमवायि द्रव्यत्वं तत्रैव यवत्वैकार्थसमवायि संभवति । ततश्चासंभवनियमो नामायम् । द्विप्रकारो हि नियमः— कश्चिच्छब्दसामर्थ्यायातो भवति यत्र पक्षे प्राप्तौ सत्यां श्रुतिः । यथा व्यक्तौ पदार्थे ' विप्रतिषेधे परम् ' इति । कश्चित्पुनरसत्यपि शब्दव्यापारे पदार्थानामितरेतररूपसाङ्कर्याभावादेकचोदना तदन्यनिवृत्तिफलेति पदार्थस्वरूपविमर्शायातोऽसंभवनियम इत्युच्यते ।

---

[e]) $D_2$ °न्नर्थ. C द्रव्यापक्षेमायोगात्. L om. च (after इत्थं). M नत्वेनाख्या°. D °त्वेव्याख्या°. B °न्यश्रुति°. $CD_2$ शब्द° (for शाब्द°). B °मेवं° M ins. च (after तत्र). B प्रसिद्धिरिति (for व्रीहिभिरिति). $D_2$ °हिनिरिति. B व्रीहित्वं. C व्रीहिमित्वे. $D_2$ त्रीहित्वे°. M. °नावरुद्धै°; B कार्थे (for °कार्थं). C समवयेन. ACDH विशेषण°; $D_2$ बिशेषणं. B परिपोषाद्; C परिपोषं; $D_2$ परिशेषः. [f]) C °वापार्थस्य; $D_2$ वापात्य°. $CD_2L$ om. हि C °सामर्थ्य°. C °मविशेषा°. B बाधेत. C °सामर्थ्यं. $D_2$ °रथ्य°. C °सामर्थ्यात् प्राप्तं. C द्रव्यमा°. C °भावश्चोदितो. C व्रीहितस्य (for व्रीहित्वस्य). C °मात्रस्या°. C °विषय° (for विषये).

(24) [a]) C वाच्यापिपे. M व्रीहिद्रव्यं (for व्रीहिभिर्द्रव्यं). $D_2$ ins. त्वेनं (after द्रव्यं). L द्रव्यं (for द्रव्यत्वं) D प्राप्त. C °श्रुत्यविशेषा°. M °न्तरावपेऽवच्छेदो. B यदा; L तदापि. L om. तदपि. D प्राप्तं न्निध्यं°. $D_2$ प्राप्तं. C °सन्निध्यावेति; D °न्निध्येवेति. D प्रसङ्ग. B°श्रुत्योः° D °अतेः (for श्रुतेः). [b]) B व्रीहित्वे (for व्रीहित्वेन). M वक्तृसा°. M तथाहि (for नहि). BLM om. यत्र. B यत्वैका (for यवत्वैका) M ins. न (before संभवति). C कश्चिच्छब्दं. $D_2$ °र्थ्याद्यातो. C ins. न (before भवति). $ADD_2H$ यक्षप्राप्तौ. $D_2$ सेत्यां. B °देकाचो°. $D_2$ वोदन (for चोदना). C °निवृति°. $D_2$ °फलेपिति (for फलेति). $D_2$ °स्वरूपि° (for °स्वरूप°). C °विमर्शनातो; $D_2$ °मर्शाणतो. B °तः संभव°.

तथा चेह शब्दसामर्थ्यायातं द्रव्यत्वमिति व्रीहिभिरिति तत्राध्यावापः शब्दव्यापारः। [c]) अखण्डेऽपि हि वाक्यार्थनयेऽपोद्धारदशागतो भेदसंसर्गादिविकल्पः। तत्र व्याडिमते भेदो वाक्यार्थः, पदवाच्यानां द्रव्याणां द्रव्यान्तरनिवृत्तितात्पर्येणाभिधेयत्वात्। जातित्वादिनो वाजप्यायनस्य तु मते संसर्गो वाक्यार्थः, सामान्यानां पदार्थानां संश्लेषमात्ररूपत्वाद्वाक्यार्थस्य। इयति चरितार्थे व्रीहिशब्दे व्रीहित्वस्य यवत्वादिभिर्विरुद्ध एकस्मिन्नर्थे समवाय इति तत्र तानि निवर्तन्ते। ततश्च प्रतिनिधौ वस्तुसामर्थ्यायातस्य नियमस्य बाधेऽपि शाब्दस्य द्रव्यत्वमात्रस्याबाधितत्वान्न चोदितार्थत्यागः।

(25) [a]) ननु च निर्विशेषस्य सामान्यस्यासंभवात् यजिना विशेषनिष्ठमेव द्रव्यत्वमाक्षिप्तमिति सर्वविशेषाणा श्रुतिसामर्थ्यप्राप्तत्वात् व्रीहिभिरिति पुनः श्रुतिर्नियमफलैव श्रौतेनापि रूपेण संजातेति कथं न श्रौतार्थत्यागः। [b]) प्रतिनिधौ नैतन्न्याय्यम्। न हि शब्दो वस्तुचिन्तामनुसरति, कस्यचिदेव वस्तुभागस्य शब्दव्यापारविषयत्वात्। तथा च यजतिशब्दस्येयत्येव सामर्थ्यं द्रव्यमात्राक्षेपे न तु तद्विशेषे। अन्यथा निर्गुणस्य च द्रव्यस्यासंभवात् गुणस्याप्याक्षेपकोऽसौ किमिति न वर्ण्यते। तस्माद् द्रव्यत्वमात्रस्यैवाक्षेपः शाब्द इति तत्परिपोषाय विशेषान्तरावापो न नियमफल इति शास्त्रेणापर्युदस्तानां विशेषान्तराणां प्रतिनिधिसिद्धिः। [c]) तदित्थमसंभवनियमत्यागो वर्णितः। नियममात्रबाधश्चा-

---

[c]) C अखण्डि. BL वाक्यार्थे. $D_2$ वाक्याष्ट°. C ऽयोद्धार°. M. ऽपोद्धारः शात्रतो भेद°. B व्यक्ति°. M. तात्पर्येणानिस्तद्विषयत्वात्. $D_2$ जातित्वादि. B वाक्यार्थ°. C वाक्यार्थ. AD om. पदार्थानां. C संश्लेषण°. L सुश्लेष°. $D_2$ दयति (for इयति) $D_2$ एव° (for एक°). C °न्नर्थ° (for °न्नर्थे) DM वर्तन्ते (for निवर्तन्ते). M वक्त (for वस्तु); D °सामर्थ्य (for सामर्थ्या). $D_2$ °पातस्य (for °यातस्य). D नियस्य (for नियमस्य). M om. नियमस्य. H अबाधेऽपि. $D_2$ °मात्रस्यालाधित°. M. °त्रस्य बा°. BL °दचोदितार्थ°. $D_2$ °भवेदितार्थ°.

(25) [a]) AD स्वनिर्वि°. $D_2$ न तु वनवितिविशेषस्य; M ननु च तदुच्यते निर्वि°. B °वायवच्छिन्ना. $D_2$ याजिन. C विनिष्ठ°; D शेषनिष्ठ°; M. विशेषनिघ्न°. $CD_2$ om. इति and ins. एवं च सति (after आक्षिप्तं). M. °विशेषायां. D वाहिभि°. C °र्नियम्यफ°. D श्रोतेना°; $D_2$ सौतेना°. $ACDD_2HL$ om. न (after कथं). $D_2$ औनार्थ (for श्रौतार्थ°). C °त्याग; $D_2$ °रागः (for °त्यागः). [b]) $D_2$ °न्नाप्यम् (for न्याय्यम्) L °चिन्तन° (for °चिन्ता°). L om. च (after तथा). D पतति° (for यजति°). C °स्येयस्त्येव; $D_2$ °स्येयस्येव. $D_2$ °मात्राक्षेदो. C तु द्विशेषे; $D_2$ तु द्वित्रोषे. C om. च (after निर्गुणस्य). C °प्यक्षे. C नं (for न). D द्रव्य तु (for द्रव्यत्व°). $D_2$ °सावस्यैव (for °मात्रस्यैव). B आक्षेपं. C आक्षेप. B शब्द. $CD_2$ °पोष° (for °पोषाय). C °राध्यावापो (for °रावापो) C निनयम° (for न नियम°). C °णापर्युदेस्ता°. $D_2$ °स्तावा. B सिद्धिं. C °सिद्धि (for °सिद्धिः). [c]) B तत्संभव° (for तदित्थमसंभव°) H °नियमभागो. $BCD_2$ °वर्णित°. $D_2$ नियमात्र°. C इति (for इह). BD वाक्यार्थ. C तथा च. $D_2$ तयाया (for तया च). C सिद्ध्यर्थ. $D_2$ वसिद्ध्यर्थ. BCL om. °द्रव्य°. $D_2$ °गत° (for °द्रव्य). C °प्यत्र (for यत्र). D ins. °भत° (after प्रधान). L °संपत्त्यर्थत्वं. D °निधायते. $D_2$ om. क्रिया हि न प्रतिनिधीयते. D °निधायते.

प्युच्यते। इह सर्वत्रैव क्रियाप्रधानं वाक्यार्थः। तथा च स्वसिद्ध्यर्थं योग्यद्रव्यमाक्षिप्यते साधनम्। तदेव च पदान्तरेण विशिष्टं कथ्यते। इत्थं स्थिते यत्र श्रुतस्य साधनस्यासंभवस्तत्र प्रधानभूतक्रियासंपत्त्यर्थं साधनान्तरं प्रतिनिधीयते। क्रिया हि न प्रतिनिधीयते प्राधान्यात्। [d]) क्रियान्तराश्रयणे च कर्मान्तरस्याचोदितस्यानुष्ठानाच्छास्त्रार्थोल्लङ्घनं स्यादिति गुणभूतस्य साधनस्यैव प्रतिनिधिराचरितः शिष्टैः। तत्र च प्रधानभूतक्रियापदार्थाक्षिप्तस्य शास्त्रचोदितस्य साधनमात्रस्य न त्यागः, अपि तु व्रीह्यादिपदोपात्तस्य द्रव्यविषयस्य नियममात्रस्य बाधः। स च न दोषाय, शक्तिमात्रस्य साधनरूपस्य क्रियासामर्थ्याक्षिप्तस्य प्राधान्याच्छास्त्रचोदितस्योपात्ताधारस्वरूपद्रव्याभावे तदपरतदाधारभूतद्रव्योपादानेऽपि तस्यापरित्यागाच्चोदितार्थोल्लङ्घनाभावात्॥ ५॥

(26) तदेवमेतदनन्तरकाण्डे दर्शनद्वयमुपपादितमिति यथासंभवं प्रतिनिधिश्च चिन्तितः। इदानीं जातौ शब्देनाभिधीयमानायां तत्र जात्यन्तराभावान्निर्निमित्ता शब्दस्य प्रवृत्तिरायातेत्याशङ्क्योपपादयितुमाह—

**स्वा जातिः प्रथमं शब्दैः सर्वैरेवाभिधीयते।**
**ततोऽर्थजातिरूपेषु तदध्यारोपकल्पना॥ ६॥**

(27) [a]) **स्वा** असाधारणी आत्मीया गोशब्दत्वादिका न तु सकलशब्दसाधारणी शब्दत्वादिः। एवं चासाधारणत्वेन विशेषणात्तया संबन्धाव्यभिचारः शब्दस्यार्थजात्या संबन्धव्यभिचारेऽपीति **स्वा जातिः** एव मुख्यमभिधेयमित्युक्तं भवति। तथा च **वाक्यकारः**—

---

[d]) $D_2$ व (for च). L. °न्तरस्य चो°. A.CDD$_2$HL शास्त्रस्योल्लं°. B साधनत्वस्यैव. B °राचरितं. ABDD$_2$HL शास्त्रितस्य; M शास्त्रोतस्य. L om. न (before त्यागः) L °पात्तद्रव्य°. Lवाधं. $D_2$ स्वदोपाय. CD$_2$ पदाक्षिप्तं (for शक्ति°) C om. °रूप°. C om. °उपान्त° B उपान्तयारूप°. B तदपरताधार°. B चोदितत्वोल्ल°.

(26) C दर्थन° (for दर्शन°) C °धीयमानानां; D °धायमानायां. C °न्निमिता. H शब्द° (for शब्दस्य). C श्रुत्ति° (for प्रवृत्ति°). C °रापते°; D °रापते°; $D_2$ °रायेते° (for रायाते°)

का. ६. BH स्वजातिः. C जाति

(27) [a]) B स्वानुसाधारणी; C आसारणी. B rep. आत्मीया जातौ शब्देन...रायातेत्याशङ्क्येतिः C ins. सर्वथा (after आत्मीया). D शकल° (for सकल°). B शब्दस्वादिः C °धारणी° (for धारण°). C °पणतया. D °चार. AB rep. शब्दस्यार्थजात्या संबन्धव्यभिचारः. C गोशब्दस्य (for शब्दस्य). CL स्वजातिरेव. B मुख्याभि°

'न वा शब्दपूर्वको ह्यर्थे संप्रत्ययः' (Vā. on P. 1.1.67)

इति। [b]) अत एवाव्यभिचारिण्याः स्वरूपजातेरर्थजात्यभिधाने शब्दस्य नान्तरीयकमभिधानमिति **प्रथमम्** इत्याह। यदभेदेन यत्प्रतिपत्तिः तदवश्यं तत्र प्रतिपत्तव्यमित्येतावतात्र प्राथम्यम्, न तु क्रमेणाभिधानात्। [c]) यद्वा संबन्धव्युत्पत्तिकालापेक्षं प्राथम्यम्। तथा हि—संबन्धव्युत्पत्तिकालेऽर्थजात्या नास्ति संबन्धः। तथात्वे वाचकत्वेन तत्र विनियोगोऽनर्थकः स्यात्, अर्थस्य प्रतिपन्नत्वादिति सोऽर्थस्तावत्तेन शब्देन न प्रतिपन्नः। यदि च स्वजात्यभिधानं तदानीं न स्यात् तदानर्थकत्वाद्विभक्तियोगो न स्यादिति

'प्राक् संज्ञिनाभिसंबन्धात्संज्ञा रूपपदार्थिका' (Vāk. b. I. 66)

इत्युक्तम्। रूपं हि स्वरूपं स्वा जातिर्वेति दर्शनभेदेन कथ्यते। [d]) **सर्वैः** इति। स्वरूपपरैरर्थपरैश्च, तस्या एव स्वरूपतया व्यवहारात्। तथाव्युत्पन्नैरपि शब्दैरविनाभावाच्छब्दस्वरूपेणावस्थिता जातिः प्रतिपद्यते। अर्थस्य झटित्येव शब्दस्वरूपाभेदेनावबोधेऽपि यथा प्रतिपादितक्रमाश्रयेण ततः स्वजातिप्रत्यायनादनन्तरमर्थजातीनां गोत्वादीनामात्मसु तस्याः शब्दजातेः समारोपस्य **कल्पना** न परमार्थः, शब्दविवर्तत्वेनार्थस्य शब्दात्तत्त्वतो भेदाभावात्।

(28) [a]) यद्वा संबन्धव्युत्पत्तिकाले गौरयमर्थ इत्यर्थजात्या शब्दजातेरत्यन्तभेदात्सामानाधिकरण्यान्यथानुपपत्त्या अभेदाध्यारोपः कल्प्यते। यथा गौर्वाहीक इति। अन्यथा सङ्केतस्यैव कर्तुमशक्यत्वात्। यथा चायमनादिरपौरुषेयो वाच्यवाचकभावः तथाध्यारोपोऽपि। अन्यथा वाच्यवाचकभाव एव न घटेत, यथा बौद्धस्य दृश्यविकल्पार्थैकीकारो भेदानध्यवसायलक्षणः, न तु यथा गौर्वाहीक इत्यत्र पुरुषेच्छया अध्यारोपः। व्यवहारे

---

[b]) C एव व्यभि°. ABCDD$_2$HM °चारिण्या (for °चारिण्याः). B सारूप्य° (for स्वरूप°). B °रर्थे जात्य°. C जातेरभिधानेऽपि. C °धायन°; L °धानक°. B यदभेद°. BL तत्र. H om. न (after प्राथम्यं) ADD$_2$H °मिधानम्. B om. हि after तथा. [c]) C °पेक्षया. BS त्यर्थजात्या; C ऽर्थजात्या. B तत्त्वचाक°; L तत्त्वे वाचक°. B °नर्थता. D om. °दितिसोऽर्थ ...तदा अनर्थकत्वा°. B तावत्त्वेन (for तावत्तेन); C तावतेन. C यदित्वस्य. B om. तदानर्थक... न स्यात. D °र्थकाद्वि°. C सञ्ज्ञिनोऽभि°. C ins. भवति (after °त्युक्तं). C om. रूपं हि; C स्वरूपं. B यद्वा जातिर्वा (for स्वा जातिर्वा). L om. इति. C दर्शने. [d]) C स्वरूपैरर्थं; L °पपैररपरैश्च. C स्वरूपपरतया. B तथा च (for तथा). ADD$_2$HM om. तथा अव्युत्पन्नै... रविनाभावात्. BL शब्दरूपत्वेन. BL प्रतिपाद्यते. C कृदित्येव (for झटित्येव). L °बोधोऽपि. M. तथा (for यथा). C °क्रमेणश्रयेण. M समारोपकल्पना. L om. शब्द (before विवर्तत्वेन). D °विवर्ततेन. C शब्दातन्त्वतो.

(28) [a]) L rep. °रत्यन्त°. C कल्पते. C कर्तु तु शक्यत्वात्. L om. च (after यथा). AD$_2$H तथा (for यथा). B °र्थैकीकारे; C °र्थैकाकारो. ACDD$_2$HM ननु (for न तु) C पुरुषेत्वाया C व्यवहार°. C °वर्गनभि°. C °व्यक्तासाधारण°. D °भावविभि. BL °रसमवाय°. C °गौभिन्य°. C यथोत्क्षपण°. M °त्सुगमगमय भाविभि°.

शब्दार्थयोः सदैवाभेदावसायात्कथमियं प्रतिवर्णमनभिव्यक्तासाधारणी जातिरसमसमयभाविभिर्वर्णैरभिव्यज्यत इति चेत् यथोत्क्षेपणत्वादिजातिरिति ब्रूमः। [b]) तथा हि—प्रत्येकं कर्मक्षणानामुपव्यञ्जकत्वेऽपि यः प्रथम उत्क्षेपणक्षणः स परमाणुमात्रदेशाक्रमणमात्ररूपत्वात् भ्रमणक्षणात् सारूप्यवशादनवधार्यमाणभेद एकैकोऽसमर्थो नियतजात्यभिव्यञ्जने इति क्षणान्तरमपेक्षते। न च तस्य भ्रमणक्षणाद्विशेषो नास्ति, उपक्रम एवोत्क्षिपामीत्येवंप्रयत्नजनितत्वात्। [c]) एवं गोशब्दमुच्चारयामीत्ययं प्रयत्नो यद्यपि गानगगनशब्दजनकात्प्रयत्नादन्य एव, हेतुभेदाच्च गकारयोरपि भेद एव तथापि सादृश्यादसौ दुरवधार इति व्यञ्जकोऽपि सन् प्रथमो ध्वनिरस्फुटमभिव्यनक्तीत्यावर्तमानोऽपि न विशदतरसामान्यविशेषाभिव्यक्तौ हेतुः। यदा त्ववयवप्रबन्धः क्रमेणोपलब्धो भवति, अथ शब्दजातिविशेषोपाधियुक्ताः व्यवहारा अवतिष्ठन्ते। तदानीं साहचर्यात्परस्परावच्छेदवशेन विलक्षणतया प्रतिभासनात्। यथा च श्लोकः सकृत्पठ्यमानो नावधार्यते, अभ्यासेन तु स्फुटावभासः तथा चरमचेतसि चकास्ति रत्नतत्त्ववत्स्फोटतत्त्वम्। [d]) प्रथमाक्षरेण हि जातेराभासमात्रं जन्यते तदुत्तरोत्तरवर्णकलापेन तु स्फुटतरस्फुटतमपरिच्छेदाधानम्। संस्कारविशेषोत्पादनद्वारेणाभिव्यक्तिविशेषस्य रत्नतत्त्वादौ दृष्टेः। तस्माच्छब्दादर्थं प्रतिपद्यामहे इति व्यवहाराद्वर्णानामर्थावसायजनकत्वानुपपत्तेः प्रक्रियाभङ्गस्य प्रथमकाण्ड एव विहितत्वान्निरवयवं प्रत्यायकं शब्दतत्त्वं जातिव्यक्तिभेदेन भिन्नं स्फोटस्वभावमेवाङ्गीकार्यम्। गौरयमर्थ इति च वाचकाभेदेन वाच्यप्रतीतेः तदध्यासखचितवपुर्व्यवहार्योऽर्थः। तत्र च स्वरूपस्य वाच्यता प्रथमकाण्ड एव निर्णीता, इह तु संबन्धसमुद्देशेऽपि निर्णेष्यते ॥ ६ ॥

---

[b]) L °लक्षणानां (for क्षणानां). D य (for यः). B om. स. C उत्क्षेपक्षणक्षणः. C °मात्रवदेशाक्रमेण. C °मात्म (for °मात्र°). C भ्रमणात्; L भ्रमणलक्षणत्वात् (for भ्रमणक्षणात्). D सारूप्यवसा°. C om. °भेद (before एकैको°). B एको° (for एकैको°). B °व्यंजक इति. L °क्षणाणु शेको. D नासि. C °ध्वोक्षिपामि°. [c]) C °त्येवं (for °त्ययं). $AD_2HM$ om. गान°. BL ज्ञानं°. C °गानं. C हेतुभेदाद्यो. C गकारण योरपि. L सादृश्यामसौ. L °व्यंजकोपाधिसन्. CH om. नं. B °व्यक्ति°. C व्यक्तो (for °व्यक्तौ). C om. तु (after यदा). D त्ववयव° C ins. °क्रम° (before °वन्धः). C प्रक्रमेणोप°. C °क्षण (for °लब्धो). B अथ शब्दजाति°. M शब्दे (for शब्द). C °षाधियुक्ता BL °विशेषोपयुक्तया. CL °मसाह°. B °पद्यमानो. $ABDD_2$ चरमत्वेन (for चरम चेतसि) $ADD_2$ विचकास्ति. C om रत्नतत्वतत् स्फोटतत्वम्. D स्फोटतत्व. [d]) C °कालापेन. $ADD_2$ °स्फुटनप (for स्फुटतम). C परिच्छदा°; M °च्छेदाधानः. M ins सन्नुदारं (after परिच्छेदाधानं). C संस्मार°; M. स्वाकार°. C °त्पादेन. C °भित्यति° C om रत्न°; D °रमतत्वा°. B दृष्टे. D दृमे. C °द्वर्णानो°. L °वसायकत्वा° D °नुवपत्तेः. C °यानङ्गस्य. C °वय मकं. C भिन्न. BM om. एव (after स्वभाव). M om. च (after इति) M ins. ‘व्यधिकरणत्वात् कथमर्थजातिभेदेन व्यपदिशेदित्याशङ्क्य निदर्शनेनैतद्व्यत्यां व्यपदेशाय कल्पते’. C तदनुध्यासचर्चित°. M om. °ऽर्थः (after व्यवहार्यो°. M om. च (after तत्र). H स्वरूपवाच्यता.

(29) तत्रैतत् स्यात्—शब्दसमवायि सामान्यं व्यधिकरणत्वात्कथमर्थजातिमभेदेन व्यपदिशेदित्याशङ्क्य निदर्शनेनैतद्व्युत्पादयति—

**यथा रक्ते गुणे तत्त्वं कषाये व्यपदिश्यते।**
**संयोगिसन्निकर्षाच्च वस्त्रादिष्वपि गृह्यते ॥ ७ ॥**
**तथा शब्दार्थसंबन्धाच्छब्दे जातिरवस्थिता।**
**व्यपदेशेऽर्थजातीनां जातिकार्याय कल्पते ॥ ८ ॥**

(30) [a]) **रक्ते गुणे तत्त्वम्**। तस्य रक्तस्य गुणस्य भावो रक्तत्वं लौहित्यसामान्यं गुणव्यक्तिसमवेतमुच्यते। तत्समवेतसमवायात् **कषाये** रक्तगुणाधारे द्रव्ये **व्यपदिश्यते** व्यपदेशाय कल्पते। तद्विशेषणभूतं हि तत्कषायद्रव्यमभिधीयते लोहिता लाक्षेति। तेन संयोगिनो वस्त्रादयः तयोः संयोगिनोः कषायवस्त्रयोः संनिकर्षः संभेदः, तस्मान्निमित्तात्तत्रापि तल्लौहित्यं **गृह्यते**। संयुक्तसमवेतसमवायाद्वस्त्रादिष्वपि लौहित्यनिमित्तो व्यपदेशः, लोहितं वस्त्रमित्यर्थः। [b]) **तथा शब्दार्थसंबन्धात्** इति। लोहितगुणकषायद्रव्यसंबन्धस्थानीयात्समानाधिकरणेनयावस्थिनात् स्वाभाविकात्तथा केवलं व्युत्पत्तिकाले निर्ज्ञातात्तदन्यथानुपपत्त्यैवाध्यारोपस्य कल्पनात्संबन्धादेव शब्दजात्या व्यपदेशः। अर्थोऽत्रार्थजातिः, तस्या एव वाच्यत्वप्रक्रमात्। **व्यपदेशे** कल्पते स्वरूपाभेदेन, **जातिकार्याय कल्पते**—जात्यादिशब्दे जातिषु वाचकत्वेन प्रवर्तमाना स्थिता जातिर्न केवलं व्यपदेशाय कल्पते यावज्जातिकार्याय च। [c]) अथवा व्यपदेशे सति जातिकार्याय

---

(29) C समवायी. B °जातिरथे°. L जातीरथे°. B त्याशङ्क्यम्. C निदर्शनेतद्.

का. ७. ८. C रेके (for रक्ते). B °कर्पाय. C सन्निकत्वाच्च. C शब्दोऽर्थ°. C °कायथि H कल्प्यते.

(30) [a]) M om रक्ते गुणे...लौहित्यसामान्य. C तत्त्वान्तरस्य. B गुणस्वभावो. C लोहिते (for लौहित्यं). C °सामान्य° (for °समवेत°). B °कपायोक्त° (for कषायेरक्त°). M. °रूपाधारे (for गुणाधारे). M om. व्यपदेशाय कल्पते. M om. हि. C लोहिताक्षेति. B केन; L ते पुनः (for तेन). C om. तेन. C निसंयोगिनो; D संयोगिनो. C °तव्रयः. C सन्निकर्ष. B निमित्तता अत्रापि. C निमित्तता तत्रापि. L निमित्तादत्रापि. B om तद् (before लौहित्यं). C °निर्मितो. [b]) B ins. °गुण° (after °द्रव्य°). C °करणस्थानियावास्थिता च. ACDD$_2$H om. तथा (before केवलं). C निर्ज्ञाते. C शंवन्धा (for संवन्धां). B °व्यपदेशे. ADD$_2$H अथात्रार्थ°; B अत्रोक्तार्थ. D अथात्रा° (for अर्थोऽत्रार्थ°). D जाति (for जातिः) C एवा°. ADD$_2$H वाच्यत्वं. AD$_2$H प्रकव्य व्यप°. C प्रकम्येद्व्यप°. L व्यपदेश° H कल्पनेः. L कल्पके. C जातिः कार्याय. D जातिकार्या. L जातिकार्यात्. B शब्देन. C भातिः (for जातिः) C कार्या एच. [c]) C जातिः कार्याय. :ADD$_2$HM °त्यर्थः जातीना; C °त्यर्थजातिनां. C तत्कार्य. C °लक्षण°. C °समवायिनो; D °समवायिना. C °नाधारोपिता°. D संपदयन्ती. B तदात्मानं. C शब्द (for शब्दे). L येऽनुत्पाद्याभावात् (for यौगपद्याभावात्). C शब्दजाते. CM केवलस्फोटस्य. B °समवायमिति (for °द्व्यमिति). C व्यक्तिस्फोट. ACDD$_2$H नित्यशब्दस्य. C °हेतुजाति°.

हीक इत्यत्र न गोत्वमात्रं प्रतीयते, अपि त्वध्यारोपितगोरूपो वाहीकः, एवमिहापि, न तु स्फटिकमणाविवार्थे शब्दजातेः समावेशो विवक्षितः, तस्यैव वाहीकवत् प्रत्याय्यत्वात्। [d]) स्वाभाविकश्चायमर्थप्रत्यायने शब्दानामभेदसंबन्धोऽभ्युपाय इति प्रतिपाद्योऽपि तथैव प्रतिपद्यते। न हि पुरुषाधीनमेतत्। अनादौ संसारेऽनेनैव प्रकारेण संबन्धव्युत्पत्तेः कोऽत्र नियतोऽध्यारोपयिता कल्प्यताम्। अव्युत्पन्नसंकेतस्यापि चाभिन्नप्रत्ययोत्पत्तेरर्थजातिरप्यस्तीति न शब्दजातिरेवाध्यारोपितास्त्विति वाच्यम्। शाब्दी चेयमेवंविधा प्रतीतिरिति चाक्षुषेण रक्तादिप्रत्ययेन निदर्शनभूतेन व्युत्पादिता। वस्तुसन्निवेशित्वाभावेऽपि च शब्दजातेरयमनादिरध्यारोपो रूढः। [e]) सदैव व्यवहारे शब्दार्थयोरभेदावसायाद्भेदस्यापि च गौर्वाहीक इतिवत् प्रतिभानान्मिथ्याज्ञानमिदं न भवति। प्राक् च संबन्धसंवेदनसमयादर्थजातयो भेदेनावभान्त्येव। अव्युत्पन्नसंकेनस्य बालकस्य पुरोऽवस्थितेषु सास्नादिमत्सु पिण्डेषु भिन्नः प्रत्यय उत्पद्यते तदा वाचकसन्निधानाभावादभिन्नप्रत्ययहेतुरर्थजातिरवधार्यते। अत एव कथं भेदेनानिर्धारितायामर्थजातौ शब्दजातिः समारोप्यते इत्यादि न चोदनीयम्॥ ७, ८॥

(32) जातिकार्याय कल्पत इत्युक्तमेवार्थमभिव्यनक्ति—

**जातिशब्दैकशेषे सा जातीनां जातिरिष्यते।**
**शब्दजातय इत्यत्र तज्जातिश्शब्दजातिषु॥ ९॥**

(33) [a]) "आकृत्यभिधानाद्वैकविभक्तौ वाजप्यायनः" (Vā. on P. 1.2.64)

---

(for °मिहापि). B सवेशो C तस्यै (for तस्यैव). [d]) CD स्वाभाविका. C स्वमर्थ° (for श्चायमर्थ°). BL °ह्युपाय (for °भ्युपाय). C प्रतिपाद्येऽपि. D प्रतिपाद्यते. C पुरुषार्थान°. D पुरुषाधानं°; $D_2$ पुरुषाधीन्य°. C आनादौ. C °व्यत्पत्ते. $D_2$ कोज (कोऽत्र). ACD$D_2$ नियमतो°. B नियता°. C कल्पते $D_2$ कल्प्यता...अध्यारोपयिता. C °त्पते° (for त्पत्ते°). L °तास्तीति. C शार्व्दी. C चक्षुषेण C °प्रत्ययेम. H °प्रत्ययार्थेन. L दर्शनभूतेन. M निदर्शनेनैव. B °रर्थानादिरयमध्यारोपो; C °रयमनादिध्यारोपोः LM °रनादिरयमध्यारोपो. D रूढः L ऽत्रयः (for रूढः) [e]) ACD$D_2$Hप्रतिज्ञाना°; B प्रतिभाना. $D_2$ नं तयिदं (for °नमिदं). ACD$D_2$H om. च (after प्राक्). B °संभेदन°. L °समवाया° (for °समया). C °भान्त्योत्र; D °भावत्येव. $D_2$ अव्युत्पत्यं. CLM ins. हि (after °संकेतस्य). B भिन्नज्ञंप्रत्यय°; M भिन्नपत्यय°; $D_2$ निन्नः प्र°. The context requires अभिन्नः but the Mss do not have it. B वाचासनि°. $D_2$ rep. °रर्थजाति°. ACD$D_2$H भेदेन तदनिर्धा°. C गब्दजाति. LM °रोप्येतेत्पा°. C इति (for इत्यादि).

(32) C जातिः

का. ९. C जातिःश°. C जातिनां. D जातोनां. C om. त (in तज्जातिः) DH न जातिः

(33) [a]) C अकृत्यभि°. M °त्यभिमता°. L वाजा°. B इत्युक्तम्; LM इत्युक्तः. $D_2$ सद्दि for सद्द°). B विवक्षया वैकं; $D_2$ °विपक्षाचैकं°; L .°विवक्षं वैक°; M °विवक्षा वैक°.

इति जातिपक्षे प्रत्याख्यानादेकशेपस्य तत्फलमेकशब्दप्रयोगोऽत्रैकशेप उक्तः। सहविवक्षा चैकशेपेण लक्ष्यते। [b]) **जातिशब्देकशेपे** प्रसक्त इति वा योजनीयम्। **सा** इति शब्दजातिः। अर्थजातीनाममेदेन प्रत्यवस्यमाना जातिशब्दगता जातिरेकशब्दत्वं संपादयति जातिकार्यम्। तद्यथा गावो वृक्षा इत्यादिरभिन्नसामान्यनिबन्धनस्तदेकार्थसमवायात् समाश्रितविशिष्टसङ्ख्य एकशब्दप्रयोगः। [c]) तथा जातय इमा इत्ययमपि जात्याश्रयापरजात्यभावाद्वाचकजात्यध्यासाश्रय उपपद्यते। शब्दगतं च सामान्यं जातिकार्यमुपचरतीत्युच्यते न त्वर्थजातिष्वेवेति नियमः केनचित्क्रियते इति। [d]) यदा शब्दजातयोऽपि प्रत्याख्याः तदा आस्वप्यभिधानगतं जातिकार्याय कल्पत एवेत्याह **शब्दजातय इत्यत्र** इति। **तज्जातिः** शब्दजातिः शब्दगतं सामान्यम्। शब्दजातय इमा इत्यत्रैकपदप्रयोगे तस्योच्चरितस्य शब्दजातिशब्दस्य या जातिः सा **शब्दजातिपु** गोशब्दत्वादिकासु व्यक्तिस्थानीयासु प्रतिपाद्यास्वभिन्नशब्दप्रयोगे निबन्धनमित्यर्थः॥ ९॥

(34) यद्येवं शब्दजातिः शब्दगतानामपि जातीनामन्या वाचकजातिस्तासामप्यन्येत्यनवस्थाप्रसङ्ग इत्याशङ्क्याह—

**या शब्दजातिः शब्देपु शब्देभ्यो भिन्नलक्षणा।**
**जातिस्सा शब्दजातित्वमप्यतिक्रम्य वर्तते॥ १०॥**

---

[b]) D °शब्दैकशेपे. C प्रसक्तमिति. C चा° (for वा°). D योजनीय. M एवं सति (for सेति). $CDD_2M$ °मभेदेना°. C नध्यप्रत्यप्यास्यमाना; $D_2$ तप्रत्यवध्यास्यमाना. L प्रत्याध्यमाना; M °ध्यस्यवे प्रत्याग्यमाना. C जातिशब्दवत्त्वं. C ins. °शब्द° (before °कार्यम्) $ACDD_2H$ गावौ. B वृक्षं. $D_2$ °रभिन्नस्य. M °संख्याक्त (for °संख्य). C om. °शब्द° (before प्रयोग) [c]) M अथा (तथा). $D_2$ om. इमाः. C जात्याश्रय°. H ins. वाचकजात्यभावात् (after जात्यभावात्). C °जात्याध्यासा°; D तात्यध्यासा°. L ins. इति (before उपपद्यते). $ACDD_2H$ ins. °वाचक° (after जाति). B °मुपरचयती°. B कुत इति (for नियमः). B om. केनचित् क्रियते. C येन (for केन). L कृत (for क्रियते). [d]) C तथा (for तदा). C आप्वप्य° LM तास्वप्य°. C °भिधाननं गतं. $D_2$ एवेत्याकि (for एवेत्याह). CLM इत्यत्रेत्यादि. $AC.DD_2H$ om. शब्दजातिः. $D_2$ °जातिपदमा (for °जातय इमा). M om. इमा. B दृष्टशब्दप्रयोगे; LM एकशब्द°. C °च्चरितशब्द°. C °जातिः शब्दस्य. M om. याजातिः...निबन्धनमित्यर्थः. $D_2$ °त्वादिकानु. $D_2$ °स्थानायासु. B °पाद्या इति. (for °पाद्यास्वभिन्न°). BL प्रयोग°. BL बन्धन°. D इत्यर्थः (for मित्यर्थः).

(34) $D_2$ यद्येयं. BD °जाति (for °जातिः). B om. शब्द° (before °गतानामपि). $D_2$ जातीयामन्या. $D_2$ वाचकः जा°. L वाचका°. C °प्यन्नेत्यं. M om. यद्येवं...इत्याशंक्याह.

का. १०. $DD_2$ °जाति (for °जातिः). C जातिः लक्षण. C °मथा°.

( 35 ) प्रयोक्तृभेदाद्बहुषु शब्दजातिशब्देषु, अभिन्नप्रत्ययनिबन्धना **या** जातिस्तेभ्य एव **शब्देभ्यः** स्वाश्रयभूतेभ्यो भिन्नस्वभावा **सा** गोशब्दत्वादिशब्दजातिवर्गान्तःपातिनी न तु व्यपदेशान्तरार्हा । शब्दजातिशब्दस्यापि गोशब्दत्वादिवत् शब्दजातय इत्यनेनैवैकशब्दप्रयोगेण सापि प्रत्याय्यत इति न प्रयोगानवस्थापत्तिरित्यभिप्रायः ॥ १० ॥

( 36 ) तदेवं स्वनिकायसिद्धाध्यासदर्शनाश्रयेण सार्वत्रिकी जातिपदार्थव्यवस्था दर्शिता । स्वरूपभूता हि जातिः सर्वेषां शब्दानामन्तरङ्गत्वादसाधारणत्वादहेयत्वाच्च प्रथमं प्रतिपाद्या । इदानीमध्यासानाश्रयेणापि प्रौढवादितया जातिपदार्थव्याप्तिमुपपादयितुमाह—

**अर्थजात्यभिधानेऽपि सर्वे जात्यभिधायिनः ।**
**व्यापारलक्षणा यस्मात्पदार्थाः समवस्थिताः ॥ ११ ॥**

( 37 ) [a] ) अन्यथा चात्र संबन्धः । तथा हि— अस्तु शब्दजातेरर्थजातीनां जातिकार्यम्, संबन्धव्युत्पत्तिस्तु न घटते । यत्र हि संकेतस्तत्र शब्दजातिरध्यस्यते । स एव त्वनेकत्वादर्थजातीनां सामान्यान्तरमन्तरेण न संभवतीत्याह—**अर्थजात्यभिधानेऽपि** इत्यादि । यदा विशुद्धा एवार्थजातयः शब्दैरभिधीयन्त इत्याश्रीयते तदापि **सर्वे जात्यभिधायिनः** जात्यादिशब्दा अपि तदा जातिवाचिन एव । [b] ) ननु निस्सामान्यानि सामान्यानीति सिद्धान्तात्कथं जात्यादिशब्दा अपि जात्याधारा जातिमभिदध्युरित्याह— '**व्यापारलक्षणाः**' इति। **व्यापारः** कार्यं प्रयोजनं तदेव लक्ष्यतेऽनेनेति **लक्षणं**

---

( 35 ) M om. प्रयोक्तृभेदात्...गोशब्दत्वादिवत्. B प्रयोज्यं ( for °प्रयोक्तृ ). C °जातिः ( for °जाति° ). B °भेदेषु (for शब्देषु ). A अभिन्ना°; $D_2$ अभिन्नं°. BL °निबन्धन. BL या. BL om. एव शब्देभ्यः. B °जाति ( for °जाति° ) $D_2$ om. °शब्दत्वादिवत्. L शब्दत्वादिजातयः. $ABCD_2$ °प्रयोगे ( for °प्रयोगेण ). M om. सापि. C °स्थापति°; D. °स्थापत्य.

( 36 ) $CD_2$ तदेव. $D_2$ °व्यांस दर्शना°. L °श्रयणे. M ins. यद्येवं...इत्याशंक्याह। प्रयोक्तृ...गोशब्दत्वादिवत् ( after दर्शिता ). C स्वरूपश्रुता. $D_2$ °मंतव्यां त्वा° ( for मन्तरङ्गत्वा° ). L °दहेतुत्वाच्च; M om. अहेयत्वात्. C प्रतिपाद्य. C °श्रयणापि. BL प्रत्यक्षवादितया. BL °व्यक्षिप्त ( for °व्याप्त° ).

का. ११. A. शब्द° ( for सर्वे). $D_2$. कात्य° ( for जात्य° ).

( 37 ) [a] ) BL वात्र. C जातिशब्दे जाते°. ( for शब्दजाते° ). C °रर्थजातियानां; $D_2$. °रर्थजातीयानां. $D_2$ om. जाति° ( in जातिकार्यं ). B संबन्धि°. C ins. °स्तुन° ( before °व्युत्पत्तिस्तु ) ADHM ins. स ( before यत्र ). B om. संकेतस्तत्र. D °रध्यस्पतः. C °जातीना; H om. °जातीनां...शुद्धा एवार्थ°. C °न्यान्तरेणम°; D सामान्यं तरम°. $D_2$ om. न ( before संभवति ). BL om. अर्थजात्यभिधानेऽपीत्यादि. AD यदापि शुद्धा; B om. यदा. C एवार्थे. C °रधिधीयन्ते; D °रधिधीयते. C इत्याश्रियते. C तदा ( for तदापि ). C ए ( for एक ). [b] ) C नुनु. C om. सामान्यानि. D °दध्य°. $D_2$ °लक्षण इति. BD कार्यप्रयोजनं. L ins. इति (after प्रयोजनं). $D_2$ om. ते. L तथा हि ( for तथा ). L नियत° (for नियमित°). C rep. कार्यप्रयोजनं तदेव लभ्यते तेन (after स्वरूपाः).

हेतुर्येषां पदप्रत्याख्यानासमर्थानां ते तथा नियमिनरवरूपाः । [c]) अयमाशयः । वैशेषिकादीनां भवन्तु निःसामान्यानि सामान्यानि । तानि हि व्यक्तिष्वन्वयप्रत्ययावसेयानि परोपाधिरूपाणि स्वतन्त्रव्यक्तिवदिदन्तावभासित्वाभावात् सामान्यान्तरेण नोपाधीयन्ते । [d]) वैयाकरणानां शब्दार्थोऽर्थ इत्यभ्युपेयतामन्वयिरूपावच्छेदेन शाब्दस्य प्रत्ययस्योत्पत्तेर्जातिष्वपि जातिरविरुद्धाभ्युपगम्या। एतदेव हि व्यक्तिष्वपि जात्यभ्युपगमे निमितमित्यत्रापि तथाभ्युपगमे कः प्रद्वेषः । [e]) प्रत्यक्षा अपि च पदार्थाः स्वकार्यं विज्ञानादिकं कुर्वन्तः सन्तीति व्यवह्रियन्ते, किं पुनः शब्दवाच्याः पदार्था इति सामान्यवचनाद् द्रव्यादयोऽपि शब्दवाच्यत्वेनैव लक्ष्यन्ते । शब्दप्रमाणकानां हि यच्छब्द आह तत्परमार्थरूपम् । तथा चान्वयिरूपेण गुणोऽप्यभिधीयमानो जातिरेव । यथोपमानसमासे श्यामादिः । तथा च

‘ उपमानानि सामान्यवचनैः ’ ( P. 2.1.55 )

इत्युच्यते ।

( 38 ) [a]) एवं क्रियाप्यभेदेनाभिधीयमाना जातिः । तथेदं तदिति स्वातन्त्र्येण विशेष्यतयाभिधीयमाना जातिगुणक्रिया अपि द्रव्यमिति यथावसरमग्रे निर्णेष्यत एव ।

---

[c]) $DD_2$ समसा°. D वैशेषिकादीर्थ. $CD_2$ om. सामान्यानि. D व्यक्तिजानि सामान्यानि ( for सामान्यानि तानि ). C ह ( for हि ). $D_2$ ष्वनूद्य ( for व्यक्तिष्वन्वय° ). B वधेयानि ( for °वसे यानि ). C °रूपेण ( for °रूपाणि ). D स्वनंत्त°. $ACDD_2$ °वादिदन्ता°. ABL °भासितत्त्वा°. $D_2$ ववासिद्धाभावात्. C om. न ( after °न्यान्तरेण ). BL नोपधीयन्ते; D °धीयन्तो. [d]) CL ins. तु ( after वैय्याकरणाना ). C शाब्दोथा°. B त्यभ्युपगता°; C °त्यभ्युपेयिना°; D त्यभ्यपेयना°; LM °त्यभ्युपयतां. BC °मन्वय°. $D_2$ °मन्वयि°. C °स्योत्पाते°; D °स्योत्पत्तं ( °स्योत्पत्त° ). $BCD_2LM$ °भ्युपगमा; D °भ्युपगम्य. D तदेव. C निमित° ( for निमित्त° ) B °मावमत्रापि. B प्रत्येप:; D प्रद्वेपष. [e]) The context requires अप्रत्यक्षाः, but the MSS do not have it. B उत्प्रेक्षा; L पृक्षा ( for प्रत्यक्षा ). C स्वजार्थे ( for स्वकार्यं ). L विज्ञादिकं. C कुर्वर्शातिः ( for कुर्वन्तः ) C व्यवहियते. M °वचना ( for वचनाद् ). M om. अपि ( after द्रव्यादयो ). C लक्ष्यते. C अह ( for आह ). BL °प्यधीय° $D_2$ मानानां ( for °मानो ). $D_2$ om. एव यथोपमानं. अभिधीयमाना जातिः H ins.स ( before श्यामादिः ) C श्यामादि.

( 38 ) [a]) C °प्यभेदेनाभि°. B ins. वा ( after अभेदेन ). C मानानां ( for °माना ). C यथेदं; D तर्थदं. C स्वातन्त्र्येण; $D_2$ स्वातन्त्र्यवि°. C °मग्रे नि°. D एवा. BL तच्च. $D_2$ यतस्त ( for एतच्च ). B om. लौकिक...व्यवस्था. C लोकव्य°. D लाहिका° ( for लौकिक° ). D °वावहारा° ( for °व्यवहारा° ). $D_2$ °नुगुणेन. [b]) D °प्रप्रसिद्धा. D °विरुद्धो. D तर्थव. D व्याकरणो°. D °प्याधरस°. M ins. इति ( after °सप्तमी ). C शाखान्तरे. C om. तु. C °यविनि ( यर्वाति ). C गौ. D शारद्वयां ( for शारवाया ) C एव च. $D_2$ °मिधायस्ये°. D लक्ष्यते ( for लक्ष्यन्ते ). [c]) B om. वस्तून न सन्ति तथा°. $D_2$ om. वहिः C ins. भूत ( before वस्तूनि ). D तथाः ( for तथा ). L आप्यायन्ते ( for प्रत्याख्यन्ते ). M अभिधानव्या°. BL प्रत्याख्यमाना व्या°. C °द्वयाप्राप्ति°. $D_2$ पदार्थोऽस्ति. C °प्योथोऽर्थः $D_2$ ( अ )र्थज.

एतच्च लौकिकव्यवहारानुगुण्येन शास्त्रेऽस्मिन् व्युत्पाद्यते। [b]) शास्त्रान्तरप्रसिद्धा हि व्यवस्था लोकविरुद्धा। लोके हि 'गवि शृङ्गम्', 'वृक्षे शाखा 'इति व्यवहारः। तथैव च व्याकरणेऽप्याधारसप्तमी। शास्त्रान्तरे त्ववयवेष्ववयवीति 'शृङ्गे गौः', 'शाखाया वृक्षः' इति स्यात्। इत्थं च शब्दाभिधेयस्येहार्थत्वात्सर्वे जात्यभिधायिनः, यस्माच्छब्दव्यापारेण पदार्था लक्ष्यन्ते। [c]) यद्यपि वहिर्वस्तूनि न सन्ति तथापि शब्दैस्तथा प्रत्याय्यन्ते, अतोऽभिधाव्यापारवशादन्वयिरूपेण प्रत्यायनाद्याप्तिर्जातौ पदार्थे सिद्धेत्येपोऽप्यर्थः॥ ११॥

(39) अभिधालक्षणव्यापारत्वमेव व्यक्तयति—

**जातौ पदार्थे जातिर्वा विशेषो वापि जातिवत्।**
**शब्दैरपेक्ष्यते यस्मादतस्ते जातिवाचिनः॥ १२॥**

(40) [a]) **जातौ पदार्थे** इति पक्षावच्छेदं करोति। अत्र हि पक्षे सर्व एव शब्दो जातिवाचीत्यभ्युपगन्तव्यम्। भवतु मा वा भूज्जातिषु जातिः। शब्दैस्तु **जाति** व्यतिरिक्तया जात्यैकस्वभावैव **अपेक्ष्यते** प्रत्याय्यत्वेनाङ्गीक्रियते। [b]) स्वालक्षण्येन हि वस्तूनां भेदः शब्दैः स्प्रष्टुं न शक्यते, अन्वयिरूपावेशेन संबन्धव्युत्पत्तौ शब्दस्य वाचकत्वात्। तथा च जातीनामितरेतरभेदो वस्तुसन्नाभिधीयते, अपि त्वभेदकल्पनेन ता अभिधीयन्ते। अभेदश्च सामान्यमिति सिद्धमेकशब्दत्वाज्जातय इति।

(41) [a]) तथा योऽपि **विशेषः** संज्ञाशब्दानां वाच्यः प्रतीतिनियतः सोऽपि **जातिवत्** प्रसिद्धजात्या तुल्यम्, **अपेक्ष्यते** शब्दैः। तत्रापि बाल्यकौमाराद्यवस्थाभेदः

---

(39) ABDDHLM °व्यापारलक्षणत्व°. B व्यक्तौ यदि (for व्यक्तयति). B ins. जाते न पदार्थे जातिर्वाविशेषो वा विजातिवत् शब्दैरपेक्ष्यते यस्मादतस्ते जातिवाचिनः (after व्यक्तयति)

का. १२ B जातेन (for जातौ) D °दस्ते (for °दतस्ते)

(40) [a]) C स (for सर्व). $D_2$ ins. हि (after सर्व). L हि (for शब्दो). C °वाचि° (for °वाची°). D भवत (for भवतु). C वामा (for मावा). $BD_2L$ om. वा. M. om. भावा. BL भूज्जातिः BL om. °षु जातिः $CD_2$. जाति (for जातिः). C शब्देस्तु; D शब्दैस्त. BC जातिव्यति. B °स्वभावेवा. C प्रत्यायत्वेना°. $D_2$ क्रियते (for अङ्गीक्रियते) D °क्रियतः (for °क्रियते). [b]) B स्वालक्ष्येण. C om. शब्दैः (after भेद.) $D_2$ स्पष्ट स्प्रष्टुम्). D शक्यतः C °सत्वेऽपि; $D_2$ मत्वेऽपि (for अन्वयि). $D_2$ संबन्धः (for संबन्ध°). L अवाचकत्वात्. C जातिना° (for जातीना). C वस्तुसत्वा; D. वस्तुसन्ना°. B. om. अपि तु. $ABDD_2HLM$ °कल्पेन (for कल्पनेन) $D_2$ अभेदं. $BD_2$. त्वसामान्यं (for च सामान्य).$ABCDD_2HM$ °शब्दत्वं जा°.

(41) [a]) $D_2$ तवा (for तथा); M om. तथा. C om. अपि. BL वाच्य° ABCD. HM. प्रति° (for प्रतीति°). $ACD_2H$ °मेव वक्ष्यते; D °मेव च वश्यते $D_2$. (for °मपेक्ष्यते). M तवापि. CM ins. हि (after तत्रापि). $D_2$ तुल्य° (for बाल्य°) B om. शब्देन (before न). D स्पश्यते. H अनुगत°. AD असिद्धं; C अप्रसिद्ध°;$D_2$ नसिद्धं.; H प्रसिद्धं; M °अत्र सिद्ध° (for तद्धि). C °निमितं. C °वस्था° (for °वश्या°). D °भ्यपंगन्तव्यम्.

शब्देन न स्पृश्यते, अपि त्ववस्थातृरूपमेवानुगतम्, तद्धि प्रत्यभिज्ञाप्रत्ययनिमित्तं तत्रावश्याभ्युपगन्तव्यम्। [b]) अतः यस्माज्जातिवत्सर्वमपेक्ष्यते शब्दैस्तस्माज्जातिं विशेषं वा प्रतिपादयन्तः सर्वे जात्यभिधायिनः इति जात्यभिधानव्याप्तिं निगमयति। इत्थं च संज्ञाशब्दानामपि जातिवादिमते जातिशब्दत्वमित्येकैव शब्दानां प्रवृत्तिः ॥ १२ ॥

( 42 ) एवं दर्शनान्तरेऽपि शब्दव्यापाराश्रयण एव व्याप्तिसिद्धिरित्याह—

**द्रव्यधर्मा पदार्थे तु द्रव्ये सर्वोऽर्थ उच्यते।**
**द्रव्यधर्माश्रयाद् द्रव्यमतः सर्वोऽर्थ इष्यते ॥ १३ ॥**

( 43 ) [a]) न केवलं मयैव जातिपदार्थवादिनैतदङ्गीकृतं सर्वोऽर्थो जातिरिति, यावद् द्रव्ये अपि **पदार्थे**, द्रव्यपदार्थपक्षेऽपि **द्रव्यधर्मा सर्वोऽर्थ उच्यते**, कुतः? द्रव्यधर्माणामाश्रयणात्। **द्रव्यमतः सर्वोऽर्थ इष्यते**। व्याप्तिरतः सिद्धा भवतीत्यर्थः। [b]) द्रव्यवादिनाप्येतदभ्युपेतव्यं व्याप्तिसिद्धये। शब्देन योऽर्थ उच्यते सर्वोऽसौ द्रव्यधर्मयुक्त एवेत्यभिप्रायः। यथा तत्र द्रव्यवादिनः केचिदेव शब्दा मुख्यद्रव्याभिधायिनस्तदन्ये तूपचरितद्रव्याभिधायिनः तथा ममापि जातिवादिनो मुख्यां जातिमभिदधति केचित्, उपचरितामन्य इति मतद्वयेऽपि साम्यम्। [c]) तत्र द्रव्यधर्मा इदं तदिति

---

[b]) C सर्वपक्षते. $D_2$ संवन्धं ( after अपेक्ष्यते ). ABCDHMजातिवि° ( for जातिं वि° ). $D_2$. विशेष ( for °विशेषं ) $ACDD_2H$ om. वा ( after विशेषं ). M सर्व° ( for सर्वे ). B om. इति जात्यभिधान°. CD °व्यासि ( for °व्याप्तिं ). A एवं च; $DD_2H$ द्रव्यं च ( for इत्थं च ). $CD_2$ °मित्यवे ( for °मित्येकैव ). C प्रवृत्ति ( for प्रवृत्तिः ).

(42) C °नान्तरंपि ( for °नान्तरेऽपि ). $ACDD_2HLM$ °राश्रयेणैव.M °प्रसिद्धि° ( for °सिद्धि° )

का. १३. C. °धर्म°. D. न ( for तु ). C. द्रव्यो. $ABCDD_2$ सर्वार्थ. M द्व्याश्रया ( for °श्रयाद् ). $ABDD_2$ सर्वार्थं. C यिष्यते ) ( for इष्यते ).

(43) [a]) C जमयैव. C °वादितो°; $D_2$ वारिः नो°. D °दङ्गाङ्क°. ABCD $D_2M$ सर्वार्थो. C. यावता. D. द्रव्यं ध.° $ADD_2$ सर्वार्थ ( before उच्यते ). AC $DD_2H$ सर्वार्थ ( before इष्यते ). D मवती° [b]) BL वाचिना°. $D_2$ °पैतव्य व्या°.$D_2$ °सिद्धेन. D °धर्मप्रक°. $BCD_2LM$ च ( for तत्र ). L °वाचिनः ( for °वादिनः ) C. केचिद्देव. C. शब्दः ( for शब्दाः ) $D_2$. मुख्या° ( for मुख्य° ). $ABCDD_2H$ °द्रव्यवाचिनः. D तदन्यत्; $D_2$ तदन्य°. CLM द्रव्याकाराभिधायिनः. $D_2$ वादिनीं; L वाचिनो. C मुख्या ( for मुख्यां ). $D_2$ °दधीते ( for °दधति ). D कंदुप°. C मतद्वयं; $D_2$ °मभिद्वये. $D_2$ om. अपि. [c]) M ins. न ( after तत्र ). $D_2$ om. द्रव्य ( after तत्र ). $D_2$ °योग्यत्वः A °निष्पन्ना; $D_2$ निष्पं नाना. ADM लिङ्गं. C योगश्चैव°. C °गुणरवध्या°. $D_2$ गुणेभ्यध्या.° C °तेऽपि. C °धर्मा. B द्रव्यस्यैव. C °धर्मणः. $D_2$ °पुसकानि. $ACDD_2$ तथैकत्वादिभिः D प्रत्याप्युमाना. C ins. न ( after गुणादयो ). $D_2$ तद्द्रव्य° ( for द्रव्य° ). C °धर्माणाः. $D_2$ °भासत. $D_2$ सर्वार्थो. D द्रव्ये ( for द्रव्य° ) D °धायते; $D_2$ °धीयत ( for धीयते ).

प्रत्यवमर्शयोग्यत्वम्, परिनिष्पन्नता, स्वातन्त्र्यम्, लिङ्गसङ्ख्यायोगश्चेत्येवमादयः। तेषां शुक्लादिगुणेष्वप्यध्यारोपात्तेऽपि द्रव्यस्यैव धर्मो येषामिति द्रव्यधर्माणः। तथा हि— शुक्लो नीलं स्त्रीपुन्नपुंसकानि सत्त्वगुणाः। तथैकत्वादयश्चेत्यादिभिः शब्दैः प्रत्याय्यमाना गुणादयो द्रव्यधर्माणः स्वातन्त्र्यादिरूपेणावभासन्त इति सर्वोऽर्थो द्रव्यरूपेणाभिधीयते ॥ १३ ॥

(44) एवं शब्दव्यापाराश्रयेण व्याप्तिरुपपादिता। अधुना वैशेषिकदृष्ट्याप्यर्थगतसमानधर्माश्रयेण जातिपदार्थव्याप्तिमाह—

**अनुप्रवृत्तिधर्मो वा जातिस्स्यात्सर्वजातिषु।**
**व्यावृत्तिधर्मसामान्यं विशेषे जातिरिष्यते ॥ १४ ॥**

(45) [a]) जातीनामेतज्जातित्वं येयं स्वाश्रयानुवृत्तिः सर्वजातीना साधारणो धर्मः। सा च ताभ्योऽनन्यापि सादृश्यादभेदेन परामृष्टा सती सर्वासां जातिः। सर्वैव हि जातिः स्वव्यक्तीरनुवर्तते। उपलक्षणं चैष धर्मः। तेन स्वानुरूपप्रत्ययजनकत्वम्, यद्बलाद् द्रव्यं तद्रूपमाभाति। स्वानुरूपाभिधानहेतुत्वम्, यद्वशाद् द्रव्यं तद्रूपाभिधानवाच्यं भवति। [b]) प्रत्याश्रयं च सर्वात्मना परिसमाप्तिः साधारणो जातिधर्मः। यदि भागशो जातिर्वर्तेत तदा भागश एव गोत्वादिप्रत्ययः स्यात्। संपूर्णश्च विषाणाद्यवयवदर्शनेऽपि झटिति गोत्वाकारः प्रत्ययः प्रसूयते। प्रत्याश्रयपरिसमाप्ता अपि च गुणाः प्रतिद्रव्यं भिन्नाः, जातिस्त्वेकैवेत्येवमादयोऽसाधारणा धर्मा वाच्याः। [c]) यथा च गोत्वादिजातिस्सर्वा व्यक्तीर्व्याप्नोति तथैते धर्माः सर्वजातीर्व्याप्नुवन्तीति जात्या तुल्यरूपत्वाज्जातिकार्याय

---

(44) $D_2$ om. व्याप्तिरुपपादिता...श्रयेण. C वैशेषीकदृष्ट्वा°. D °पदार्थकाव्याप्त°.

का. १४. D. पदृत्ति ( for प्रवृत्ति ); L. °प्रवृत्त. C. °धर्मावा. C. $D_2$ जाति ( for जातिः $D_2$. °धर्माऽ; M. °धर्मः $D_2$. °ऽसामान्यविशेषो.

(45) [a]) $D_2$ °मतज्जा°. D °वृतिः. C धर्माः. C °श्याभेदेन. D °श्यांदभेदेन. D परमषा; $D_2$ °मृशती. $D_2$ om. सती. B स्वव्यक्ति°; C सव्यक्ति°; D स्वव्यक्ता°. C उपलक्षण. C चैव; D चैव्य. C धर्म. D नैन ( for तेन ). $D_2$ °माज्ञानि ( for °माभाति ). B °भिधानं. $D_2$ °भिधा°. B om. वाच्यं; C वाच्य. D भवति. [b]) H ग्रत्ययाश्रयं. C व ( for च ) C °समाप्ति. C ins. हि ( after यदि ). C $D_2$ °तिवर्तेत; D वर्त्तैत. ACD $D_2$H भागएव. $D_2$ rep. संपूर्ण°, D समर्ण°. D °द्युवयव°. BL om. झटिति. A D गोत्वाकाराप्रा°. $D_2$ प्रत्ययप्र°. ACD प्राप्ताश्रय°. C °द्रव्य°. H भिन्नजाति°. D °चेत्येव°. CLM ins. अपि. ( after °मादयो ) CLM साधारणं°. ADH धर्मवाच्याः. [c]) C सर्वं°. C °व्याक्ति; D व्यक्ता ( for व्यक्तीः ) D प्नोति. BL ins. एव ( after तथा ). B सर्वा; $D_2$ ससर्व ( for सर्व° ) C °जति°. D व्याप्नुवन्तोऽस्ति. C °रूपत्वाजाति. $CD_2$ कल्पते. C om. एव ( after सर्व ). $D_2$ सामान्यस्य. $D_2$ निर्विशेषा; M स्युर्न विशेष. $D_2$ °विशेषण. C व्यावृत्ति°; $D_2$ व्यावृत्तिं. C वस्तेषु; $D_2$ भावास्तेषु ( for भवंस्तेषु ).

कल्पन्ते। एवं सर्व एव विशेषा व्यावर्तन्ते। अन्यथानुगमात् सामान्यानि स्युर्न विशेषा इति सर्वविशेषेषु साधारणी व्यावृत्तिः सामान्यसमो धर्मो भवंस्तेषु **जातिः** इत्युच्यते।

(46) [a]) नन्वेवं गोपिण्डेष्वपि सास्नालाङ्गूलखुरककुद्विषाणाद्यवयवसंबन्धस्य साधारणत्वात्सैव जातिरस्तु। मैवम्। सास्नादिमत्त्वेन सास्नादिमानित्यादिप्रत्ययो जायते न तु गौर्गौरिति। अनुरूपं हि कार्यं कारणं कल्पयति, तद्यथा दण्डीति प्रत्यये दण्डसंबन्धो निमित्तं न तु दण्डोपादित्सा। [b]) यद्येवमनुप्रवृत्तावपि न जातिर्जातिरिति प्रत्ययो युक्तः, व्यावृत्त्या च विशेषो विशेष इति। नैतदेवम्। गत्यन्तराभावादत्र सदृशा एव धर्मा जातिः कल्पते, मुख्ये जातिमत्त्वे बाधकोपपत्तेः। [c]) तथा हि—सामान्येष्वपरसामान्यसमवायेऽनवस्थादि बाधकमन्यत्र निर्णीतम्। नित्यद्रव्यवृत्तिषु व्यावृत्तिप्रत्ययजनकेषु विशेषेषु सामान्याभ्युपगमे संशयापनोदाय विशेषान्तरकल्पने तेषामपि सामान्यसमवाये सन्देहविषयत्वाद्विशेषान्तराभ्युपगमेऽनवस्थाप्रसङ्गः। [d]) अथ कश्चिन्निस्सामान्योऽस्ति विशेषः, तदा तद्विशेषात्सर्वेऽपि तथा स्युरित्यन्यत्र विस्तरेणोक्तम्। गोपिण्डेषु सामान्याभ्युपगमे न किञ्चिद्बाधकमिति न तत्र यथाकथञ्चिन्निमित्तं परिकल्प्यम्। तदेवं यत्र जात्यभ्युपगमे प्रमाणबाधास्ति तत्र सदृशधर्मरूपा जातिः। तथा चाभावेष्वपि सामान्याभ्युपगमे भावत्वापत्तेरभवनात्मकधर्मसामान्यादन्वयिप्रत्ययविषयतेति सैव तत्रापि जातिः ॥ १४ ॥

(47) कालाकाशादिशामेकत्वान्नित्यत्वेनावस्थाभेदाभावाच्च कथं जातिः, येन व्याप्तिसिद्धिरित्यत आह—

---

(46) [a]) C नन्वेव. C सास्ना°; $D_2$ स्वाम्ना (for सास्ना°). C °लाङ्गूदककुदखुर°; $D_2$ °कक्कुट° (for ककुद°) $D_2$ साधारणात्. B तदेवं; $D_2$ सैव (for मैवम्). $D_2$ साम्ना° (for सास्ना°). M °नित्यादिः L किन्तु (for न तु). C °रूप. D कल्पयति. C दण्डिति; D दण्डाति. C प्रत्यथो. [b]) AC यथैवं (for यद्येवं). ACM °मनुवृत्त्यापि. $D_2$ गायथो. ADM युक्तं; $D_2$ युक्त° (for युक्तः) B व्यावृत्ता. B विशेषा. C नैतदे. C °दत्त. D °दशदश; $D_2$ °द्यमदशा° (for °दत्रसदृशा°). A °धर्मरूपा; $CD_2$ धर्मो (for एव धर्मा). DH °वयवधर्मो. C जाति. A ins. यत्र धर्मो जातिः (before कल्पते) B कल्प्यते; L कथ्यते. D मुख्य°. D जातिमत्वं. C बांधको. [c]) $CD_2$. तथा. B सामान्ये च; C सामान्यष्व. C °वांयेनादिव°. $D_2$ °नस्थादि. M °मन्यत्. M °द्रव्या°. D °वृतिप्र. $CD_2LM$ व्यावृत्त°. A om. विशेषेषु. D संशयाय°; $D_2$ संपर्य°. B °नोदनाय; D °तोदाय. $D_2$. विशेषानन्तर°. L तेषामितर°. C °गमेऽवस्था°. D प्रसङ्ग. [d]) ABD निःसामान्ये. B °रितिवान्यत्र. $D_2$ °रित्यत्र. D विस्तरेणोक्त. LM ins. तु (after गोपिण्डेषु) C कांचित्. L तत्र न. D निमित्त. D तदेवं त्र. M °बाधोऽस्ति. B सदृशरूपा°. A भावेष्वपि. C om. अभावेष्वपि. D आवेष्वापि; $D_2$ भावेष्वधि. $CD_2$ °रभावनात्मक; L °रभावात्मक°. $D_2$ °साम्यात्. C अन्वप्ति. DH अन्वियि°. C विषयतथेति. $D_2$ तत्रापि.

(47) D राला (for काला°). $D_2$ °नापस्था° (for °नावस्था°). B तथं (for कथं).

**संयोगिधर्मभेदेन देशे च परिकल्पिते ।**
**तेषु देशेषु सामान्यमाकाशस्यापि विद्यते ॥ १५ ॥**

(48) [a]) यथा सामान्यविशेषाणामन्वयिधर्मोपाधिरभेदः तथाकाशस्यापि संयोगोपाधिर्भेद इति प्रकृतापेक्षः समुच्चयः । आकाशेन संयोगो विद्यते येषामाकाशाधिकरणानां घटादीनाम्, ते संयोगिनः । आकाशं हि सर्वेषां मूर्तानामधिकरणम् । अवकाशदानाद्धि तदाकाशम् । मूर्तास्तु भावाः परस्परं प्रतिबन्धका इति न तेऽवकाशदायिनः । [b]) **संयोगिनां धर्मभेदः** प्रत्यक्षादिप्रमाणसिद्धं परिमितत्वं तद्वशाद्वा लोकप्रसिद्धं परिमितदेशवृत्तित्वम् । यत्र हि **देशे** संयोगः परिसमाप्तो वर्तते स प्रदेशो भवत्याकाशस्यानेकः । कार्यं प्रति देशः प्रदेश इति निर्वचनात् । गुणाश्च केचिद्व्याप्यवृत्तयः, यथा रूपादयः । संयोगस्तु मूर्तिपरिच्छिन्नवस्तुवृत्तिरिति सर्वदा प्रदेशवृत्तिरेव । अतः संयोगस्य नियतदेशतया संयोगिनोऽपि नियतदेशवृत्तय इति संयोगिधर्मभेदेन आकाशस्य भेदो भवत्युपाधिकृतो न स्वतः। यदाह–**देशे च परिकल्पिते** इति । [c]) देशभेदाच्च सामान्यमाकाशस्यापि विद्यते । अतश्च प्रतिदेशम् 'इदमाकाशम्, इदमाकाशम्' इत्यभिन्नाभिधानप्रत्ययानुवृत्तिलक्षणमाकाशसामान्यमाकाशशब्दगोचरोऽस्ति ।

(49) [a]) एवं समानन्यायत्वात्कालादीनामपि प्रदेशपरिकल्पनेन सामान्य-

---

का. १५. C संयोनी. D मरि° (for परि°) $D_2$ तिपु (for तेषु. D विद्यतेः

(48) [a]) $D_2$ °विशेषणा°. C °गाधिरभेद; $D_2$ °पाधिभेदे. L °पाविभेद. $D_2$ प्रति (for इति). B प्राकृतापेक्ष. C °कृताक्षेपः D °कृतापेक्षा; H नकृतापेक्षा. D योग्गो. A तेषा. C om. आकाशाधिकरणानां. BLM रथादीना. C मूताना. C आवकाश°. $D_2$ °दानादि. D पर्तास्तु; $D_2$ पूर्तस्तु. $DD_2$ भावः. A परस्पर°. B निवन्ध°. $CD_2$ हि विवन्घ°. L विवन्ध°. $D_2$ तेष्वकादायिनः M °तेऽवकाशदायिना. [b]) C धर्मयोगः L धर्मभेदः $D_2$ °प्रमाणासिद्धं. C यद्वशाद्वा. C °दश° (for °देश°). C यत्रे. L om. हि. DHM भवत्वा°. D कार्य (for कार्यं). $D_2$ परिच्छिन्नं. C om. °वृत्ति°. D वृत्ति (for °वृत्ति°). L सदा (for सर्वदा). $D_2$ वेशेतया. D संयोगिस्य (for सयोगिनोऽपि). D rep. °तया सयोगिनो नियतदेश°). D °वत्तय. M ins. देश (before भेदो). C स्वताः D दंशं (for देशे) D वरि°. [c]) C om. च. D °प्रत्ययाप्रवृत्ति°. BLM लक्षणं. BLM om. आकाश° (before सामान्यं). $D_2$ °न्यगाकाशस्य शब्द° (for °न्यमाकाशशब्द°).

(49) [a]) $D_2$ पदं (for एवं). C सामान्या°. C °वर्णतीयम्. D om युधिष्ठिरादि... मावर्तमानस्य. A भेदेन (for भेदे) [c]) $D_2$ कलि° (for काल°). C सामान्यस्यापि (for शब्दवाच्यमस्ति); M °शब्दादि° (for °शब्द°) BCH मेरु°; M मेरोः $D_2$ संप्रदक्षिण°. M भ्रमतः (for मावर्तमानस्य). C लोक° (for °र्लोक°). C °ग्रहीतैः LM परिगृहीतैः. C om ये (before सयोगाः) $D_2$ दिशा. $CD_2$ सयोगाः. $CD_2$ सन्ति (for सति). ACD भेदभिन्नं; $D_2$ भेदेन भिन्नं. L भेदे भिन्न°. C भदक° (for दिक्) DL °सामान्य°. M क्रमा...L om अपि (after तत्र). C आत्मत्वं. C om. एवं. $CD_2$ °भिदा (for °भेदा°) Cनानोपचारे. D रानात्वोपचरे. C सवित्रेह. M वुद्धावनु°. C °वृत्तिजातिः LM om. परि°.

मुपवर्णनीयम्। तथा हि—कालस्य युधिष्ठिरादिसंयोगवशेन भेदे सत्यभिन्नं कालसामान्यं कालशब्दवाच्यमस्ति। एवं मेरुं प्रदक्षिणमावर्तमानस्य सवितुर्लोकपालगृहीतैर्देशविशेषैर्ये संयोगाः तदुपाधिना सूर्येण दिशः संयोगे सति भेदेऽभिन्नं दिक्सामान्यं दिक्शब्दवाच्यं परिकल्प्यम्। आत्मा तु प्रतिशरीरमन्य एवेति तत्राप्यस्त्येवात्मत्वसामान्यम्। एवं समवायस्यापि संबन्धिभेदान्नानात्वोपचारे सर्वत्रेहबुद्ध्यनुवृत्तेर्जातिः परिकल्पनीया। [b]) ननु च संयोगिदेशेनाकाशस्य देशपरिकल्पः तेन संयोगिनामितीतरेतराश्रयत्वम्। नैतदस्ति। इतरेतरव्यावृत्तिरूपतैव रथादीनां मूर्तत्वापरिच्छिन्नपरिमाणत्वं बोधयति। [c]) कल्पितास्त्वाकाशदेशा लोकप्रसिद्धाः संयोगिवस्तुगतां परिच्छिन्नदेशता ज्ञापयन्ति। सामान्येन ह्याकाशदेशत्वे रथादीना प्रत्यक्षादिप्रमाणावसितरूपविरुद्धं व्यापित्वमारोपितं स्वगतेन परिमितत्वेनाकाशस्य प्रदेशकल्पनया निराक्रियेत। [d]) यद्येवं कल्पिता देशाः कथमाकाशस्य स्वतो निरवयवस्य देशभेदनिबन्धनं कार्यं जातिप्रक्लृप्तिलक्षणं जातिशब्दप्रवृत्तिलक्षणं वा कुर्युः, येन तद्वता जातिरभिधीयेत। उच्यते। व्यक्तिस्थानीयानां देशानामद्वैतदर्शने यथासत्यत्वम्

'असत्या व्यक्तयः स्मृताः' ( verse 32 infra )

इति वक्ष्यते तथेहाप्याकाशस्य सत्यत्वे व्यक्तीनां न कश्चिद्विरोधः ॥ १५ ॥

( 50 ) अथवा मुख्या एवाकाशस्य देशा घटादीनामिवेत्याह—

**अदेशानां घटादीनां देशास्संबन्धिनो यथा ।**
**आकाशस्याप्यदेशस्य देशास्संबन्धिनस्तथा ॥ १६ ॥**

---

[b]) L संयोग°. C °भेशेना° ( for देशेना° ) $D_2$ ins. इह. CM देशः. $D_2$ दशा. $ADD_2$HM °परिकल्पनेन B परिकल्प्यः केन. B संयोगिनेति. C °नामितीतरे°. B °आश्रयत्व. C °रूपान्तैव. A राव्यादीनां. C ins. प्रत्यक्षादिप्रमाणावसि° ( before मूर्तत्वा° ). B मूर्तत्व°. $D_2$ पूर्वत्वात् ( for मूर्तत्वात् ); $D_2$ परिच्छिन्ने ( for परिच्छिन्नं ). [c]) B कल्पितात् स्वाकाश°; C कल्पिकास्वादेश° L कल्पितास्स्वाकाश°. B om. संयोगि...देशतां. L संयोग° ( for संयोगि° ). C वस्तुगतं; M वस्तुग°. ACDL सामान्यतया; $D_2$ सामान्यतथा. $ACDD_2$H om. हि. A रव्यादीनां. C °विरुद्ध. $D_2$ व्यापित्वं सारो°. C °मारोपितेन. H परिमितत्वं. M नाकाशप्रदेश°. C क्रियन्ते. [d]) B यतो ( for स्वतो ). C निवन्धन°. C °कार्य°. D कार्यं C om. जाति ( before °प्रक्लृप्ति° ). $D_2$ °प्रकृति°. $D_2$ °लक्षण°. AHM om. °प्रवृत्ति° ( before लक्षणं ). C कुर्यु. C °धीयेत्; D °धायेत. $D_2$ °दर्शनं. B सत्या. L समत्य ( for असत्या ). L °काशस्या°. C °व्यक्तिना. D व्यक्तानां. H om न ( after व्यक्तीनां ).

( 50 ) $D_2$. यवा° ( for एवा° ).

का. १६. C घटादिना देशः $D_2$ देशादसंनिधिनो यथा. $D_2$ om. °देशस्य ( before देशाः संबन्धिनः ).

(51) [a]) इह देशोऽवयव उच्यते । घटादयश्चावयविनः स्वात्मनि निरवयवाः । ये हि तेषामवयवभूताः कपालादयस्ते आरम्भकाः कारणभूता व्यतिरिक्ता एव समवायसंबन्धेन **संबन्धिनः ।** एवमाकाशमपि केनचिदप्यनारब्धत्वादमूर्तं व्यापि निरवयवमित्यात्मभूतदेशाभावाद् द्रव्यादयः संयोगिन एवास्य **देशाः**, तथा तद्भेदादाकाशभेदे सर्वत्राभिन्नप्रत्ययानुगमाज्जातिपरिकल्पः । [b]) आकाशं ह्यवच्छिन्दन्तोऽर्था देशास्तस्य भवन्ति । तत्कृतावच्छेदं चाकाशमपि तेषामाधारभावापत्तेर्देश इत्यन्योन्यदेशत्वं मूर्तामूर्तयोः मूर्तास्त्वव्यापकाः परस्परमवच्छेदका न भवन्तीत्याधार एवैतेषा देशः ॥ १६ ॥

(52) कथं तर्हि देशे गौणत्वव्यवहारः । यदि हि कस्यचिन्मुख्याः प्रदेशा आत्मभूताः स्युस्तदायं युक्तः स्यान्नान्यथेत्यत आह—

**भिन्नवस्त्वाश्रया बुद्धिः संयोगिष्वनुवर्तते ।**
**समवायिषु भेदस्य ग्रहणं विनिवर्तते ॥ १७ ॥**
**अतः संयोगिदेशानां गौणत्वं परिकल्प्यते ।**
**अविवेकात्प्रदेशेभ्यो मुख्यत्वं समवायिनाम् ॥ १८ ॥**

(53) [a]) भिन्ने पृथक्सिद्धे वस्तुनि आश्रयो यस्या बुद्धेः । अप्राप्तयोः प्राप्तिः संयोग इति पृथक्सिद्धपदार्थविषया संयोगबुद्धिः । **भेदस्य ग्रहणं विनिवर्तते** इति, यतोऽपृथक्सिद्धानामिहबुद्धिहेतुः समवायः, यथा 'इह कपालेषु घटः' इति । **अतः** इति, भेदेन ग्रहणात् । **अविवेकात्**, विवेक्तुमशक्यत्वात् । यतो भिन्ना बुद्धिः संयोगिनाम्, **अतः** तत्प्रदेशानां गौणत्वम् । [b]) यतश्च समवायिनामभिन्ना बुद्धिः, अतस्तत्र

---

(51) [a]) $D_2$ निवयवाः. C एहि; $D_2$ त्येहि (for ये हि). BL अवगवाः क°. $D_2$ °लादयस्तैस्ते. $BD_2$ M आरंभ; C आरंभआ (for आरंभकाः). C °व्यतिरिक्ता. C rep. एव. M केनचिदना°. C °दरणारूपत्वात्; D °दप्यनारब्धा. $D_2$ वतोऽपि (for व्यापि). ABD °भावाद्रव्या°. L °भावाद्रथा°. D यवास्य. M तथा च. D तददा° (for तद्भेदा°). L तद्भेदेन. D सर्वशा (for सर्वत्रा°). $ACDD_2H$ जातिपरिकल्प्या; B जातिः परिकल्प्या. $D_2$ om. (ज्जा) तिपरिकल्प......उपपादयितुमाह (end of Kā २८). [b]) C शह्यव°. B अर्थात्. C अर्थः. D अश्य (for अर्थाः). C भवति. C तत्कता°. H वा (for च). C °भावापतं. B °देगत्वं. BL om. मूर्ता°. C °स्तव्यापकः. D °स्तव्यापका. CL तेषां; M. एषां (for एतेषा).

(52) $D_2$ omits completely the commentary on this Kā. BCHLM गौण (for गौणत्व°). ACD °भूतास्यु. M नान्यथेत्य आह.

का. १७. भिन्ना. B वत्वाश्रया. C वस्त्वाश्रयाः D वाद्धिः A संयोगिन्यनु°. D °वायिप्युभे·

का १८. C संयोगी. C. परिकल्पते. C °शेभ्या.

(53) [a]) सिद्धेव (for °सिद्धे). C आप्राप्तयोः. C प्राप्ति. C प्रृथक्सिव°. M °पदार्थावि°. C °सिद्धिः (for °बुद्धिः). BL ins न (before भेदस्य). B °सिद्धान्ताना°. M समवाये. AL om अतः इति. C द्विवक्तु°. L °मशक्यात्. D यत· (for अतः). [b]) D समवाहा (for समवाय°)˙ C समवायिनाविवेक्तु. D विवक्तुं M विविक्तुं. D om न शक्यंन्त...समवायिनः. C शवयत C कपालादिष्विव. C तदारक्य°. C om °मवयवि. C मुख्यः, M मुख्ये. C °वायिना. C °स्थाप्यते. D सयुक्ताना. AB ते (for तु) B गौण° (for गौणत्व°). CL °नोपचरितत्व°.

मुख्यत्वम्। समवायप्रभावाद्धि प्रदेशेभ्यो विवेक्तुं समवायिनो न शक्यन्त इति तेष्वेव देशेषु कपालादिष्वेव तदारब्धमवयवि द्रव्यमुपलभ्यते। अतस्तत्र मुख्याः समवायिनः प्रदेशत्वेन व्यवस्थाप्यन्ते। संयुक्ताना तु नैवमिति गौणत्वमित्यनेनौपचारिकत्वमाकाशदेशानां समर्थितम्। [c]) ननु च घटादीनां संयोगिनां परस्परसंयोगेऽपि परस्परदेशभावो न भवति, एवमाकाशेनापि न स्यात्। नैतदस्ति। आकाशेन सदा संवद्धा रूपादय इति तत्राध्यारोपो युक्तो न तु घटादीनामनियतसंयोगानाम्। अत एव घटादिष्वाकाशानुगतः प्रत्ययो दृश्यत एव घटाकाशः पटाकाश इत्यादि, अध्यारोपे च न भेदविगलनमित्युक्तम्॥ १७, १८॥

(54) तदेवं वैशेषिकदर्शनाश्रयेण जातिपदार्थव्याप्तिरुपपादिता। इदानीं विज्ञानवादेनापि पदार्थव्यवस्थामाह—

**अनुप्रवृत्तिरूपां यां प्रख्यातामाकृतिं विदुः।**
**केचिद्व्यावृत्तिरूपां तु द्रव्यत्वेन प्रचक्षते॥ १९॥**

(55) [a]) 'सर्वपार्षदं हीदं शास्त्रम्' इति, शब्दार्थोऽर्थ इति वा पदार्थव्यवस्थेयम्। अनुगताकारा या बुद्धिस्तस्यां प्रतिभासमानस्तदाकारोऽर्थरूपतयावसीयमानवपुर्दृश्यविकल्पयोरभेदाध्यवसायात्सामान्यमाहुः। व्यावृत्ताकारबुद्धिसन्निवेशित्वाकारोऽत्र च दर्शने द्रव्यमिति प्रसङ्गादुक्तम्। [b]) एवं च बाह्यस्य सामान्यस्याभावादाकाशादावपि तत्समर्थने न प्रयतितव्यम्। अनपह्नवनीयाभिन्नाकारप्रत्ययोपजनस्य सर्वत्रैव सिद्धेर्विज्ञाननये

---

[c]) C घटादीनां. C om. परस्परसंयोगेऽपि; L परस्परं संयोगेऽपि. C परस्परं. B °देशाभावो. C नैनस्ति. C संबन्धा. AHL रुप्यादयः, M रूपादयः. C घटादिना. AD °मपि नियत°. C °गतप्रत्ययो. B °प्रत्यये. A om. पटाकाशः. C इति यदि (for इत्यादि). L इत्यादिः C आधारोपेण च. C °विगलम°.

(54) C तदैव; D त्वद्येव. C वैदेशिकपदार्थदर्शनेन. C om. जातिपदार्थ°. D इतादधानीं (for इदानीं). C विग्यान° (for विज्ञान°).

का. १९. C °प्रभृति° (for °प्रवृत्ति°) C. H. M. °रूपाया. C. °माकृति. C. °द्व्यावृत्त°. B om. तु.

(55) [a]) B द्रव्य° (for सर्व°). C हिदं. C वाद (for वा). C °स्तस्या. C °दाको° (for दाकाशे). M ins. इति (before आहुः). C °व्यादत्ता°. C °सन्निवेशाकाशे. Could the real reading be सन्निवेशी त्वाकारो? But no ms has it. BL M एव (for च). [b]) B भावात् (for अभावात्). B °दवधि (for °दावपि). D °ह्नवनाया°. C °दिनाकार (for भिन्नाकार°). M om. एव (after सर्वत्र). D °विज्ञान°. C °नयैव (for °नयेच). L शब्दानुचरिताद्याकारवती. D शब्दार्थत्व. D वृद्धेः (for बुद्धेः). H सस्वाकारो. C बाह्यास्तीं (for बाह्योऽस्तु). C न चा. C °वाच्यस्नस्य. L कदाचित् (for काचित्). D क्षकु (for क्षतिः).

च सर्वमेव प्रत्ययात्मकमङ्गीकृतमेव। शब्दादुच्चरितात्तदाकारवती बुद्धिरुत्पद्यत इति तदाकारस्यैव शब्दार्थत्वम्, न बुद्धेः। स ह्याकारो बाह्योऽस्तु, न वा, शब्दवाच्यत्वस्य न काचित्क्षतिः॥ १९॥

(56) ननु च वस्तूनां देशकालादिनिमित्तो भेद इति तदनादरेणाभिन्नान्येव तानि सिद्धानीति किमर्थं व्यतिरिक्तसामान्यकल्पनायां प्रयस्यत इत्याशङ्क्याह—

**भिन्ना इति परोपाधिरभिन्ना इति वा पुनः।**
**भावात्मसु प्रपञ्चोऽयं संसृष्टेष्वेव जायते॥ २०॥**

(57) निरुपाधिनो वस्तुनोऽव्यवहार्यत्वात्सर्व एव परोपाश्रयो व्यवहार इति सामान्यादौ व्यतिरिक्तसामान्यकल्पनैवमकारीत्यत्र तात्पर्यार्थः॥ २०॥

(58) एतदेव व्यतिरेकमुखेनापि प्रपञ्चयति—

**नैकत्वं नापि नानात्वं न सत्त्वं न च नास्तिता।**
**आत्मतत्त्वेषु भावानामसंसृष्टेषु विद्यते॥ २१॥**

(59) एकत्वसङ्ख्याधीन एकत्वेन व्यवहारः, पृथक्त्वनिबन्धनो नानात्वेन, सत्तानिबन्धनः सत्त्वेन, स्वरूपसत्त्वेन तु सामान्यादीनामभावोपाधिर्नास्तीति व्यवहार इति संसर्गदर्शने सर्वः परोपाश्रयोऽयं प्रपञ्चो वैचित्र्यम्॥ २१॥

(60) एवं व्यतिरिक्तोपाधिदर्शनमुपन्यस्याधुना स्वशक्तय एवोपाधय इत्यद्वैतदर्शनाश्रयेणापि प्राह—

---

(56) BL om. च (after ननु) C °तिमितो (for °निमित्तो); L °निमित्तं (भेद). C तदभिन्ना. C °न्येत्रावनि (for न्येवतानि). C om. °सामान्य° (after व्यतिरिक्त°). D त्यप्रयस्यत.

का. २०. C मयंवीयं (for प्रपंचोऽयं). BL त्यदष्टेष्वेव. C संसृपेःवेव.

(57) D निरुपाधिनो. M om. वस्तुनो. BH व्यवहार्यत्वात्. L °त्वा अर्व (for त्वात् सर्व). M परोपाश्रयेण. M व्यवहार्यः D सामान्यादो. H व्यतिरिक्तस्य. C om. °सामान्य°. कल्पनेनैव. A. D. H. °माकारी°; C. °माकार्य°; M °मरा° (for °मकारी°).

(58) ACDH तदेव. BL om. अपि. L विपञ्चयति.

(59) D एकत्वं (for एकत्व°). C व्यवहार. C पृथक्°. ABDH ins. व्यवहारः (after नानात्वेन). C सता° (for सत्ता°). C रूप° (for स्वरूप°) C ins. न (after °सत्वेन). C °मुभो° (for °मभावो°) C °दर्शनेः CH सर्व (for सर्वः). M परोपाश्रयाय. B om. अय. C प्रपञ्चो.

(60) B om. एवोपाधयः.

सर्वशक्त्यात्मभूतत्वमेकस्यैवेति निर्णयः ।
भावानामात्मभेदस्य कल्पना स्यादनर्थिका ॥ २२ ॥

(61) एकमेव ब्रह्म सर्वशक्तीति प्रमाणेन सिद्धेऽस्मिन्नर्थेऽविद्यापरिकल्पितस्य भावभेदस्यापारमार्थिकत्वात्कार्यनानात्वोन्नीयमानः शक्तिभेद एवैकस्य युक्तो न तु स्वरूपभेदः ॥ २२ ॥

(62) तथा च

तस्माद् द्रव्यादयः सर्वाः शक्तयो भिन्नलक्षणाः ।
संसृष्टाः पुरुषार्थस्य साधिका न तु केवलाः ॥ २३ ॥

(63) द्रव्यगुणकर्मसामान्यविशेषसमवायलक्षणाः पदार्था न पृथग्भूताः । एकस्यैव शक्तयो विलक्षणव्यापारानुमेया इति ता यथायथमुपगतसमन्वयाः प्रावरणाद्यर्थक्रियाकारिण्य इत्यस्मिन् मते सर्वत्रैव जातिव्यक्तिप्रविभागः कल्पितः

'सत्यासत्यौ तु यौ भागौ' (Verse 32 infra)

इत्यत्र वक्ष्यमाण इति, नाकाशादीनामपि कश्चिद्विशेष इत्यर्थः । [b]) यथा हि वैशेषिकाणां व्यतिरिक्तं सामान्यम्, नैवमिह, केवलं विश्वमूर्तेः पदार्थस्य शक्तिमात्रम् । न केवलं सामान्यमेव, यावद् द्रव्यादयोऽपीति प्रसङ्गात्कथितम् । भेदाभ्युपगमेऽपि द्रव्यादीनां संसृष्टानामर्थकारित्वे वरमेकमेव शक्तिमदस्त्वित्यर्थः ॥ २३ ॥

(64) तत्रैतत्स्यात् संसृष्टानां साधनत्वे तासामसामर्थ्यम्, संसर्गस्यैव तथात्वात्, तस्य च व्यतिरेके द्वैतापत्तिरित्याशङ्क्याह—

---

का. २२. HLM °निर्णये. D °भात्मभेदस्य.

(61) C सर्वशक्तिति; D सर्वशक्ताति. C प्रमाणे; L प्रमाण°. D अविदा° (for अविद्या°). D परिल्पितस्य. D पारमा°. D °त्वोन्नायमानः. C एवैकस्यो°. D ins. आद्युभेदे (after एवैकस्य).

(62) D ins. तस्माद्द्रव्यादयः समीपदेशव्यक्तयो भिन्न° (after तथाच).

का २३. C द्रव्यादयो. C संसृष्टा पु°.

(63) [a]) °लक्षणपदार्थाः L स्वशक्तयो. L °लक्ष° (for विलक्षण°). C °रान्दुमया. M om. ताः. M °मुपयस्य (for °मुपगत°) C °समन्वयः L भागा इत्यत्र. M वक्ष्यत इति. C नाकाशादि°. D नाशानादी°. [b]) C वैशेषिकाना; D वैशेव्यिकाणां. C विश्व. D विश्वस्व; L विश्वस्य. CD मूर्त्तं. BL °मेवं (for °मेव). C कथितसङ्गात् (for प्रसङ्गात्). C द्रव्यादिना AD °मर्थकारित्व; L °मर्थक्रियाकारित्वे. ACDHL परं (for वर). D °मकमेव. B शक्तिमानस्ती°; L शक्तिमनास्त्व°.

(64) ABCDHM साधनत्वेनासामर्थ्यं. ABCDH om. एव (after संसर्गस्य). B तथात्व. C °द्वैतापति; D °रेके तापत्ति.

**यथैव चेन्द्रियादीनामात्मभूता समग्रता ।**
**तथा संबन्धिसंबन्धसंसर्गोऽपि प्रतीयते ॥ २४ ॥**

(65) [a]) चक्षूरूपालोकमनस्कारा आत्ममनइन्द्रियार्था वा परस्पराहितविशेषाः संघटिता विज्ञानहेतवोऽन्वयव्यतिरेकाभ्यां दृष्टा इति नेयमेभ्यः सामग्री नाम पदार्थान्तरं जनिका। अत एव हि सामग्रीजनकाः सामग्रीशब्दवाच्याः, वस्त्वन्तरस्यानुपलब्धेः। [b]) एवमेकेन संबन्धिना सर्वशक्तीनामाधारभूतत्वेन प्रकृतत्वात्संबन्धो द्रव्यादिशक्तीनाम्। ततो य एकस्मादाधारादव्यतिरेकात्संसर्गो रूपसंमूर्च्छनं तस्मिन्नपि संसर्गे सति पुरुषार्थसाधके स्वभावभूता समग्रता विज्ञायते। तत्रापि हि **आत्मभूता** एव न्यायायाता, द्रव्यमात्रेण गुणादिसंसर्गरहितेन द्रव्यव्यवहाराभावात्। एवं गुणादिमात्रेणेत्यवश्यंभाविनः संसर्गस्य द्रव्यादिभ्यो विवेकानवधारणात् तत्स्वभावतैव। [c]) क्वचित्पाठः—**तथा संबन्धिसंबन्धसंसर्गोऽपि प्रतीयते** इति। तत्रापि संबन्धिना सर्वशक्त्याधारेण, संबध्यन्त इति संबन्धाः द्रव्यादिशक्तयः, तासां संबन्धानां शक्तीनामन्योन्यसंसर्गोऽप्यात्मभूत एवेति व्याख्या। [d]) यद्वा सर्वशक्तेः पदार्थस्य संबन्धिनीनां शक्तीनां संसर्गेऽपि संसर्गावस्थायामपि तथैवासौ संबन्धः, आत्मभूत एवासौ संसर्ग इत्यर्थः। चित्सामान्यानुगमाच्च विश्वस्य प्रमाणसिद्धोऽभेद इति प्रथमकाण्ड एव निर्णीतम् ॥ २४ ॥

(66) तदेवं यथादर्शनं जातिः शब्देन प्रतिपाद्यते इत्युपपादितम्। सा च नित्येति नित्यः शब्दार्थः। तथा च

" नित्यावेवोपवर्णितौ "

---

का. २४. C चेन्द्रीयादिना°. C °भूवा (for °भूता). D तया. (for तथा)

(65) [a]) चक्षु (for चक्षू). A °मिश्रिनं (for °मनस्कारा आत्म°). C °मनस्मराश्चात्म°; D °मनास्मि°; H °मनस्ति (मिते°). M °प्तमनस्कारा आत्म°. H om मन. A इन्द्रियार्थान्ध°; D इन्द्रियार्थान्तर°. AC परस्परा°. C °मित (for °हित). D om. °स्पराहित°...पदार्थान्तरं. L नैतेभ्यः (for नेयमेभ्यः). B पदार्थान्तरा जनिकाः. D अकात एव (for अत एव). D सामग्रा°. D °शब्दवाच. [b]) BM °शक्तिना; C °शक्तिना (for °शक्तीनां). ACDH साधारण°; B पर° (for आधार°). BL सर्वबन्धो; C संबोध°. C °शक्तिना. M अतो. C °मेकस्मा°. ACDH °दाधारव्यतिरेकात्; L °दाधारव्यतिरेकात्. L °सम्मूर्च्छनः. C समयता. BL om अपि. C ins श (before हि). ABCDH om. द्रव्य° (before व्यव°) D एत्र. ACDH द्रव्यादिभिः. C °धारणतन्त्र° AD स्वभावेनैव; M °स्वभावात्. C ins इति (after °स्वभावतैव. [c]) C संबद्धयन्त इति. ABC संबन्धात्. D °शक्तयः (for शक्तयः). C om. तासा. C संबन्धिना. C शक्तिनां; D शक्ताना. [d]) ADH संबन्धिना, B संबन्धीना ACDH om शक्तीना (before संसर्गेऽपि) D ससर्गावस्थाया°. L °नतथैवासौ (for °नपि तथैवासौ). C एवामो (for एवासौ). ACDH क्वचित् (for चित्). B °सामान्यागमा च. BL om एव. (after °काण्डे).

(66) C. जातिजातिशब्देन. ABDHLM repeat इति. C इत्युपादितम्. ADH नित्यशब्दार्थः. D जाते. C °र्नित्यत्ये.

इत्युक्तम् । तत्र जातेर्नित्यत्वे कार्योपयोगमाह—

**न तदुत्पद्यते किञ्चिद्यस्य जातिर्न विद्यते ।**
**आत्माभिव्यक्तये जातिः कारणानां प्रयोजिका ॥ २५ ॥**

( 67 ) व्यक्त्यधीना जात्यभिव्यक्तिरिति स्वाश्रयकारणानां प्रयोजककर्तृत्वमिवावलम्बते **जातिः** । सदा सन्निहिता कार्योत्पत्तौ **कारणानां** सहकारिणीत्यर्थः । निमित्तकारणत्वाद्वैशेषिकदर्शने जातीनामेषोऽर्थः प्रयोजकपदेन भङ्ग्याभिहितः ॥ २५ ॥

( 68 ) ननु कारणेष्वसन्निधानात्कथं तेषां प्रयोजिकेत्याह—

**कारणेषु पदं कृत्वा नित्यानित्येषु जातयः ।**
**क्वचित्कार्येष्वभिव्यक्तिमुपयान्ति पुनः पुनः ॥ २६ ॥**

(69)[a]) सर्वगतत्वाज्जातीनां **कारणेषु** अपि सन्निधानात्पदबन्धः । तथा च जात्यात्मना कारणेषु कार्याणामवस्थानाज्जातिरूपोपरागेण तदवसायात् तत्र साधनानां प्रवृत्तौ कार्यारम्भे तत्समवेतजात्यभिव्यक्तिरसकृदाश्रयोपलब्धौ भवति । [b]) नित्याः परमाणवः कारणानि, दर्शनान्तरे वा प्रधानपुरुषादयः । अनित्या वीरणादयः । '**क्वचित्**' इति । दृश्येषु किञ्चित् किल कार्यं जात्याश्रयं निष्पन्नमप्यदृश्यं यथा वायुर्द्रव्यमिति । तत्र हि तज्जात्यभिव्यक्तिर्नास्ति ॥ २६ ॥

इत्थं च कृत्वा प्राक् प्रभवादपि जातेर्विद्यमानत्वान्नित्यत्वं पोषितम् । तथा च जातिपदार्थनयेऽत्र जातेरुपयोगं दर्शयति—

**निर्वर्त्यमानं यत्कर्म जातिस्तत्रापि साधनम् ।**
**स्वाश्रयस्याभिनिष्पत्तौ सा क्रियाणां प्रयोजिका ॥ २७ ॥**

---

का. २५. CDH° नेतदु C किञ्चिय° ( for किञ्चिद्यस्य ). BM जाति. D प्रयोतिका.

( 67 ) C व्यतयधीना ; D व्यत्तयधाना. BL जातिव्यक्ति°. C °रीति. D स्वाग्वाय° ( for स्वाश्रय° ). M om इव. C °लम्वन्ते. C जाति. D °कारिणात्यथे. C निमित°. C जातिना°. C भाग्य° ( for भङ्गया ).

( 68 ) L कारणेष्वेव सन्निधानात्

का. २६. C पद कृ° C पुन ( for पुनः ).

( 69 )[a]) C सन्निधात् प°. CH पदसंवन्धः. C कार्णानाम°. D °र्याणा अ°. B °रूपे परमाणौ; C °रूपादरा°. A तत्तत्सा°; D तत्तत्मी धनाना प्र°. C कार्यांभरंभ. C °वेत्य° जा°. C ins न ( before भवति ). [b]) AD om वा ( before प्रधान° ). C अनीत्या विर°. BL किला. C °न्नमथद°. CL °युद्रव्य°. C om प्राक् C प्रभा°. C याश्रितम्. L इतरया. B °नये तु जा°. C ताते°.

का. २७. BL °स्थापिनि°. HLM °निष्पत्त्यै. BHL क्रियायाः D प्रयोरिकाः.

(70) [a]) घटं करोतीति कथमसतो निर्वर्त्यमानस्य क्रियाया साधनभावः कर्मण इत्येतदत्र चोद्यं नावतरति। जातेः सत्त्वात् स्वाश्रयनिर्वर्तनाय क्रिया प्रत्युक्तेन कारणपदवन्धन्यायेन प्रयोजकत्वादिति जातिरूपाश्रयेण च साधनता, व्यक्तिरूपाश्रयेण च कर्मता, निर्वर्त्यन इति कारकं कर्मेति सामानाधिकरण्योपपत्तिः। [b]) न हि जातिव्यक्ती अत्यन्तभिन्ने गवाश्ववत्, संमूर्च्छितस्वभावत्वादित्युभयरूपाश्रयो व्यपदेशोऽविरुद्धः। प्राप्यविकार्ययोस्तु कर्मणोस्सत्त्वात् स्वत एव साधनतोपपत्तिरिति '**निर्वर्त्यमानम्**' इति विशेषमाह। जात्यात्मना च निरूप्य वस्तु कारणेषु योग्येषु प्रवर्तन्ते तदर्थिनः इति '**प्रयोजिका**' इत्युच्यते। एतच्च जात्यभिधानपक्षे संभवति घटशब्देन जातेरभिधानात्। [c]) व्यक्तिपदार्थपक्षे तु उपचारसत्ताश्रयं साधनत्वं वक्ष्यति—

व्यक्तौ पदार्थे शब्दादेर्जन्यमानस्य कर्मणः।
साधनत्वं तथा सिद्धं बुद्धिरूपप्रकल्पितम्॥ (Vāk. III. सा. 7)

इति। कारणाना प्रयोजिका जातिरित्युक्तम्। तथा च जातिपदार्थपक्षे न द्रव्यस्य क्रियासाधनत्वम्, अपि तु सैव विधिप्रतिषेधयोः साधनं जातिरित्याह—

**विधौ वा प्रतिषेधे वा ब्राह्मणत्वादि साधनम्।**
**व्यक्त्याश्रिताश्रिता जातेः संख्याजातिर्विशेषिका॥ २८॥**

(71) [a]) जातेः पदार्थत्वे तत्र **विधौ** चोदिते प्रतिव्यक्तिपरिसमाप्तत्वात्तस्याः सकृदनुष्ठानेऽपि कृतः शास्त्रार्थो 'ब्राह्मणमालभेत' इति। एवं 'ब्राह्मणं न हन्यात्' इत्यादिरपि प्रतिषेधो जातावेव। सकृदनुष्ठानेऽपि च पुनरुल्लङ्घने चोदितस्य दोषः। तथा हि—अहननं चोदितम्, हननं तु क्वचिदनुष्ठितमिति विरुद्धक्रियाचरणात्प्रत्यवाय एव। क्वचित्तु विध्यनुष्ठानेऽन्यत्र तदभावेऽपि न विरोधः। तथा चाहुः—

---

(70) [a]) C कटं. M जातः. M °वर्तमानाय. A प्रयुक्तेन. C कारणसवन्ध°. C °कत्वादि जा°. LM om. जाति (before रू 1°). C निर्वत, D निर्वर्त्येतेति. M ins. च (before कर्मेति). [b]) C °भिन्नेः. C गताश्ववववत्. ACDH °स्वभावा°. M °देशो न वि°. BL कर्मणः AH सत एव. B ins. इत्येकत्वात् (before स्वतः). L ins. इत्यर्थात् (before स्वत ). D निर्वर्त्ये°. ACDH विशेष्याह. C वैरूप्य. B अन्येषु प्र°. C प्रवर्तन्ति. M प्रवर्तंत. C °जिक इ°. M ins जातिः (before प्रयो°). C एतव; D एतच्चा जा°. ADH जात्यभि°. C जात्यभिधानं. C °पक्षेषु पचारात्. C साधत्वं. [c]) D त द्रव्यस्य. B साधनजा° L साधनं जा°.

का. २८. C ना प्र°. C पतयाश्रिहा°.

(71) [a]) C जाते. ABCDHM कृतशास्त्रार्थो HM °दित्याद्यपि; L °दिति प्रति° D °दनुसाने. B तथा प्य°. C °नुष्टीत°. L om. विरुद्धक्रियाचरणात्. C °याकार° D तदा वा

[b]) ‘ नाकारणानि विधिं बाधन्ते प्रतिषेधस्तु क्रियां निर्वर्तयति ’

इति । तस्माद्यदा यदा हननबुद्धिरुत्पद्यते तदा तदा प्रतिषेधः सर्वत्र ब्राह्मणजातौ व्याप्रियते । अत्र च जात्यवच्छिन्नकर्तव्यताप्रतिषेधावभासस्य सङ्कल्पस्यानुष्ठेयत्वम् । इत्थं प्रवृत्तिनिवृत्तिमये पुरुषार्थे सर्वत्र जातेरुपयोगो दर्शितः । अनुष्ठानस्य प्राधान्यात्तदङ्गम्—

‘ पराङ्गभूतं सामान्यं युज्यते द्रव्यसंख्यया ’ ( III. जा. ८२ ).

इति वक्ष्यमाणन्यायेन । [c]) सङ्ख्याविवक्षामत्राह “ **व्यक्त्याश्रिता** ” इति । व्यक्तिं द्रव्यमाश्रिता या एकत्वसङ्ख्या तदाधारा या जातिः आश्रयभेदभिन्नेष्वेकत्वगुणेषु प्रत्ययानुवृत्तिनिमित्तं सा प्रातिपदिकवाच्यां द्रव्यजातिकार्थसमवेतसमवायादवच्छिनत्ति । जातेः पदार्थत्वे विभक्तेरपि संख्याजात्यभिधायित्वात् वास्तवेन च रूपेण **संख्याजातिविशेषिका** । शाब्देन तु प्रत्ययार्थस्य प्राधान्याद्विशेष्यासौ । [d]) एवं चैकत्वसङ्ख्याया अत्र विवक्षितत्वान्न युगपदनेकव्यक्तिविषयमनुष्ठानं चोदितम् । सत्यपि जातिपदार्थत्वे एकस्यामपि च व्यक्तौ सर्वात्मना परिसमाप्ता जातिरिति न काचित्क्षतिः । कामनाहेतुकश्च विधिरिति सत्यां कामनायां व्यक्त्यन्तरेऽप्यनुष्ठानाविरोधः । एवं प्रतिषेधेऽपि हननबुद्धिनिमित्तमिति तदुत्पत्तौ सर्वत्र तत्प्रवृत्तिः । तदेवं जातेः पदार्थत्वे चोदनासूपपत्तिः । यदाह वाक्यकारः—

‘ धर्मशास्त्रं च तथा ’ । ( Vā. on P. I. 2.64 )

इति [e]) ननु जातिरेव पदार्थ इत्यवधारणानुपपत्तिः, तस्याः स्वाश्रयसमवायावियोगात् । अत एव चासां कार्यसिद्धेः कारणानामाश्रयेषु प्रतिनियतेषु भाव इत्याश्रयादुत्कर्षयितुमशक्या जातिः केवला कथं शब्देनाभिधीयत इत्याशङ्क्य दृष्टान्तेनैतदुपपादयितुमाह—

**यथा जलादिभिर्व्यक्तं मुखमेवाभिधीयते ।**
**तथा द्रव्यैरभिव्यक्ता जातिरेवाभिधीयते ॥ २९ ॥**

---

[b]) B नका° ; H नाकरणानि. C बाधन्त. C क्रिया नि°. A and all MSS have निर्वर्तयति, but निवर्त° is what is required. M तथा यदा. C om. the second यदा. C °च्छिन्नप्रति°. B पुरुषार्थः ADH °न्यान्तदङ्गम्. C °भूतेषु सा°. B °भूतामान्यं. L °ङ्गतसा°. A has full stop after इति. [c]) CD व्यक्ति द्र°. L व्याक्तिमाश्रि°. M व्यक्तिर्द्र°. B °नुव्यक्तिनिमि°. A °वाच्यम्. M °जातिकार्थ°. ADH शब्देन. B जात्येन. [d]) M °पदाथ ए°. LM om. च ( before व्यक्तौ ). C न काचित् D कृतिः. C °कश्चिद्वि°. B असत्या; L सत्यका°. D यवं प्र°. B °ष्ठानवि°. LM वार्तिककारः. [e]) C °याविरोधात्. ADH यासां. D कर्य°. AH om. प्रतिनियतेषु. D °भिधायत.

का. २९, D जाला °. L युक्तं. D °भिधायते B °भिव्याक्तिः.

(72) [a]) प्रतिबिम्बे भावान्तरोत्पत्तिः

'विरुद्धपरिमाणेषु' (Vāk. b. I. 100)

इत्यादिना पूर्वं निराकृतेति मुखादिप्रतिबिम्बमादर्शादौ भ्रान्त्यापि दृश्यमानं मुखशब्दाभिधेयमादर्शादिव्यञ्जकरहितं शुद्धम्। एवं शब्दोऽपि जातिं व्यक्तिरहितामभिदधाति। [b]) अयमाशयः—आश्रयसमवायावियोगेऽपि सर्वत्राभेदात्सङ्केतोपपत्तौ जातिः शब्दाभिधेया शुद्धा, शाब्दे ज्ञाने तथा प्रतीतेः। ऐन्द्रियके तु ज्ञाने विवेकानवसायाद्द्रव्यवत्तु जातिव्यक्त्योः संमूर्च्छिताववभासः। शब्दस्य तु यथासङ्केतं प्रतीतिहेतुत्वे न काचित्क्षतिः॥ २९॥

यद्येवं शब्दादप्रतीयमाना व्यक्तयः कथं शब्दज्ञानविषयतया जातीर्विशिंष्युरित्याशङ्क्याह—

**यथेन्द्रियगतो भेद इन्द्रियग्रहणादृते।**
**इन्द्रियार्थेष्वदृष्टोऽपि ज्ञानभेदाय कल्पते॥ ३०॥**
**तथात्मरूपग्रहणात् केषांचिद् व्यक्तयो विना।**
**सामान्यज्ञानभेदानामुपयान्ति निमित्तताम्॥ ३१॥**

(73) [a]) शब्दाद्युपलब्ध्यन्यथानुपपत्त्यानुमितसत्त्वानीन्द्रियाणि नित्यपरोक्षत्वादनुपलभ्यमानस्वगतचक्षुःश्रोत्रादिविशेषाणि शब्दस्पर्शरूपरसगन्धेषु **इन्द्रियार्थेषु** चाक्षुषादिप्रत्ययविशेषहेतुभावं नियमेन प्रतिपद्यन्ते। न हि चाक्षुषं ज्ञानं श्रोत्रेन्द्रियकार्यम्। [b]) एवमगृह्यमाणस्वभावा व्यक्तयः। शब्देनाभिधानवेलाया **केषांचिद्** एव **सामान्यज्ञानभेदानां** काश्चन प्रत्यक्षप्रत्ययानामिवोपयान्ति हेतुता **व्यक्तयः**। शाब्दे प्रत्यये शब्दार्थभूताना सामान्याना वस्तुतः समवायनियमात् विशेषमावेदयन्तीति न साङ्कर्यं

(72) [a]) C °माणेष्वित्या°. B °मानमु°. C °शब्दोभि°. D °रहिते. LM °दर्शाभिव्य°, [b]) C सर्वत्रमे°. C शाब्दोज्ञा°. AD प्रतीयते. C ऐन्द्रीयके. B विवेकावसा° C °वसाया. M om. जातिव्यक्त्योः...क्षतिः। B °व्यक्तेः BM °र्च्छितोऽवभा° ACDH शब्दे तु. [c]) M om. यथैवं ...विषयतया. A यथैव B शब्दाभासप्र°. C जातिर्वि° LM °रित्याह.

का. ३०. ३१. H °यमनोत्रे° C दृतः. CD °र्थेप्य° HD पद्द्वयो.

A. व्यक्तये. C व्यक्तयां. C °भेदायामु°. C °त्तत्वम्।

(73) [a]) A शब्दा युगपदुप°; H शब्दाद्युगपदुप°. C °ध्यनुमन्यानु°. B °मितिसं°. ACD °क्षत्वानुप°. B °मानावगतच°. M °दिविशेषप्रत्ययमहे° C °येहेतु°. C °पद्यने. C श्रोत्रंन्द्रियंका° C °चिद्देव. C काश्चन. M सामान्ये ज्ञा° ADH °नामिहोप°. D हतुता. D व्यक्त्यः. B ins. पुनः (before शाब्दे) C प्रत्यय. C °र्थप्रत्ययाना C °वायमिवमात्. D समवायनि°. C °मावदय°. B om. न (before साङ्क°)

शब्दार्थ इत्यर्थः । [c]) अगृह्यमाणस्यापि तदानीं व्यक्तिरूपस्यान्यदा प्रत्यक्षकाले गृहीतत्वाद् व्युत्पन्नसंबन्धस्यापि तद्विषयावसायाविरोधात् संप्रत्यगृह्यमाणस्यापि दृष्टं प्रतीतिविशेषहेतुत्वमिति । एतावता साम्येनात्रेन्द्रियाणि दृष्टान्तः । 'केषांचित् सामान्यज्ञानभेदानाम्' इत्यर्थात् काश्चनैव व्यक्तयय इति लभ्यते । [d]) तदेवं केवलं जात्यभिधानपक्षः समर्थितः । तद्वदभिधाने तु न कश्चिद्दोषः, जात्युपरक्ते द्रव्येऽभिधाविश्रान्तेर्विरम्य व्यापाराभावात् । द्रव्यपदार्थनये तु जातिरनभिधीयमानैवोपलक्षणमभेदेन सङ्केतार्थं द्रव्यस्येति तत्रैव क्रियायोगोपलब्धेः शब्दवाच्यत्वम् । यथोक्तम्—

'चोदनासु च तस्यारम्भात्' (Vā. on P. 1.2.64)

इति । ३०, ३१ ॥

इदानीं यदुक्तं प्राक्

'सर्वशक्त्यात्मभूतत्वमेकस्यैव' ( Vāk. III. जा. २२ )

इति, अत्रापि मते जातिव्यक्तिप्रविभागमाह—

**सत्यासत्यौ तु यौ भावौ प्रतिभावं व्यवस्थितौ ।**
**सत्यं यत्तत्र सा जातिरसत्या व्यक्तयः स्मृताः ॥ ३२ ॥**

(74) [a]) अविद्याप्रवृत्तिरूपस्य सर्वपदार्थेष्वागमापायिनोऽसत्यत्वाद् व्यक्तिरिति व्यवहारः ।

'तदेव हि सत्यं यस्मिंस्तत्त्वं न विहन्यते' (M. Bh. on Vā. 1. । (पस्पशाह्निक) इत्यन्वयिरूपं भेदप्रत्ययेष्वबाध्यमानं **सत्यं जातिः'** इति व्यवहृतमद्वैतिभिः । तद्यथा—रुचकस्वस्तिककुण्डलादयो विकाराः परस्परोपमर्देन भवन्तोऽस्थिरप्रत्ययविषयाः, सुवर्णमित्येव तु सत्यमन्वयिविज्ञानावसेयसतत्त्वम् । [b]) एवमभेदान्तरविवक्षाया तेज इत्येव सत्यम् । तत्राप्यभेदस्तत्कारणमित्यन्त्या परा प्रकृतिः सत्या सर्वविकारानुयायिनी प्रशान्तकल्लोला चिदेकघना ब्रह्मेत्यागमविदः । तदुक्तम्—

---

[c]) B °तत्वाष्यु°. M °न्धस्य तद्वि°. B अभावता. ACDH सामान्येन. D °नान्वेन्द्रि°. C दृष्टात. C °ज्ञाने भे°. A काश्चन नैव. B लभ्यन्ते. [d]) BL केवलजा°. ADH जात्युपलक्षिते. C द्रव्यभिधायिश्रा°. ACDHL °यमानैवमुप°. C om. यंदुक्त प्राक्. D अप्रापि.

का. ३२. C भागौ. C भागं. C संतं यत्य सा.

(74) [a]) ADH °द्याघृत्ति°. H ins. भेदस्य (before सर्व°). D ३न्यथि. D भेदेश्रंप्र°. ADH अद्वैतवादिभिः. M तथा. C विकरा. C °रमपमर्देन्तु. M °मर्दनेन. CD स्थिर प्र°. ACDH समन्वयिविज्ञानादव°. [b]) DH करतेज इ°. C तत्करणमित्यात्मा. L तत्करण°. C ज्ञानं ज्ञाने. C om. ओं अथ तद्.

‘ पृथिवीधातौ किं सत्यम्, विकल्पः, विकल्पे किं सत्यम्, विज्ञानम्, विज्ञाने किं सत्यम् ॐ अथ तद्ब्रह्म । ’

इति । [c]) **प्रतिभावम्** ’ इति । परमतेन वस्तूनां भेदाद्वीप्सा । चित्सामान्यस्य सर्वत्रानुगमादेव महासत्तारूपमभावप्रतियोगि विश्वस्य जगतः सत्यरूपमवदातदर्शनैः साक्षात्कृत्योपदिष्टम् । प्रमाणं नस्ते भगवन्तः ॥ ३२ ॥

[d]) इत्थं चात्राद्वयनये परमार्थसत्यैकैव जातिर्महासत्ताख्या परब्रह्मस्वभावा, तस्या एव गोत्वादिजातिभेदेन विवर्ते व्यवहार इत्याह—

**सम्बन्धिभेदात्सत्तैव भिद्यमाना गवादिषु ।**
**जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः ॥ ३३ ॥**

( 75 ) वक्ष्यमाणैराश्रयादिभिः स्वसंबन्धिभिः**भिद्यमाना** उपचरितभेदा गवाश्वादिषु **सत्तैव** महासामान्यमेव **जातिः** गोत्वाश्वत्वादिका, अपरसामान्यम्, नान्या परमार्थभिन्ना सा विद्यते । तथा हि गोः सत्ता गोत्वम्, नापरमन्वयि प्रतिभासते । एवमश्वस्य सत्ता अश्वत्वमित्यादि वाच्यम् । **तस्याम्** एव च गवादिभेदभिन्नायां सत्ताख्यायां जातौ **सर्वे** गवादयो डित्थादयश्च **शब्दा** वाचकत्वेन **व्यवस्थिताः** इत्यसाङ्कर्येण नियतोपाधिवशाज्जात्यभिधायिनः सिद्धाः ॥ ३३ ॥

सर्वशब्दविषयत्वमेवाभिव्यनक्ति—

**तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते ।**
**सा नित्या सा महानात्मा तामाहुस्त्वतलादयः ॥ ३४ ॥**

( 76 ) [a]) सर्वभावेषु सद्रूपं सामान्यमनुगतम् । अभावस्यापि बुद्ध्याकारेण निरूपणात्, महासत्तयानयावियोगात् प्रातिपदिकमात्रवाच्या सत्ता । तदुक्तम्

प्रातिपदिकार्थः सत्ता ’

---

[c]) C पृथिप्रतिभा°. C परमते. भावा भे°. ADH भावानां. A वीप्सायां. CBL om. सर्वत्र. ADH °मभावाप्रति°. B °मभातद्°. ADH भगप्रमाणं. AH नमस्ते भगवतः. D भगभग°. AH ins. इति ( after भगवंतः ). [d]) C °त्राद्वैतन°. A °र्थसत्ये सैव. B परमन्न°. M गोत्वादिभे°. B व्यावर्ते.

का. ३३. C सहैव.

( 75 ) C °भिमानोपचितये°; B सिद्ध्यमानो°. C गोसता. C प्रविभा°. C सता भवस्यत्व°. C रित्थादय. D क्वात्थभि°. M सिद्धात. C °यत्वेमवाभि°व्यनक्तिः.

का. ३४. ADH प्रतिपदि° धात्वर्थज्ञ. C प्र°. D om. धात्वर्थं च.

( 76 ) [a]) L तद्रूपं. C °सतायावि°, B °नयापि यो°. C सता. C धातोरपि. C °लब्धोजन्मसु. C समवेत. C यथापाधि°. C °नानात्वात्. C °धेयधायकमा°. DH °धेयकमा°. LM °वेयतामा°. ACDHM °मापद्यते.

इति । धातुभिरपि साधनाधीनलब्धजन्मसु क्रियाव्यक्तिषु समवेता यथोपाध्युपगृहीतनानात्वा सत्तैवाभिधेयत्वमापाद्यते । [b]) सिद्धसाध्यरूपार्थद्वयात्मना च तस्या एव वृत्तेस्तदपराश्रयभावात् सर्वशब्दविषयत्वं सत्तायाः । प्रत्ययभागेनाप्यत्र यथायथं सङ्ख्याकारकाद्युपाधिविशिष्टा सत्तैवाभिधीयते । **सा** चोदयव्ययरहितत्वात् **नित्या,** सत्प्रत्ययस्य सर्वदानुवृत्तेः । [c]) एते सत्तामात्रस्यात्मनो महतः षड् विशेषपरिणामाः, यत्तत्परं विशेषेभ्यो लिङ्गमात्रं महत्तत्वम् , तस्मिन्नेते सत्तामात्रे महत्यात्मन्यवस्थाय विवृद्धिकाष्ठामनुभवन्ति । प्रतिसंसृज्यमानाश्च तस्मिन्नेव सत्तामात्रे महत्यात्मन्यवस्थाय यत्तन्निःसत्तासत्तं निःसदसदव्यक्तमलिङ्गं तस्मिन्प्रतियन्तीत्येवं साङ्ख्ये बुद्धितत्त्वं महच्छब्दवाच्यमाद्यं जगत्कारणं निर्दिष्टमित्यतोऽनन्तरस्य विकारग्रामस्य कारणरूपानुगमात्सत्तारूपत्वमविरुद्धमिति सत्तारूपं सर्वं जगदाख्यातं भवतीति सत्ताद्वैतवादः साङ्ख्यनयेनाप्युपबृंहितः । [d]) एवं च सर्वशब्दवाच्या सत्ता शब्दप्रवृत्तिनिमित्तभूतेति यथायथं भिन्नोपाधिभावप्रत्ययाभिधेया सैव । नन्वेवं गोत्वमिति प्रकृतिप्रत्यययोरेकार्थताप्रसङ्गः । नैतत् । उपाधिभेदेन सत्ताया भेदात् । प्रातिपदिकेन गवाश्रयायास्तस्या अभिधानम्, प्रत्ययेन तु निष्कृष्टाश्रयस्य सामान्यस्याभिधेत्यदोषः । प्रकृत्यर्थनिमित्तश्च भावप्रत्ययभेदः इति न साङ्कर्यप्रसङ्गः ॥ ३४ ॥

यदुक्तम्—

'तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते' ( Vāk. III. जा. ३४ )

इति । एतदेवोपपादयितुमाह—

**प्राप्तक्रमा विशेषेषु क्रिया सैवाभिधीयते ।**
**क्रमरूपस्य संहारे तत्सत्त्वमिति कथ्यते ॥ ३५ ॥**

(77) [a]) क्रियावाची धातुः सत्त्ववाचितामेति । गीयते क्रियासत्त्वे च सत्तैव । तथा हि—साधनपरिस्पन्दवशात्क्रियाणा व्यक्तिस्थानीयाना विशेषशब्दवाच्याना पौर्वापर्ये

---

[b]) ADH व्यावृत्तेः. B निवृत्तेः; M विवृत्तेः. D °परणयभा°. C °षयात्वं सतायाः. L °भागे याप्यत्र. C स चो°; D स चौ. C°त्ययास्य. [c]) A यद्विशेषाः परि°. D षड्विशेषपरिमाणाः. ADH यतः परं. C यात् परं. B महत्वात्मनि. C वृद्धिका°. A °द्धिकार्थम°. ADHL तस्मिश्च. C यन्निःसक्तासतासदससहद°. M om. सत्तासत्तं (after यन्निः). M om. निः (before सद°). C om. साख्ये. C °द्धिमत्वं. B °कारणविशिष्ट°. D °रग्रासस्य. C om. इति (before सत्तारूपं). B om. सत्तारूपं...भवतीति. ADHL °नाभ्युपवृं°. [d]) C सता. B यथा भिन्नो°. M °पाधिर्भाव°. C °मिति प्रत्ययोरे°. L °तिप्रत्ययार्थयो° C °र्थता प्रसक्ता. A क्रियाविभेदेन. C गवाश्रयेनया L प्रकृत्यर्थ निमित्तं च. M °मित्तस्वभाव. C साङ्कर्ये प्र°. C ता प्रति°.

का. ३५. C °क्रम. D °धायते.

(77) [a]) BC °वाचीना°; DL °वाचिना°. C °सत्वैव. C साधलप°. D °षसहवा°. C °पर्येण. C जोतयाथातश्चत्वेन. A साक्षात् सत्ताख्या क्रि°. BDH साक्षात्संक्रमा क्रि°. C साक्षात् क्रि°.

तद्गतापि जातिस्तथात्वेन प्रतिभासत इति सैव सक्रमा **क्रिया** सकलधातुविषया। तस्या एवावान्तरो धात्वर्थभेद इत्यनन्तरमेव वक्ष्यते। [b]) साधनसम्पर्कहेतुकप्रतायमानरूपापरामर्शो सत्तैव **सत्त्वं** द्रव्यमित्युच्यत इति सिद्धसाध्यरूपो द्विधा विवर्तः सन्मात्ररूपस्य परस्य ब्रह्मणः प्रतिपादितः। तदेव हि सर्वत्रानुगतम्। न चात्र दर्शने सद्भ्यः सत्ता व्यतिरिक्ता भावत इति सर्वं तन्मयम्। ततश्च सर्वशब्दाना सत्तावचनत्वाज्जातिपदार्थव्याप्तिः। [c]) यद्यपि च द्रव्यपदार्थेऽपि ब्रह्मद्रव्यस्याभिधानमुपाधिभेदभिन्नस्य वक्ष्यति तथापि तात्पर्यभेदादवस्थाभेदः। जातिपदार्थे सर्वत्रान्वयिरूपं जात्यात्मना ब्रह्म विवक्षितम्। द्रव्यपदार्थनये तु परिनिष्ठितरूपं परमार्थतयेति दर्शनविकल्पः। अयमेव च पक्षद्वयेऽप्येकपक्षीभावरूपः सिद्धान्तः परमार्थदृष्ट्या। अत्र सर्वपार्षदत्वात्पुनरस्य शास्त्रस्य दर्शनान्तरोपन्यासः। एव च सर्वत्रैवास्य ग्रन्थकारस्याभिप्रायः, पदार्थचर्चाविषये ब्रह्मदर्शननयेनैव संबन्धादिविचारे विनिगमनात् ॥ ३६ ॥

इदानीं समग्रः क्रियाकलापः सत्ताविवर्त एवेति निरुक्तकारमतेन संवादमाह—

**सैव भावविकारेषु षडवस्थाः प्रपद्यते।**
**क्रमेण शक्तिभिःस्वाभिरेवं प्रत्यवभासते ॥ ३६ ॥**

(78) [a]) 'षड् भावविकारा भवन्तीति ह स्माह भगवान् वार्ष्यायणिः' (Ni I. 2.8)

इति निरुक्तकारः। तत्र च भावस्य परमार्थरूपस्य सत्तात्मकस्य जन्मादयो विकारा इत्यर्थः। सन्मात्रस्वभावा हि सत्तोत्तरोत्तरविकारापत्तौ

'जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यति' (Ni. I. 2.9)

इति व्यपदेशमासादयति। [b]) प्रथमतरं च सन्मात्रं रूपमस्तिशब्देन नाभिधीयते अपि तु जन्मोत्तरकालभावी तस्या अवस्थाविशेषः। जन्मानन्तरभावि हि रूपं

---

[b]) B °संपत्तिहे°. D °संकर्महे°. ACDH °कर्प्रतीयमान°. L °पपराम°. C परः ब्रह्मणः C साद्भिः. D सद्ध्यः. C भाव इति. [c]) L om. च (after यद्यपि). C °भिघामुपा°. C सर्वत्र comes after जात्यात्मना. C पारिशिष्टस्वरूपं. H om. परमार्थतयेति. A °कल्पाश्रयमेवं च प°. C °कल्पा अय°. M °भावः सि°. C °दत्वापु°. C एवं च स°. D सर्वस्यवास्य. C नयेनैवं. BL विनिगमात्. CM °रेऽपि निगमनात्.

का. ३६ C भावेविका°. AH शक्तिभिस्ताभिः

(78) [a]) C संभवन्ति. L om. भगवान्. H निरुक्तः कारः. D° रूपस्ये. C विकारः इत्यत्र. C स्वतोतरोत्त°. M सत्तोत्तरवि°. BL °त्तरवि°. [b]) C प्रथमं ऋरस्य. स°. L °तरश्च C °मस्तोश°. M °शब्देना°. C शब्दोत्तरका°. C भीरूपा तरस्या लोके सति व्यवहार्यं। C व्यवस्थार्याः L परिणमते. B विपरिणामं मु°. C विपरीमन. D मुहूर्तमपि. C ins. नावर्तिमपि (after मुहूर्तमपि). B वर्धित ततो. M नाश.

तस्या लोके सदिति व्यवहार्यम्। ततः प्राक्पश्चाद्भाविन्यः पुनरवस्था जन्मविपरिणामादिरूपेण व्यवहार्याः। तथा हि—स्वशक्तिमाहात्म्यात्पूर्वं जायत इत्यवसीयते पश्चादस्तीति। अवस्थितस्य विकारापत्तिरिति विपरिणमते। तच्च विपरिणमन्मुहूर्तमपि नावतिष्ठते इति वर्धते यावदनेन वर्धितव्यम्, ततोऽपक्षीयते मुहूर्तमप्यनवस्थानादेव। अत एवोक्तं—

'ततोऽपायेन युज्यते' (M. Bh. on. P. 1.4.51)

इति। ततोऽपि विनाश इत्येवं क्रमस्थितिः। [c]) एवंभूतास्तस्याः काश्चन शक्तयो विद्यन्ते येनैकैव सती तथा तथा विचित्रेण रूपेण प्रतिभासते। न च परिणतिदर्शनाभिप्रायेणायं विकारशब्दः, अनित्यत्वप्रसङ्गात, अपि तु विवर्तपर्यायोऽयम्। तथा हि—सर्वशक्त्यात्मभूतत्वाद्ब्रह्मणोऽनेकविकारप्रदर्शनसामर्थ्यलक्षणा अविद्याख्या शक्तिः कार्यभेदादुपचरितनानात्वा समस्तीत्यागमविदः। इत्थं च स्वाभिरेव शक्तिभिरव्यतिरिक्ताभिर्जन्मादिरूपतया अविद्यायामाभासते। तदेव ब्रह्म सर्वभावेषु समानरूपं सत्तात्मकमन्यस्य तद्व्यतिरिक्तस्याभावादित्येषोऽत्रार्थः॥ ३६॥

यदि तर्हि स्वशक्तिमाहात्म्याज्जन्मादिरूपतया सत्तैवावभासते कथं न युगपदवभासः। क्रमेणेति कथम्? न हि क्रमो नाम कश्चित्क्रियाविशेष इत्याशङ्क्य कालाख्यापि शक्तिर्ब्रह्मण एवेत्याह—

**आत्मभूतः क्रमोऽप्यस्या यत्रेदं कालदर्शनम्।**
**पौर्वापर्यादिरूपेण प्रविभक्तमिव स्थितम्॥ ३७॥**

(79) [a]) योऽयं क्रियाणां क्रमः सोऽपि **आत्मभूतोऽस्याः** सत्तायाः। न केवलं ताः क्रिया एव, क्रमवद्भ्यो व्यतिरिक्तस्य क्रमस्यासञ्चेतनात्। **यत्र** क्रमे **इदं कालदर्शनम्,** कालं नाम पदार्थान्तरं तीर्थिकाः पश्यन्ति **पौर्वापर्यादिरूपेण प्रविभक्तम्।** कालस्य प्रविभक्तत्वाद्दर्शनमपि प्रविभक्तमित्युक्तम्। तात्पर्येण तु कालः पौर्वापर्यादिरूपेण प्रविभक्त इव क्रियोपाधिवशात्। [b]) क्रमाख्या हि कालशक्तिः ब्रह्मणो जन्मवत्सु पदार्थेषु जन्मादिक्रियाद्वारकमेव पौर्वापर्येणावभासोपगमविधायिनी नापरो द्रव्यभूतः काल इति

[c]) C कांश्चन. D श्चन. C सति. L om. one तथा. B सर्वशक्त्यात्म°. C °भूतत्वो. C न ते यु°. ACDH एवेत्याशङ्क्याह.

(79) [a]) H om. योऽयं. C पौर्वापर्येण प्र°. C °भक्तस्यादर्श°. CL पर्येण प्रवि°. [b]) C क्रियाख्या. BL नामपरो द्र°. B °कलाय. L अध्यादिकाला. L येननय इत्यत्र. H °प्रभार्यानि° B नाशस्य भातात् स°.

'अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः ।
जन्मादयो विकाराः षड् भावभेदस्य योनयः ॥ (Vāk. I. 3)

इत्यत्र **शब्दप्रभायां** निर्णीतोऽयमर्थः ॥ ३७ ॥

ननु च जन्मनाशावस्तुत्वात्कथं सत्तात्मकौ स्यातामित्याशङ्क्य नाशस्य तावत्सत्तात्मकत्वमुपपादयति––

**तिरोभावाभ्युपगमे भावानां सैव नास्तिता ।**
**लब्धक्रमे तिरोभावे नश्यतीति प्रतीयते ॥ ३८ ॥**

(80) [a]) अनपायोपजनविकारित्वान्नित्या ब्रह्मात्मिका सत्ता निरन्वयविनाशासहेत्यभावो नाम न भावाद्यतिरिक्तः । केवलं प्रागूर्ध्वं च तिरोभावमात्रं भावावभासस्य यदस्माभिरभ्युपगम्यते **सैव नास्तिता** कथ्यते । सत्तैव तिरोभूता स्वकारणेषु शक्तिरूपतयावस्थिता वस्तूना नाशो न तु निरुपाख्योऽसौ । समस्तेषु च भावेषु तिरोभूतेष्वपसंहृतक्रमः सिद्धरूपः 'तिरोभावो नाश' इत्यादिनामपदप्रत्याख्यः । [b]) यदा तु सैव नास्तिता तिरोभावावस्थारूपा साधनसम्पर्कवशात्प्रतायमानस्वभावा विवक्षिता तदाख्यातपदप्रत्याख्या । पूर्वावस्था 'अपक्षीयते' इत्युच्यते, तदुत्तरा तु 'विनश्यति' इति द्वौ भावविकारौ प्रातिलोम्यपरिणामलक्षणौ । तत्र च भवनधर्मणो भावस्याभवनविरोधात्तिरोभावमात्रं विनाशः ॥ ३८ ॥

एवं सत्ताप्रतियोगिनोऽपि प्रथमं तद्विकारत्वमवस्थाप्य जन्मनस्तद्विकारत्वं व्याचष्टे––

**पूर्वस्मात्प्रच्युता धर्मादप्राप्ता चोत्तरं पदम् ।**
**तदन्तराले भेदानामाश्रयाज्जन्म कथ्यते ॥ ३९ ॥**

(81) [a]) कारणे शक्तिरूपेणावस्थानाख्यात्पूर्वधर्मात्**प्रच्युता,** धर्मान्तराभिव्यक्तिप्रगुणां निष्ठाम् **अप्राप्ता** सत्ता, गृहीतक्रमा कार्याभिमुखोत्तरोत्तरावस्थाविशेष-

---

का. ३८. C तिराभावो.

(80) [a]) CD अनयायो. L निरवयवविनाशं सहे°. B भावाव्य°. H ऊर्ध्वता च. L भाववदभासस्य. M तिरोभावावभासस्य. C यदास्मा°. C स्वरकार°. C नामशङ्त्या°. [b]) CDH °र्कवशप्र°. ACDL °वशात् प्रतीयमा°. B °भावविव°. C द्वावेवविकारो. C °लक्षणे. CM अत्र. C भावस्य वि°. ADH भावस्य भव°. C विनाशाः. C शताप्र°. C कारजन्मावस्याज°. M °कारमवस्था°. C °कारात्मत्वं.

का. ३९. C °दप्राप्तां चोत्तरां. C पदन्तराले धर्मा°.

(81) [a]) B करणे C कारणेन. C °रूपेणवस्था°. AH धर्मोत्तरा°. B °व्यक्तिगुणनि°. C संत्ता C °खोत्तरोवस्था°. C नासतो. L सोऽत्यन्तं. C अत्यंत M नाशः. M °पूर्वस्याभावः. BL भाेव नै°. B नैवेति.

मासादयन्ती जायत इति व्यपदिश्यते, न त्वसत एवोत्पादो जन्म। तद्यथा न सतोऽत्यन्तं विनाशः तथा जन्मापि नाभूतपूर्वस्याविर्भावः। एतच्च

'नाभावो जायते भावो नैति भावोऽनुपाख्यताम्' (Vāk. III सं. 61)

इत्यादिना प्रकटयिष्यति। [b]) अत एव चावस्थामात्रत्वात्कार्यकारणयोरभेदाद्यथाविवक्षं जनिक्रियाकर्तृत्वोपपत्तिः 'अङ्कुरो जायते' इत्यादौ। एतच्च निपुणतरं कारकसमुद्देशे वक्ष्यते। पूर्वापरावस्थान्तरालवर्तिक्षणपरम्पराक्रमविवक्षायां च जनिक्रियान्वयो न परिनिष्ठावस्थायाम्। तथा च वक्ष्यति—

'पूर्वावस्थामविजहत्संस्पृशन् धर्ममुत्तरम्।
संमूर्छित इवार्थात्मा जायमानोऽभिधीयते॥ (Vāk. III. सा. 117)

इति। [c]) उत्तरावस्थायाश्च पूर्वावस्थासु समारोपात्कर्तृत्वम्। व्यापृतं हि कारकं निरूपयन्तो जायत इति व्यवहरन्ति। निष्ठायां पुनरस्तीति जन्मोत्तरकाला सत्ता व्यपदिश्यते। ततोऽपि धर्मान्तराविर्भावोन्मुखतायां विपरिणमते। तत्रापि वृद्धौ वर्धत इति जन्मविशेषा एवैतेन पृथगुपात्ताः। तदयमानुलोम्यपरिणामः। तदेवं सत्तैव क्रियाविवर्तान्वयिनी। षण्णामेव ह्यपरः क्रियाभेदः सर्वधातुविषयः। तत्रैव च सिद्धरूपतायां द्रव्यता। सिद्धिर्हि निष्पत्तिरिति क्रिया पूर्वभाविनी नात्यन्तमर्थान्तरभूता॥ ३९॥

अथ यदुक्तम्—

'संबन्धिभेदात्सत्तैव भिद्यमाना' (Vāk. III. जा. 33)

इति, तदिदानीं संबन्धिनः प्रदर्शयितुमाह—

**आश्रयः स्वात्ममात्रा वा भावा वा व्यतिरेकिणः।**
**स्वशक्तयो वा सत्ताया भेददर्शनहेतवः॥ ४०॥**

(82) [a]) क्रियाद्रव्ययोः सत्तात्मकत्वप्रतिपादनात् तद्व्यतिरेकेण वस्त्वन्तराभावाद् यद्यपि सर्वं सत्तात्मकपरब्रह्ममयम्, तथापि व्यवहारेऽविद्याप्रवृत्तिरूपे यथावभासं

---

[b]) C पूर्वावस्थान्तरालक्षणपरम्पराविं°. B °वर्तित्वंन परम्परा° परम्परा°. M °रालक्षणवर्तिप°. AD न उपरिष्ठादव°. ADH °पूर्वामवस्थामजहत्. LM °शद्धर्ममु°. D °मुत्तरा. C समुर्च्छित°. [c]) C °वस्थासमुमा°. D °वस्थामस°. H °वस्थानु. M °वस्थाया. L कर्त्रीत्वं. M कर्तृत्वे. C नीष्ठायां. D निष्ठायां C जन्मान्तरका°. M तदेवमानुलोम्पेविंपार° C °परिणामाः C तदेवं. AD स्वपरः क्रि°. H °मेव त्वपरः. C सिद्धताया. ACDH सबन्धिनं दर्श°.

का ४०. C आश्रय. C om वा (before and after भावा). C स्वशक्त्यां वा सतायां.

(82) [a]) C मर्वस°. C °त्मकं प°, M °त्म कब्रह्म° C °हारे वि°. C मथार्थवभा°. C °भासः. L भेदस्य स° ACDH प्रतिभागे. C तत्राश्रयसताया° C स्ववारो. C om भेदावभासस्य. M भेदस्येव. ACDH भावतो. ACD भेदात्.

भेदस्यासत्यस्यानपह्नवनीयत्वाद् द्रव्यादिसत्ताश्रयः प्रविभागोऽयमविरुद्धः । तत्र **आश्रयः सत्तायाः** स्वाधारः व्यञ्जकत्वात्, **भेददर्शनस्य** भेदावभासस्य न तु भेदस्यैव स्वतोऽभेदात् हेतुः । [b]) तद्यथा—एकमपि मुखं तैलोदकादर्शमणिकृपाणादावनेकरूपमवभासते । एवं व्यञ्जकानां गवादीनां भेदात्सत्ता गोत्वाश्वत्वादिरूपतयावभासत इत्यर्थः । स्वात्मीया वा मात्राः कलाः परिकल्पिता भागा अंशा गोत्वादिसामान्यविशेषाः परिच्छिन्नविषयाः सर्वविषयायाः सत्तायाः विच्छिन्नावभासतां दर्शयन्ति, येन तैरेव सा विच्छिन्नेवाविच्छिन्नाप्यवभासते । ते चाश्रयभेदादेव ततः परिकल्पितभेदाः । तथा च—

'सामान्यान्यभिधीयन्ते सत्ता वा तैर्विशेषिता '

इति गोत्वादिभिः सत्ताभेदं वक्ष्यति । [c]) दृष्टश्च स्वांशैरेव परिकल्पितैर्भेदावभासः । तद्यथावयविनः । आत्मा परोऽपि संभवति कल्पनानिर्मितेन भेदेनेति स्वग्रहणेन विशेष्यते स्वश्चासावात्मा चेति । दृष्टश्च काल्पनिको भेदः यथा हन्त्यात्मानमात्मना ' इति । न ह्यात्मव्यतिरिक्तो हन्ता कश्चित् प्रत्यवभासते । अर्थान्तरत्वेनावभासमाना वा देशकालेन्द्रियाद्यो **भेददर्शनहेतवः** सत्तायाः । इहेदानीमिदमन्यत्रान्यदान्यदिति देशादिनिमित्तो वस्तुभेदः । तथा देशासत्तिविप्रकर्षकृतोऽन्यथावभासो वस्तूनाम् । यथाहुः—

' दूरे यथा वा मरुषु महानल्पोऽपि दृश्यते ' ।

इति । तथा रात्रौ नीलोत्पलानामन्यथावभासः, अन्यथाह्नीति कालकृतो भेदः । [d]) तथा काचकामलाद्युपहतनयनाना शुक्ले शङ्खे पीतावभास इति इन्द्रियनिमित्तो भेदः । देशादावपि च सत्तायाः संबन्धिनोऽन्ये भेदका इति विषयभेदान्नेतरेतराश्रयता । तथा चायमत्र परमार्थः—आत्मीया एव शक्तयो योग्यनाख्यास्सत्तायास्तथाविधाः सन्ति याभिर्विश्वप्रपञ्चं रचयति । तद्यथा चिन्तामणिरर्थिना यथाशयमाकारनानात्वमुद्दर्शयति तथानन्तशक्ति सन्मात्रं ब्रह्म अविद्याविलसितसहं सांसारिकप्रमातृविषये नानारूपं चकास्तीत्यन्ते वस्तुसतत्त्वमुद्घाटितम् ॥ ४० ॥

---

[b]) B °भासन्त. BL व्यंजकादीनां; B भेदाः स°. C गात्वा°. M °भास इ° ADH °न्यविषयाः. C °न्यविशेषः. C °न्नसर्ववि° C om. सर्वविषयायाः L सर्वविषयाः C om विच्छिन्नावभासतां; H °न्नाभास°. C दर्शयं. C तेरेव. C °विच्छिन्नेवच्छि- न्नेप्य°. C °भिधीयते. C °भेदे व°. [c]) BM °रेवकल्पि°. B °नानिमित्तेन. ACDH °वात्मेति. C °मात्मेति. C ह्यात्माव्य°. B सत्त या ADH ins. वा ( before इहे° ) M °दान्यदिशिदे°. CM तथा हि. B देशाः सन्तिवि° C यथाहुः याः रूपे. AH महत्सु. C puts रात्रौ after नीलोत्पलादीनां. C °भासः यथा°. BL ins. हरिद्रमन्यत्रान्यदान्यादिति देशादिनिमित्तो वस्तुभेदः तथा ( हनीति ). L कालकृते. [d]) ACDH तथा च कामला°. ADH पीतत्वाव°. CM om इति. C इन्द्रियकृतनि°. B °स्व्या-स्सत्ता°; D °स्व्यात्. ADH यथासंशय°. ADH °त्वं दर्श°; C त्वमुपदर्श°. A °सितसह सा°. C °सह कार्यं सां°. C °वस्तुतः स्वं समुद्धा°. BL स्वदर्शनेन. D °जातेयं यथा°. C चिन्त्यते. M °श्चोच्यते.

इत्थं च दर्शनान्तरोपन्यासपूर्वकं स्वदर्शने जातिपदार्थव्यवस्थामुपपाद्य व्यवहारे भिन्नाया गोत्वादिजातेर्यथासंभवं स्वगतो धर्मश्चर्च्यते—

**पृथिव्यादिष्वभिव्यक्तौ न संस्थानमपेक्षते ।**
**अनुच्छिन्नाश्रयाज्जातिरनित्येऽप्याश्रये स्थिता ॥ ४१ ॥**

(83) [a]) पृथिवीत्वाप्त्वतेजस्त्वादयो जातिविशेषाः प्रतिनियतावयवरचनानपेक्षा एव महति परिमिते चाश्रयेऽभिव्यक्तिमासादयन्ति । तथा हि—लोष्टोऽपि पृथिवीरूपेण प्रतीयते, मृत्समूहोऽपि घटोऽपि पर्वतोऽपीत्यादि । एवं समुद्रोऽपि बिंदुरपि चोदकत्वेन प्रतीयत इत्यादि वाच्यम् । क्वचित्तु गोत्वादिका सालत्वतालत्वादिका च जातिः **संस्थानमभिव्यक्तौ** नियतमपेक्षत एवेत्यर्थादुक्तं भवति । [b]) तथा समवेतत्वेऽपि न गुणवदाश्रयविनाशाज्जातिर्विनश्यति । घटादौ गुणा ह्याश्रयप्रतिबद्धोदयाः युक्तं यदाश्रयविनाशमनु विनश्येयुः । जातीनां त्वाश्रयप्रतिबद्धो नात्मलाभः । केवलं प्रतीतावाश्रयमपेक्षन्ते ताः । [c]) एकव्यक्तिविनाशेऽपि च तदन्यत्रानुगतसंविदन्यथानुपपत्तेरनुमितिसद्भावाज्जातिः समवस्थितैवेति **अनुच्छिन्नाश्रयात्** आश्रयादुच्छेदोऽस्या नायाति, आश्रयोऽस्या नोच्छेदहेतुरित्यर्थः । आश्रयश्च विनश्यन्नुच्छेदहेतुः संभाव्यत इति नाश्रयविनाशादस्या विनाश इत्यर्थः । तृतीयार्थे वा पञ्चमी । आश्रयेण सह न विनश्यतीत्यर्थः ॥ ४१ ॥

ननु महाप्रलये नित्यानां सर्वेषां विनाशादाश्रयाभावे कथं जातयोऽवतिष्ठेरन् इत्याह—

**अनुच्छेद्याश्रयामेके सर्वां जातिं प्रचक्षते ।**
**न यौगपद्यं प्रलये सर्वस्येति व्यवस्थिताः ॥ ४२ ॥**

(84) [a]) **एके** इति । य आधारं विना तासामवस्थानमन्ते नेच्छन्ति त आश्रयोच्छेदो नास्त्येवेत्याहुः । तथा हि—

---

का. ४१. C पृथिव्यादाव्य°. M श्रया° जा°. C जातितिनिष्प्रा°

(83) [a]) CD पृथिवीत्वाजाति°. C °वरचना एव. C मांहति, B मर्हति. C लोष्टा. B om. घटोऽपि...समुद्रोऽपि. C वर्ततो. A मालत्वादिका तालत्वादिका; BH सालत्वकालत्वादिका. C om. साल...दिका. ACDH नियगादये°. C °त्यर्थः तदुक्तं. [b]) ACDH °प्रतिबन्धोदयात्. H अयुक्त. B om. °विनाशात्...ह्याश्रय. इति is required before युक्तं, but neither A nor the Mss have it. C जातिना. ACDH °नां चाश्रयप्रतिबन्धो. C °पेक्षते. [c]) C °यकव्य°. M °नाशोऽपि. B °नुमितसभवा°. L °नुमितस . BL °स्थितेत्यनु°. C स्था नायानि. C जाश्रयो. L आश्रयस्य नो°. C संभाव्येत हेतुः. B °दस्यापिनाश°. H न पश्यती°. M सर्वेषां नित्यानां. L कथ तत्ज्जा.

का. ४२. D °अनुच्छाद्या B मेते°. D सर्वा जाति. DH अयोग°.

(84) [a]) LM °स्थानं ने. B नान्त्येवे°. D सर्वथाच्छे° B °पाये व्यवहाराश्रय°. BL °दिनिमित्तत्व°. ADH °दिपरिमा°. L °दिपु परमा°. B °दयोपिश्रा°. AC °सर्गे च पु°. B सर्वपापप्र°. BL °मते वावस्थि°. C om. एक

'न कदाचिदनीदृशं जगत्'

इति वदन्तो महाप्रलयस्याभावमिच्छन्तः परमाणुत्वादिजातिवद् घटत्वादिजातीनामाश्रयोऽनुच्छेद्यः सर्वथोच्छेत्तुमशक्य इत्याहुः। तथा च सदैव व्यवस्थिता जातयः कस्यचिदाश्रयस्यापायेऽप्यपराश्रयवृत्तित्वादिति नित्यत्वसिद्धिः। अथवा पृथिव्यादौ विनष्टेऽपि पार्थिवादिपरमाणुषु पृथिवीत्वादयो विश्राम्यन्ति, तद्गतेषु च रूपादिषु, रूपत्वादयः। आदिसर्गवत् युगपत्सर्वभावप्रलयो नास्तीत्यस्मिन्मते **व्यवस्थिता एक** इति समन्वयः। [b]) एवं एकस्मिन्नपि ब्रह्माण्डे युगपत्सर्वभावानां प्रलयो नास्तीति दर्शनाश्रयेणोक्तम्। यद्वा ब्रह्माण्डान्तरे विनष्टेऽपि ब्रह्माण्डान्तरस्य संभवाद्युगपत्प्रलयो नास्ति। तथा चाहुः—

अण्डानामीदृशानां तु परिसंख्या न विद्यते।

इति ॥ ४२ ॥

ये तर्हि महाप्रलयमिच्छन्ति तन्मते कथमित्याह—

**प्रकृतौ प्रविलीनेषु भेदेष्वेकत्वदर्शिनाम्।**
**द्रव्यसत्त्वं प्रपद्यन्ते स्वाश्रया एव जातयः ॥ ४३ ॥**

(85) [a]) एकत्वमभेदं मूलप्रकृत्या प्रधानेन सह परब्रह्मणा वा ये पश्यन्ति जगतः, तेषां मते सर्वथा भावप्रपञ्चस्य निरन्वयविध्वंसाभावान्महासामान्यरूपे तत्र परस्मिन्मूलकारणे प्रविलयमात्रं महाप्रलय इति शक्तिरूपेषु पदार्थेषु यथायथं स्वजातियोगस्तदानीमविरुद्ध एवेति द्रव्यात्मना जातीनां तदानीमपि सत्त्वम्, द्रव्यादर्थान्तराभावात्। अत एव सत्त्वमित्येव वक्तव्ये द्रव्यग्रहणं द्रव्यादभिन्नत्वं बोधयितुम्। [b]) यद्वा—द्रव्यं मूलकारणम्, तत्र सत्त्वं तस्य वा यत्सत्त्वम्, कारणसत्तामवलम्बत इत्यर्थः। अद्वैतिनां हि कारणमेवानुगतं सामान्यम्। द्रव्यशब्दो वा वस्तुपर्यायः। तेन द्रव्यसत्त्वं वस्तुन एव विद्यमानत्वं मुख्यं सत्त्वम्, न तूपचरितं साधारणमेव, शक्तिरूपतयावस्थानादित्यर्थः। [c]) वैशेषिकदर्शने तु निराधारा एव घटत्वादिजातयो महाप्रलय आसते। न हि गुरुत्वादधःपतनमासां मा भूदित्याधारः, अभिव्यक्तिमात्रे तस्योपयोगात्। तदानीं

---

[b]) ADH °पद् भावा°. ACDH °न्तरसंभवा°. M संस्तवात्. C तथाहुः. M °सख्या.

का. ४३. BCL प्रतिलीनेषु. C भेदेष्वा°. B °त्वदर्शनम्. M साश्रया. C जातयाः

(85) [a]) AD °त्वमभेदमूलम्, प्र°. D प्रकृत्वा. D निरच्चर्याव°. L निरवर्याव°. M °न्वयध्वं°. C प्रतिवि°. L शुक्तिरू°. C जातिना D °दर्थान्तरत्वा°. [b]) C मूलकारणं द्रव्यं. M °करणं. H ins. सिद्धं (after तत्र). L तस्य यावत् सत्त्वं. B °मवलंब्य. L °मपलपन्त. L सामान्यद्र°. C °पर्यायेष. C ins. दुः तेन (before द्रव्य°). CLM वस्तुत एव. L °र्माव द्यमा°. [c]) ADH गुरुत्वादयः। पतन°. ACDH इदानीं. C गात्रप्रकारस्तु. ACDH निर्मितवान्. AH सर्वगतत्वेना°. BCD सर्वगतत्व°.

अत्र वैशेषिकदर्शनाश्रयेण व्यतिरेकपक्षं जातीनां समर्थयितुमाह—

दण्डोपादित्सया दण्डं यद्यपि प्रतिपद्यते ।
न तस्मादेव सामर्थ्यात्स दण्डीति प्रतीयते ॥ ९३ ॥
नेच्छानिमित्तादिच्छावानिति ज्ञानं प्रवर्तते ।
तस्मात्सत्यपि सामर्थ्ये बुद्धिरर्थान्तराश्रया ॥ ९४ ॥

( 134 ) [a] ) अयमत्रार्थः—इहानुगताकारे ज्ञाने व्यक्तीनां व्यावृत्ताकाराणां हेतुत्वं नोपपद्यत इति सामान्यं परिकल्प्यते । सादृश्यसामर्थ्ये तु व्यक्त्यव्यतिरिक्ते । तद्वदनुयायिनी व्यतिरिक्ता जातिरभ्युपगन्तव्या । [b] ) ननु च सापि कथमनवयवेन व्यक्ति नानुयायात् । तथा च गवाश्वादौ सांकर्यप्रसङ्गः । नैतदेवम्, प्रतिनियताश्रयवृत्तित्वात्सामान्यानाम् । किमत्र निमित्तमिति चेत् विशिष्टसंस्थानयोगित्वं व्यक्तीनाम् । [c] ) अन्यो ह्यवयवसन्निवेशो गवाम्, अन्यस्त्वश्वानामिति गोत्वाश्वत्वयोराधारनियमसिद्धिः । तत एव तर्हि विशिष्टात्सन्निवेशात्सादृश्यापरपर्यायात्प्रतिनियमेनानुगताकारप्रत्ययोऽस्तु । यथा ह्यवयवसन्निवेशः प्रतिव्यक्ति भिन्नोऽपि सामान्यस्याभिन्नस्याश्रयावच्छेदहेतुः तथा अनुगताकारस्यापि ज्ञानस्य हेतुर्भवतीत्यलमन्तर्गडुना सामान्येन । तदुक्तम्—

' तुल्यभेदे यथा जातिः प्रत्यासत्त्या प्रसर्पति ।
क्वचिन्नान्यत्र सैवास्तु शब्दज्ञाननिबन्धनम् ॥ '

इति । [d] ) अत्रोच्यते—इह कार्याणा प्रतिनियतकारणजन्यत्वान्न सर्वो जनकः सर्वत्र कार्ये व्यापारयितुं पार्यते । तथा हि—दण्डीति प्रत्यये दण्डसंबन्धो निमित्तम् । स तु दण्डसबन्धः सर्वत्र किं न भवतीत्युक्ते दण्डजिघृक्षा तस्य निमित्तं भण्यते । न चैतदत्र वक्तुं शक्यते । दण्डोपादानेच्छाया एव दण्डसंबन्धं प्रति नियमहेतोरस्तु दण्डीति प्रत्ययः, किमपरेण तत्र दण्डसंबन्धेन निमित्तेन कृत्यम् इति । [e] ) दण्डोपादित्सा दण्डसंबन्धस्य

का. ९३. C प्रतिपत्तये. C प्रतियते.
का. ९४. C तत्रानिमि°. D °द्धिरर्थानराश्र°.
(13!) [a] ) ACDH यक्ष अनु°. C °ना वृत्ता°. C त्यक्तव्यति°. ADH °पायिनी. C स्तदंमेर्शनानुमा° C om. व्यतिरिक्ता. C °गन्तव्यं. [b] ) Could the text be कथमनवयवा? ADH कथमवमवेन. L व्यक्तीरनुया°; M °क्तीर्नानुमा°. B °नुयातम्. ADH °नजातित्वं. [c] ) D °वेशो गृस्याद्वा. C °मन्यो त्व°. C गोश्वास्वात्वयो°. C om. तर्हि. C om. विशिष्टात् ... पर्यायात्. C ins. प्रत्यया ( before प्रतिनि° ). BLM °कारः प्र°. C तथा. ADH सावयवस°. C °भिन्नेऽपि. C °न्यस्यापि मि°. C °तीत्यन्यसंसर्गकृताना सा°. C om. अलमन्तर्गडुना. [d] ) C ins. न ( before सर्वत्र ) C दण्डशब्दो नि°. C °त्तं द्रायते. ADH चैतद्वक्तुं श°. C वक्तुं न श°. BL °न्धप्रति°. [e] ) BLM तथोपादित्सा. AD यत्र कार्यं. H om. निमित्तमित्युक्ते ... तदुपादित्सा. LM °र्थ्यदर्श°. BL °त्तमिति व°. L ततश्च तत. A °निमित्तो द° L °त्येवास्तु. ADH °स्वात्मनिमि°. C ins. वक्तु ( before अभि° ) C ins. हि ( before कार्यं ). ADH ज्ञानम् । दण्डीति । C om. सामर्थ्ये सत्यपि न तस्मादेव. BLM ततः सदृश-इ°. LM व्यक्तिव्यति°.

अत्र वैशेषिकदर्शनाश्रयेण व्यतिरेकपक्षं जातीनां समर्थयितुमाह—

दण्डोपादित्सया दण्डं यद्यपि प्रतिपद्यते ।
न तस्मादेव सामर्थ्यात्स दण्डीति प्रतीयते ॥ ९३ ॥
नेच्छानिमित्तादिच्छावानिति ज्ञानं प्रवर्तते ।
तस्मात्सत्यपि सामर्थ्ये बुद्धिरर्थान्तराश्रया ॥ ९४ ॥

( 134 ) [a]) अयमत्रार्थः—इहानुगताकारे ज्ञाने व्यक्तीनां व्यावृत्ताकाराणा हेतुत्वं नोपपद्यत इति सामान्यं परिकल्प्यते । सादृश्यसामर्थ्ये तु व्यक्त्यव्यतिरिक्ते । तद्वदनुयायिनी व्यतिरिक्ता जातिरभ्युपगन्तव्या । [b]) ननु च सापि कथमनवयवेन व्यक्तिं नानुयायात् । तथा च गवाश्वादौ सांकर्यप्रसङ्गः । नैतदेवम्, प्रतिनियताश्रयवृत्तित्वात्सामान्यानाम् । किमत्र निमित्तमिति चेत् विशिष्टसंस्थानयोगित्वं व्यक्तीनाम् । [c]) अन्यो ह्यवयवसन्निवेशो गवाम्, अन्यस्त्वश्वानामिति गोत्वाश्वत्वयोराधारनियमसिद्धिः । तत एव तर्हि विशिष्टात्सन्निवेशात्सादृश्यापरपर्यायात्प्रतिनियमेनानुगताकारप्रत्ययोऽस्तु । यथा ह्यवयवसन्निवेशः प्रतिव्यक्ति भिन्नोऽपि सामान्यस्याभिन्नस्याश्रयावच्छेदहेतुः तथा अनुगताकारस्यापि ज्ञानस्य हेतुर्भवतीत्यलमन्तर्गडुना सामान्येन । तदुक्तम्—

‘ तुल्यभेदे यथा जातिः प्रत्यासत्त्या प्रसर्पति ।
क्वचिन्नान्यत्र सैवास्तु शब्दज्ञाननिबन्धनम् ॥ ’

इति । [d]) अत्रोच्यते—इह कार्याणां प्रतिनियतकारणजन्यत्वान्न सर्वो जनकः सर्वत्र कार्ये व्यापारयितुं पार्यते । तथा हि—दण्डीति प्रत्यये दण्डसंबन्धो निमित्तम् । स तु दण्डसबन्धः सर्वत्र किं न भवतीत्युक्ते दण्डजिघृक्षा तस्य निमित्तं भण्यते । न चैतदत्र वक्तुं शक्यते । दण्डोपादानेच्छाया एव दण्डसंबन्धं प्रति नियमहेतोरस्तु दण्डीति प्रत्ययः, किमपरेण तत्र दण्डसंबन्धेन निमित्तेन कृत्यम् इति । [e]) दण्डोपादित्सा दण्डसंबन्धस्य

---

का. ९३. C प्रतिपत्तये. C प्रतियते.
का. ९४. C तत्रानिमि°. D °द्धिरर्थानराश्र°.
(13!) [a]) ACDH यक्ष अनु°. C °ना वृत्ता°. C त्यक्तव्यति°. ADH °पायिनी. C स्तदंमेर्शनानुमा°. C om. व्यतिरिक्ता. C °गन्तव्यं. [b]) Could the text be कथमनवयवा? ADH कथमवमवेन. L व्यक्तीरनुया°; M °क्तीर्नानुमा°. B °नुयातम्. ADH °नजातित्वं. [c]) D °वेशो गृस्याद्वा. C °मन्यो त्व°. C गोश्वात्वात्वयो°. C om. तर्हि. C om. विशिष्टात्... पर्यायात्. C ins. प्रत्यया ( before प्रतिनि° ). BLM °कारः प्र°. C तथा. ADH सावयवस°. C °भिन्नेऽपि. C °न्यस्यापि मि°. C °तोत्यन्यसंसर्गकृताना सा°. C om. अलमन्तर्गडुना. [d]) C ins. न ( before सर्वत्र ) C दण्डशव्दो नि°. C °तं द्रायते. ADH चैतद्वक्तुं श°. C वक्तुं न श°. BL °न्धप्रति°. [e]) BLM तथोपादित्सा. AD यत्र कार्य. H om. निमित्तमित्युक्ते... तदुपादित्सा. LM °र्थ्यदर्श°. BL °त्तमिति व°. L ततश्च तत. A °निमित्तो द°. L °त्येवास्तु. ADH °स्वात्मनिमि°. C ins. वक्तृ ( before अभि° ). C ins. हि ( before कार्य ). ADH ज्ञानम् । दण्डीति । C om. सामर्थ्ये सत्यपि न तस्मादेव. BLM ततः सदृश-इ°. LM व्यक्तिव्यति°.

निमित्तम्। तस्या अपि किं निमित्तमित्युक्ते दण्डस्य यत्र कार्ये विनियोगः तत्र सामर्थ्यादिदर्शनं तदुपादित्सानिमित्तं वक्तव्यम्। तथा च तत एवेच्छानिमित्ताद् दण्डोपादित्सावानित्यस्तु प्रत्ययः, किमत्रेच्छासमवायः स्वात्मनि निमित्तमुद्घोष्यत इति। नैतच्छक्यतेऽभिधातुम्। अनुरूपं कार्यं अनुरूपकारणजन्यमितीच्छासंबन्धादिच्छावानिति ज्ञानम्, न दण्डीति। एवं सादृश्यादेः सामान्यस्य विषयनियमसामर्थ्ये सत्यपि न तस्मादेव सामर्थ्यादनुगताकारज्ञानजनकत्वं युक्तं तत्सदृशमित्यादिज्ञानदिति तन्निमित्तं व्यतिरिक्तं सामान्यमवश्याश्रयणीयमिति सिद्धम्॥ ९४॥

अन्यथा अतिप्रसङ्ग इत्याह—

**स्वभावोऽव्यपदेश्यो वा सामर्थ्यं वावतिष्ठते।**
**सर्वस्यान्ते यतस्तस्माद्व्यवहारो न कल्पते॥ ९५॥**

(135) [a]) इह कार्याणां प्रतिनियतकारणानभ्युपगमे कारणकारणादेव सिद्धावभ्युपगम्यमानाया तत्रापि तत्कारणादित्यनवस्थायामापादितायां सर्वान्ते मूलकारणेऽवस्थातव्यम्। तच्च मूलं कारणं सर्वस्य वस्तुनः सर्वस्य वादिनोऽन्ते पर्यनुयोगावसाने नित्यस्य प्रधानादेः कारणस्य **स्वभावोऽव्यपदेश्यो**ऽयमस्य स्वभावोऽस्माद्धेतोरित्येवं व्यपदेष्टुमशक्यः **अवतिष्ठते**। अत एवास्मिन्नवधौ हेतुप्रश्नपरम्परा निवर्तते। येषां त्वनित्यं कारणम्, तेषां सामर्थ्यं हेतुशक्तिः प्रश्नपरम्परावसानेऽवतिष्ठते। तदपि सामर्थ्यमव्यपदेश्यमेव, वैलक्षण्येन 'इदं तत्' इति शब्देन व्यपदेष्टुमशक्यत्वात्। [b]) अथवा नित्यकारणपरिग्रह एव तस्यात्यन्तपरोक्षत्वात्स्वभावोऽव्यपदेश्यः। अनेकशक्त्यात्मकत्वे तु सामर्थ्यमप्यस्य परोक्षत्वादेवाव्यपदेश्यम्। एकमेव वा वस्तु स्वभावशब्देन सामर्थ्यशब्देन च व्यवहरन्तीति तदुक्तिभिरेव प्रतिपादयति। एवमव्यपदेश्यस्वभावेऽवस्थानात् तस्मादव्यपदेश्याच्छाब्दो व्यवहारो न प्रकल्पते। वाक्ये यथानुयातवस्तुनिबन्धनो हि परिदृश्यमानः स्थूलार्थाश्रयो गामानय, ओदनं भुंक्ष्वेति व्यवहारः सोऽन्यहेतुवशः इति स्वभावः सामर्थ्यं वा आनय भुंक्ष्व चेत्येवं वक्तव्यम्। अव्यपदेश्यत्वाच्च स्वभावादेस्तेन व्यवहारो नोपपद्यत इत्ययुक्तम-

का. ९५. L स्वभावव्यप°. B °देशो. D °तिष्ठतो.

(135) [a]) C °भ्युपगमो. CH °गमे कारणादेव. M तत्रापि तत्कारणात् तत्रापि तत्कारणात्. LM सर्वत्रान्ते. C मूलकारणे. L तया मूल°. C om. सर्वस्य वस्तुनः. CD ins. वा (after सर्वस्य). ADH येषा च नि°. C om. सामर्थ्यं. [b]) L अथा नित्य°. LM om. तस्य (before अत्यन्त°). D om. स्वभावो. D ins. येवेदं तदिति शब्देन (befo.e अव्यपदेश्यः) C om. सामर्थ्य शब्देन च. H ins. सा नवतिष्ठते तदपि सामर्थ्यमप्यस्य परोक्षत्वादेवाव्यपदेश्यं (before व्यवहरन्ति). C °देशभ्यावेनावस्थाभावात्; BL °देश्ये स्वभावे. M न कल्पते. A एकवाक्ये. BLM वाक्यथा°. AH °नुपात°. ADH चानय. C भूक्ष्वैव तदेव. C इत्युक्तं व्यव°; AH इत्युक्तमव्य°.

व्यवहार्यं वस्त्वपक्षेऽनुमित्यर्थः । [c]) तदेवमभिन्नव्यवहारनिबन्धनानि सामान्यान्यभ्युपगन्तव्यानि । सादृश्यात्तु सदृश इति व्यवहारः शक्तिमत्त्वात्तु शक्तिमानिति । अन्यच्च सादृश्यज्ञानं सामान्यज्ञानाद्भिन्नजातीयेष्वपि गोगवयादिषु भावात् । [d]) अथ नावधार्यन्ते विवेकेन जातय इत्यनुगतस्य ज्ञानस्य निमितपरिकल्पनायां यदेव किञ्चिन्निमित्तं स्यादिति को ग्रहो जातिष्विति । उच्यते—तत्र रूपिसमवायात् चाक्षुषाण्येव सामान्यानीति ब्रूमः । विप्रतिपन्नं तु प्रति कार्यकल्प्यत्वमुच्यते । न च ज्ञानं नाम कार्यं जडाङ्कुरादिसदृशम्, अपि तु बोधरूपमिति । तस्य तत्सामान्यं न चक्षुरादिवदधिपतिप्रत्ययरूपं कारणम्, अपि त्वालम्बनप्रत्ययरूपम् । आलम्बनं च संवेद्यमानम् । अतश्चेहापि तदेवायातं संवेद्यते तस्य स्वरूपमुपयुज्यमानमिति । [e]) अथ विकल्पस्य सामान्यं विषयो न तु प्रत्यक्षस्य । तदयुक्तम् । असति सामान्ये विकल्पो न प्रत्यक्षम् । न सति, सत्यविषयत्वात् ! विकल्पविषयत्वाच्च तस्यासत्यत्वम्, असत्यविषयत्वाच्च तस्य सत्यविकल्पत्वमिति इतरेतराश्रयता । किञ्च प्रतिकर्मव्यवस्थायां ज्ञानस्य बौद्धैरुच्यते यतो नीलाकारमतो नीलस्य संवेदनमिति । तद्वत् सामान्यवादिभिरप्युच्यते यतोऽभिन्नाकारमतोऽभिन्नस्य संवेदनमिति । कोऽनयोरुक्त्योर्विशेषः ? ये न नीलं प्रत्यक्षं सामान्यमीदृशमेवाप्रत्यक्षमिति । एवमस्य न कश्चिद्विशेषो दण्डादिभ्य इति नास्ति वैसादृश्यं निदर्शनैः । एकार्थकारित्वाच्च भिन्नः प्रत्ययो नास्ति हेतुभेदात् कार्याणामपि भेदात् इत्येकप्रत्यवमर्श एवासति सामान्ये नोदियात् । रूपादिव्यतिरेकेण च द्रव्यानभ्युपगमात् प्रत्यर्थमपि नास्त्येकार्थसाध्या काचिदर्थक्रिया किमुतार्थभेदो भवेत् । [f]) उदकाहरणाद्यपि रूपादिसमुदायसाध्यमेकमिति तत्र समुदायबुद्धिर्भवेन्नैकबुद्धिः, यथैकाङ्कुरजनकत्वेऽपि क्षितिबीजादीनाम् । मिथ्यारूपसंविच्चैकबुद्धिरित्यपि क्वचित् सम्यक्संवेदनमूलत्वान्मिथ्याबुद्धेरवश्यं काचिद्भेदबुद्धिः सत्याप्येष्टव्येत्यनपह्नवनीयानि प्रतिनियतकार्यसाधनानि सामान्यानीति स्थितम् ॥ ९६ ॥

अधुना साङ्ख्यनयेनाद्वैतनयेन वा व्यतिरिक्तां जातिं समर्थयितुमाह—

**यदा भेदान्परित्यज्य बुद्ध्यैक इव गृह्यते ।**
**व्यक्त्यात्मैव तदा तत्र बुद्धिरेका प्रवर्तते ॥ ९६ ॥**

---

[c]) ACD तदेवं भिन्न°. LM इति प्रत्ययः. ADH अन्यस्य. L om. सामान्यज्ञानात्. C सामान्यं ज्ञा°. B °ष्वभावात्. [d]) ACDH °वार्य वि°. ADH जायत. D उच्यताष्वि तत्र. M अत्र रू°. C °कल्पत्व°. AD ज्ञानं नान्यका°. ADH °वदवधिमति प्र°. C ins. संवेद्य (before तदेवा°). ADH स्वरूपमुप°. [e]) A °मान्यवि°. L तस्य वि°. M असति स°. L सत्यविषय°. C प्रकृतिकर्म°. C नील प्रत्यक्षया. ADH सामान्यमेवाप्र°. BCDL °त्वाचाभिन्नः. A °तिसमासेनो°. ADH द्रव्याभ्यु°. [f]) C °साध्यमेकस्मिन्नृति. C नैकत्वबु°. H om. भवेत्... संविच्चैकबुद्धि°. ACD क्वचित् क्वचित् संवेद°. BHM साख्यदर्शनेन.

का. ९६. ACDH यथा. C बुधेक. D ins. व्य इव गृह्यते (before व्यक्त्यात्मैव). D प्रदातत्रः.

(136) [a]) इहैकरूपसमन्वयादेककारणपूर्वकं विश्वम्। असदनुत्पत्तेश्च कार्यकारणयोरभेद इति सर्वं किञ्चिद्भेदाभेदात्मकं वस्तु। एकस्यैवानेकधावस्थानात्ततोऽभेदः सामान्यं भेदो विशेषः। तत्र सर्वाभेदो महासामान्यम्, तस्यैव च यथाभागमवच्छेदादवान्तरसामान्यानि। अवच्छेदकाश्च धर्मास्तस्यैव तथा परिणाम इति न ततोऽतिरिच्यन्ते। [b]) सर्वं ह्येकस्यैव परिणामो विवर्त इति वा। एवं च कृत्वा कार्यकारणयोर्धर्मधर्मिणोः सामान्यविशेषयोश्च नात्यन्तं भेदः, एवमप्रतीतेः। नाप्यत्यन्तमभेदः, तथाप्यप्रतीतेः। केवलं स्वसंविज्ञानपदाभावादगत्या भेदाभेदशब्दाभ्यां यदाभिधीयते तदा शब्दसादृश्यमात्रादविवक्षितभेदाभेदरूपाध्यारोपेण परैर्विरोधो निर्विषय इवापद्यते। [c]) तत्र **यदा भेदान्परित्यज्य** भेदाभेदरूपाविवक्षया **व्यक्त्यात्मैव** व्यक्तेरात्मैव व्यक्तिरूपमेव बुद्ध्या एक इव गृह्यते, अभिन्नं प्रतीयते **तदा** तदेव सामान्यमेकबुद्धिविषयो न ततोऽन्यत्किञ्चित्। व्यक्त्यात्मनो हि मूलभूतमेकत्वमात्मभेदहेतुपरित्यागादविरुद्धम्। यद्यपि च प्रकृतिरूपान्वयात्सर्वमेकमेव तत्त्वतः तथापि परिणामवैचित्र्याद्विकाराणामनर्थान्तरभूतानामपि साव्यवहारिकमनेकत्वमप्यनवगतमिति **इव** शब्दः। [d]) तत्र यदा समस्तभेदपरित्यागः तदा सद्वस्तुमात्रं पदार्थ इति चैकबुद्धिः प्रवर्तते। धर्मतिरस्कारे तु धर्मिमात्रं द्रव्यमिति बुद्धिः। सजातीयगतभेदहेतुपरित्यागे विजातीयभेदापेक्षायां पृथिव्यापस्तेज इत्यादिव्यवहारः। तत्राप्यर्थान्तराद्भेदापेक्षायां स्वसदृशाभेदापेक्षणे गौरश्वो घट इत्यादि भेद इति यथायथमुदाहार्यम्॥ ९६॥

तदेवं दर्शनद्वयेन भिन्नाकाराया जातिबुद्धेर्विषयमवस्थाप्य जातिपदार्थे प्रत्याख्यानादेकशेषस्य तद्विषये समूहबुद्धेर्विषयमवस्थापयितुमाह—

**भेदरूपैरनुस्यूतं यदेकमिव मन्यते।**
**समूहावग्रहा बुद्धिर्बहुभ्यो जायते तदा॥ ९७॥**

(137) [a]) भेदरूपाण्यपि यत्र संचेत्यन्तेऽभेदरूपं च तत्र समूहमवगृह्णाति परिच्छिनत्ति या बुद्धिः सा प्रवर्तते। '**एकमिव**' इति। भिन्नेष्वपि एकत्वस्याध्यारो-

---

(136) [a]) L °हैकत्ररू°. L असदुत्प°; C नसदु°. C कायका° D °भेद दनि°. C °द्भेदात्मकं°. ACDH सर्वात्मभेदो. C तथैव परिणाम; AH यस्य परिणाम. ADH ततोऽति°. [b]) C सर्वं वात्मकस्यैव. BC वितर्तत इति. D कत्वा. ACH एवमप्यतीतेना°. ADH तथा ह्यप्र°. A °ज्ञानमर्थानवगत्या; D °ज्ञानवयदानवगत्या; H °ज्ञानपदानव°. B शब्देन सा°. ADH इवापद्यते. [c]) C °त्यज्यन्ते. BCDH भेदरूपावि°. ADH om व्यक्तेरात्मैव. ACD ins. च (after तदेव). BL °विरुद्धः. ACDH °काराणामवान्तर°. A व्याहवा°. [d]) H °तीयमनभे°. C °पेक्षया. BL °राद्भेदाभेदापे°. L °कारजातित्रु°. C °वुद्धिवि°.

का. ९७. C समुहा°. C ग्रहार्बुद्धि°.

(137) [a]) D °रूपादायपि. C सदायवेद्यन्ते. C °वगृह्यते. C °च्छिन्नेति; B परिच्छिन्नक्रिया. B संप्रव°. L प्रवर्तयेते. C एकमेवेति.

पात्। एवमपि चैकत्वोपसर्जनेभ्यो बहुभ्य एवेयं बुद्धिर्जायते न तु जातिप्रत्ययवदेकस्मादेव। [b]) अयमाशयः—यद्यपि ता एव व्यक्तभेदा व्यक्तयो जातिरिति दर्शनम् तथापि संभवत्येकशेषस्य विषयो भेदप्राधान्येनैकधर्मावेशनिमित्ताभेदोपसर्जनतया, तासा प्रतीतेः। अत एव च द्वन्द्वैकशेषयोर्वचनभेदोपपत्तिः। जातिप्रत्ययस्तु सर्वथा अभेदप्राधान्येनैव ॥ ९७ ॥

इदानीं सदृशबुद्धेर्विषयमाह—

**सकृत्प्रवृत्तावेकत्वमावृत्तौ सदृशात्मताम्।**
**भिन्नात्मिकानां व्यक्तीनां भेदापोहात्प्रपद्यते ॥ ९८ ॥**

(138) [a]) इह भेदहेतूनां त्यागे सामान्यबुद्धिरित्युक्त्वा तेषामपि च परिग्रहे समूहबुद्धिरिति राश्यन्तराभावान्निर्विषया सादृश्यबुद्धिः स्यादित्याशंक्येदमुच्यते—**भिन्नात्मिकानां व्यक्तीनां सकृत्प्रवृत्तौ भेदापोहात्** अनालीढभेदं तदनुस्यूतं वा **एकत्वं** जात्यात्मकं समूहात्मकं वा प्रतिपद्यते बुद्धिः। **आवृत्तौ तु सदृश्यात्मताम्।** [b]) भेदहेतुपरित्यागेनाभिन्नात्मिका व्यक्तीरवगृह्य कार्यान्तरविषयनया गृहीतभेदा एव ता गृह्णातीत्यविश्रान्ता सैव बुद्धिर्भेदापोहान्नान्या, आवृत्तेरेकधर्मत्वात्सदृशात्मतां प्रतिपद्यते। एवं भेदाभेदावग्रहरूपत्वान्नेयं जातिबुद्धिः, तस्या एकान्तेनाभेदावसायरूपत्वात्। [c]) नापि समूहबुद्धिः सकृदेव भेदानुस्यूतस्याभेदस्य तत्र ग्रहणान्नावृत्त्या। समूहावग्रहे हि समूहिनामनावृत्ता सैव बुद्धिः सामान्यं गृह्णाति। गोगवययोस्तु पूर्वं भेदं प्रतिपद्यानन्तरमवयवसन्निवेशायत्तोऽभेदोऽवसीयत इति सादृश्यबुद्धिस्तत्र। एवं च बुद्धिभेदादेव न सादृश्यं सामान्यमित्युक्तं भवति ॥ ९८ ॥

---

[b]) BL निदर्शनं. B °धर्मावेगनि°. L °भित्तभेदो°.

C ins. the following extra verses after 97.

तदा सहविवक्षायामेकबुद्धिनिबन्धनं।
बध्वावयवविच्छेदसमुदायोऽभिधीयते ॥
प्रतिक्रियं समासत्वादेको भेदसमन्वितः।
द्वंद्वे द्विसादिभेदेन तदावत्वेन गम्यते ॥

का. ९८. ACDH °शात्मनां°. BL °न्नात्मकानां C प्रवर्तते.

(138) [a]) C भेदवतां हे°. C हेतून्यं त्या°. C °न्यं बुद्धिरु°. BH °रित्युक्तम्; L °रित्युक्ता. ADH °षयसादृ°. ACDH चैकत्वं. ADH सदृशात्मनाम्। [b]) BL ° हेतुत्या°. C °भिन्नात्मकार्थव्यक्तिरेवगृ°. C °न्तरविविष°. L °भेदावसाय. C भेदापोहातान्या. C °त्वन्नियं. L om. गृह्णाती ... एकान्तेनाभेदा [c]) C भेदानुस्कुतस्य°. ADH om. तत्र (before ग्रहणा°). C °ग्रहे पि हि नामना°. C सामान्यस्यैव गृ°. ADH पूर्वभेदं. ADH प्रतिपाद्य. C तदेवं व्याक्तिव्यति°; B व्यक्तिजातिद°. BL °निकजा°.

तदेवं व्यतिरिक्तजातिदर्शनमव्यतिरिक्तजातिदर्शनं च विस्तरतोऽभिधायेदानीं सौगतानां संबन्धि काल्पनिकं जातिदर्शनमाह—

**अनुप्रवृत्तेति यथाभिन्ना बुद्धिः प्रतीयते ।**
**अर्थो व्यावृत्तरूपोऽपि तथा तत्त्वेन गृह्यते ॥ ९९ ॥**

(139) [a]) इहाभिन्नप्रत्ययात्रसेया जातिरित्युच्यते । न चाभिन्नः प्रत्ययोऽस्ति । न हि य एवैकस्या व्यक्तौ गौरिति प्रत्ययः स एव द्वितीयस्याम्, अपि त्वन्य एव, प्रत्यर्थनियतत्वाद् बुद्धीनाम् । अतश्च नैव कश्चिद्भिन्नेष्वभिन्नप्रत्ययः, केवलं भिन्नापि सती बुद्धिरनुप्रवृत्ता अनुगता अभिन्ना प्रतीयते । न च तत्र बुद्धितत्त्वव्यतिरेकेणान्यत्सामान्यं गोत्वादिज्ञानत्वाद्यस्ति । [b]) तस्याप्यभिन्नप्रत्ययस्य प्रतिबुद्धि भेदात् । तत्राप्यपरसामान्यकल्पनायामनवस्थापातात् । न च बुद्धिष्वपरसामान्यस्यासाधारणः कश्चिद्वाचकोऽस्तीति किं तत्सामान्यं नाम, यतश्चानादिकालीनभेदाग्रहसामर्थ्यप्रतिघातनिमित्तविभ्रमवशाद्यथा बुद्धीनामभेदावसायो भिन्नानामपि वस्तुनः, तथार्थानामपि व्यक्तिलक्षणाना स्वरूपपररूपाभ्या व्यावृत्तस्वभावाना **तत्त्वेन** अभेदेन सामान्याग्रहेणावसायो भविष्यतीति भेद एव परमार्थोऽभेदावसायो मिथ्येति सौगताः ॥ ९९ ॥

किमनादिकालीनविभ्रमवशादेवायम् उत बहिरस्याभेदावसायस्य किंचन निमित्तमस्तीत्याह—

**सरूपाणां च सर्वेषां न भेदोपनिपातिनः ।**
**विद्यन्ते वाचकाः शब्दा नापि भेदोऽवधार्यते ॥ १०० ॥**

(140) [a]) प्रख्योपाख्यात्मको द्विविधो व्यवहारः । तत्र समानं रूपमेषा वास्तवस्य भेदस्यानवधारणादर्वाग्दर्शनानां वस्तूना प्रतिभासते । न हि तत्त्वतो वास्तवं सारूप्यमस्ति, सौगतनये तस्य निराकृतत्वादिति दुरवधारभेदत्वेन यत्सरूपत्वम्, तदेव निर्दिश्यन इति सादृश्यनिबन्धनोऽभेदावसायलक्षणः प्रख्यात्मको व्यवहारः ।

---

का. ९९. ADH यदा. B अर्थे व्या°.

(139) [a]) B इह भिन्न°. L °वसाया. C गौरीति. B प्रत्यर्थिनि°. C भिन्नोऽपि ति. AH गोज्ञानत्वा°. [b]) C बुद्धिष्वेव पर°. D °नादिकलीलीन°. BM °द्धीना भे. C भविष्यत्येव भेद. C सैामामाः. C ins. (after °भेदावसा) यो मिथ्येति सौमामाः किमनादिकालीनविभ्रमवशादेवायमुजवहिरप्यवस्याभेदावसा.

का. १००. C °पातितः. C वेधो न धार्यते.

(140) [a]) ACDH सरूपात्मको. ADH रूप येषा. H °वस्य अनव°. C °वारणेतत्वेन, C °श्यलक्षणो. M. om. °नोऽभेदव ... उपाख्या. A °रूपनिवेशे.

असाधारणभावरूपनिवेशिसंविज्ञानपदाभावाच्चोपाख्यात्मकोऽप्यभेदे नैव व्यवहार: । उपाख्याया वाचकस्य शब्दस्य सांकेतिकत्वात्स्वलक्षणे वृत्त्यनुपपत्तेः ।

" शब्दाः सांकेतिकं प्राहुः व्यवहाराय संस्मृताः ।
तदा स्वलक्षणं नास्ति संकेतस्तेन तत्र नः ।। "

इत्यादिना वेदितत्वात् । [b]) यद्यपि चावधारणाभावादेव वाचकाभावोऽवगतः, अवधारणपूर्वकत्वाद्वाचकानाम्, तथापि यत्रापि गवादिष्ववधार्यते भेदः तत्रापि तस्य वाचका न सन्ति । स्वलक्षणस्य शब्देनाभिधातुमशक्यत्वात् अपि त्वभेदाध्यवसायानुविधायिन एव ते तत्रापीति दर्शयितुं भेदेन वाचकाभाव उक्तः । इत्थं च विशेषाणामविवेचनादप्यनुगमाभिमानो वाचकाभावाच्चाभिन्ना शब्दप्रवृत्तिर्न तु बहिर्वस्तुभूतं सामान्यं नाम किञ्चनात्र निमित्तमित्युक्तं भवति ।। १०० ।।

सर्वेषामिति व्याप्तिर्यत्रोक्ता, तामेवोपपादयितुमाह—

**ज्ञानशब्दार्थविषया विशेषा ये व्यवस्थिताः ।**
**तेषां दुरवधारत्वाज्ज्ञानाद्येकत्वदर्शनम् ।। १०१ ।।**

(141) [a]) ज्ञानानां तावद्विषयभेदाद्भेदो न्याय्योऽप्यर्वाग्दर्शिनो गौर्गौरित्यभेदावसायादशक्यपरिच्छेद इत्येकत्वमसदध्यारोपितं तत्र पश्यन्ति । एवं च शब्दानामनुनासिकतादीनां धर्माणां भेदाद्वक्तृभेदाच्च भेदेऽप्यभेदेनावसायः स एवायं गोशब्द इति । [b]) क्रमवतामवस्थायिनां शब्दानां न किञ्चित्सामान्यमस्ति । अथाभेदेनावसीयन्ते सूक्ष्माणां विशेषाणा दुरवधारत्वात्, अर्थानामपि खण्डमुण्डादिः स्फुट एव भेदो नाद्दतोऽर्वाग्दर्शनैः विजातीयव्यावृत्त्या अन्वयिरूपोल्लेखनात् । तथा च मणिमुक्ताप्रवालादीनामभियुक्तप्रणिधानगम्यो विशेषो न सर्वैर्विविच्यते ।। १०१ ।।

अवदातदर्शनास्तु यथातत्त्वं विवेकिन एवेति भेदवादिनयः । जातिवादिनस्तु मन्यन्ते—

---

[b]) ADH °भावोऽपगतः ; C °भावोऽपि गम्यते. L °सायगनु°. C om. यानुविधा. C तत्राधिनि. C विशेष्याणा°. ADH °णामपि वचनाद्. M °मपि चेतनाद्. C °कभावा°. C शब्दः प्रवृत्ति°. ADH न भूतं सामा°. C विमुक्तमिमित्तमि°. C व्याप्तिरत्रो°.

(141) [a]) C द्भेदोन्वाख्यापूर्वादशने गौरीत्येवमभे°. BLM °र्वाग्दर्शने. BLM °गौरित्येवमभेदेना°. ADH °कत्वमध्यारो°. ADH °नासिकादीनां. A धर्माणां भेदेऽप्यभे° [b]) L om शब्दानां. ADH भेदेनावसीयते. ADH °र्थानां खण्ड°. ADH नाद्दतो वाग्दर्श°. ADH °तीमान्वपिरूपो°. ADH विवेच्यन्ते.

**ज्ञानेष्वपि यथार्थेषु तथा सर्वेषु जातयः ।**
**संसर्गदर्शने सन्ति ताश्चार्थस्य प्रसाधिकाः ॥ १०२ ॥**

( 142 ) [a]) अनपह्नवनीयोऽयमभिन्नावसायः सर्वत्र जातिसद्भावावेदक इति ज्ञानानामपि सामान्यविशेषाः सन्तु कानुपपत्तिरिति वस्तूनां भेदाभेदादिरूपमर्थान्तर-संसर्गनिमित्तं मन्यमानाः प्राहुः । ता एव ज्ञानजातयो **अर्थस्य प्रसाधिकाः** बाह्यानामर्थ-जातीना निश्चायिकाः । [b]) बुद्धेरन्वितावभाससिद्धौ व्यक्तीनामपि सामान्यावधारणात् । अर्थस्यात्मीयस्य वा सामान्यकार्यस्यानुवृत्त्यादेः प्रसाधिकाः । यत्र यत्र च सत्यप्यवान्तर-विशेषेऽभिन्नः प्रत्ययोऽस्ति तत्र तत्र प्रमाणसिद्धानां सामान्यविशेषाणामङ्गीकरणमानन्त्येऽपि न दोषाय । असाधारणसङ्केताभावेऽपि च जात्युत्पलादिगन्धादीनामिव सत्त्व-मस्त्येव ॥ १०२ ॥

संसर्गदर्शन एव प्रकारान्तरमाह—

**ज्ञेयस्थमेव सामान्यं ज्ञानानामुपकारकम् ।**
**न जातु ज्ञेयवज्ज्ञानं पररूपेण रूप्यते ॥ १०३ ॥**

( 143 ) [a]) यथा ज्ञेयं व्यतिरिक्तसामान्यरूपेण रूप्यते रूपवत् क्रियते नैवं ज्ञानं संविदात्मसमवेतेन व्यतिरिक्तसामान्यरूपेण **रूप्यते** । ज्ञेयधर्मः किलायं यत् पररूपेण रूपणम् । ज्ञानं तु स्वतन्त्रं ज्ञेयमेव न भवति । [b]) ज्ञेयनिष्ठतया हि ज्ञानानां ज्ञेयस्थस्य सामान्यस्याभेदेन तदभेदावसायः प्रत्यर्थनियतत्वेऽप्युपपद्यते । बाह्यपरवशत्वेनास्वाधीनत्वाज् ज्ञानानां स्वत एव वैलक्षण्यानुपपत्तेः वहिरभिन्नेन निमित्तेन तत्र भाव्यम् । तद्यथा घटो घट इति घटाकारे बाह्यं निमित्तं तथा भेदेऽपि तद्गतं सामान्यमिति युक्तम् ॥ १०३ ॥

कथं पुनर्ज्ञानं ज्ञेयं न भवतीति पररूपेण न रूप्यत इत्याह—

**यथा ज्योतिः प्रकाशेन नान्येनाभिप्रकाश्यते ।**
**ज्ञानाकारस्तथान्येन न ज्ञानेनोपगृह्यते ॥ १०४ ॥**

---

का. १०२. C यथार्थिषु. B सर्वेऽपि.

( 142 ) [a]) ADH सर्वजाति°. ADH भेदाभेदादिरूपमर्थान्तर°. L ज्ञापनजा°. [b]) ADH °स्ति तत्र प्र°.

का. १०३. C भावानामु°. C ज्ञेयवज्ज्ञानेन.

( 143 ) [a]) ADH पररूपवत् क्रि°. C om. समवेतेन ( before व्यति° ). C यत परेण. [b]) C °भेदेवसायन°. C °नियमवत्त्वे. LM एवा वैलक्षण्या°. ADH °रूपेण रूप्यत,

का. १०४. C ज्योतिप्रका°. C °कारयथान्येन.

(144) [a]) यथा घटादीनां दीपः प्रकाशकः स्वप्रकाशे दीपान्तरं नापेक्षते तथार्थस्य प्रकाशकं ज्ञानमात्मप्रकाशनाय प्रकाशान्तरानपेक्षमिति स्वप्रकाशकं सिद्धम्। जडवैलक्षण्यं हि प्रकाशकत्वमिति तस्यापि प्रकाश्यत्वे जडतापत्तिः। अर्थप्रकाशकाले च प्रकाशकस्याप्रकाशेऽर्थसंवेदनमेव न स्यात्। प्रकाशासञ्चेतने तद्ग्राह्यार्थसञ्चेतनासिद्धेः। उत्तरकालं तु वेदनं क्वोपयोगि। [b]) उत्पन्नायां च प्रकटतायां आत्मसमवेतस्य तदानीं ज्ञानस्यासञ्चेतनान्मम प्रकटितोऽर्थ इत्यात्मगामि संवेदनं न स्यात्। तस्याज्ज्ञानान्तरेण स्वप्रकाशकं ज्ञानं न गृह्यते परप्रकाश्यत्वे प्रकाशकत्वाभावादिति तदाकारस्य परेण रूपेणाभावाज्ज्ञेयस्थमेवाभिन्नं सामान्यमस्याभेदनिमित्तम्। तद्वशादस्य ग्राह्याकारस्य ज्ञानान्तरेणाभेदग्रहणात्। स्वसमवेतसामान्यवशेन त्वभेदप्रतिभासे वहिः सामान्यपरिकल्पो निर्निवन्धन एव स्यात्। अन्यथैवाभेदप्रतिभासस्योपपत्तेः। [c]) अर्थानान्तु व्यतिरिक्तत्वादभिन्नं सामान्यमुपपद्यते। ज्ञानाना तु सामान्याकारो न व्यतिरिक्त इति नाभिन्न उपपद्यते। प्रत्यर्थनियतत्वेन तेपा भेदात्तदभिन्नस्य तस्यापि तथात्वोपपत्तेरिति नार्थैः साम्यमस्ति। बुद्ध्याकाराणामाकारसाम्यादेव च ज्ञानानामभेदावसायसिद्धेर्न संवेदनभागेऽपि सामान्ययोग इति साकाराः स्वप्रकाशाः निःसामान्या बुद्धयः सिद्धाः। यद्यपि च वैशेपिका ज्ञेयस्थमेव सामान्यं ज्ञानानामुपकारकमिच्छन्तो न साकारं नापि स्वप्रकाशं विज्ञानमिच्छन्ति, तथापि न वयं दर्शनान्तरप्रक्रियां ब्रूमः। अपि तु यत्प्रमाणोपपन्नमितीदमत्र दर्शनमुपक्षिप्तम्।। १०४ ।।

[d]) ननु च यथा घटोऽयमिति ज्ञाने घटोऽवसीयते तथा घटज्ञानमेतदिति ज्ञाने घटज्ञानम्। को ह्यत्र विशेपः? यदि तु विपयसंवेदनरूपा बुद्धिर्नानुभूयेत शब्देनापि तथा नाभिधीयेत, अनुभवपूर्वकत्वादभिधानस्य। न चात्मना आत्मानमनुभवति बुद्धिः, स्वात्मनि व्यापारविरोधात्। वोधरूपत्वात्तु स्वयमज्ञातैवार्थमवभासयतु। एतावानस्य वाह्याद्विशेपोऽस्तु। तद्बुभुत्सायां तु बुद्ध्यन्तरमेवापेक्ष्यम्। ज्ञानज्ञेयसिद्धिमात्रनिष्ठत्वाच्च व्यवहारस्य प्रत्ययान्तरानपेक्षणाद् बुद्धिमालापि नानुपज्यत इत्याह—

---

(144) [a]) D दीपः. C दीपान्तरा नापेक्ष्यते. C स्वप्रकाशाय. ADH प्रकाशत्वमिति. ADH °काशकस्याप्र°. C rep. स्याप्रकाशे. C °शासभवेन तल्लाभार्थं संवेदना°. ADH °लं संचेतनं. C °ल तु चेतन कोपयोगी. [b]) D ins. न (after उत्पन्नाया). C ins. तस्य (after °वेतस्य). C प्रकाटितार्थ इत्यार्थगामि CL पर प्रकाशत्वे. D om. अस्याभेदनिमित्तं ... स्वसमवेत सामान्य. L अन्यथावाभेदप्र°. [c]) B om. नाभिन्न. LM ज्ञानानामप्युपका°. C °न्तर प्रक्रिमया ब्रुमः. [d]) ACDH घटोऽभिधीयते. ACDH ins. न (after ज्ञाने). C नाभिधायते. C स्वयमज्ञात्वैव. C तथावानस्य. C तव्दुभुक्षाणा. BL बुद्धिमात्रापि.

**घटज्ञानमिति ज्ञानं घटज्ञानविलक्षणम् ।**
**घट इत्यपि यज्ज्ञानं विषयोपनिपाति तत् ॥ १०५ ॥**

(145) [a]) **घटज्ञानमिति ज्ञानं** घटाद्याकारं ज्ञानं यदा ज्ञानान्तरेण परामृश्यते एवं ममात्रानुभवो भूत इति प्रत्ययविषयं यत्परामर्शज्ञानं तद्घटज्ञानाद्भिन्नलक्षणं साक्षाद्विषयेणाजनितत्वात् । अनुकार्यप्रत्यया एव हि विषयेण जन्यन्ते नान्ये ज्ञानालम्बनाः, व्यवधानात्; सारूप्यबलेन च ग्राह्यग्राहकभावेन वैधर्म्येण न च घटज्ञानं ज्ञानान्तरे प्रतिभासते । अतो न तद् गृह्यते । [b]) अथोच्यते—सरूपमेव तज्ज्ञानं घट इत्येवमनुसन्धानादित्याह—**घट इत्यपि यज्ज्ञानं विषयोपनिपाति तत् ।** न तु ज्ञाने उपनिपतति । अतो न बुद्धिर्बुद्धिमालम्बते, स्वयमेव तु प्रकाशत इत्यर्थः । अन्ये व्याचक्षते, घटज्ञानाद् बाह्यविषयात् **घटज्ञानमिति** एवं **ज्ञानं** भिन्नं न विषयप्रविष्टं स्वात्मन्यवस्थितं ज्ञानं सञ्चेत्यते यस्माद्घट इत्येवमाकारं यद्विच्छिन्नं ग्राह्यप्रसृतं तदपि विषयमनुपतति ग्राह्यपरवशम् । विषयाप्रकाशने ज्ञानास्तिताया एवानिबन्धनत्वात् । एवं च बोधत्वाविशेषात् यद्यपि ज्ञानज्ञानमिति मतं तदपि बाह्यविषयमेवेत्युक्तं भवति । [c]) अन्ये तु व्याचक्षते—**घटज्ञानमिति ज्ञानं** विषयो यस्य तद् घटज्ञानविलक्षणम्, एवंस्वरूपमनाकारम् । न हि संविदाकारस्तज्ज्ञानाभिमते प्रतिबिम्बीभवति । सारूप्यवशेन ग्राह्यग्राहकभावः, अन्यथा ज्ञानत्वाविशेषादिदमस्य संवेदनमिति प्रतिनियमो न स्यात् । घट इति तु यदेतद्बाह्यविषयं ज्ञानं तद्विषयोपनिपाति विषयाकारमुपादत्ते । [d]) अथ वा–**घट ज्ञानमिति ज्ञानं घटज्ञानविलक्षणम् ।** किं तद्वैलक्षण्यमित्याह–**घट इत्यपि यज्ज्ञानं विषयोपनिपाति तत् ।** निराकारमपि तद्विषयमनुपतति परिच्छिनत्ति निरूपयति–एवंरूपोऽयमर्थ इति । घटज्ञानमिति तु ज्ञानं न ज्ञानरूपानुपाति, यतो घटज्ञानगतं विषयं निरूप्य ज्ञानरूपं किमपि तदित्येतावद्यदि

---

C has the following two verses before verse १०५.

न चान्यसमवेतस्य सामान्यस्यावधारणे ।
ज्ञानशक्तिसमर्थस्याद्दतस्यावस्तुनः क्वचित् ॥
आयोपद्ये ज्ञानानांमस्येत्यग्राहणे न च ।
यथा घटस्य स्मरणमुपलब्धे च जायते ॥

का. १०५. B °निपाति तम्.

(145) [a]) C घटाकार. B °विषयतत्परामर्श°. ADH °ज्ञानभिन्न°. ADH °येण जनि°. ADH ज्ञाननिबन्धना. C न तत्र गृ°. [b]) ADH ins. तत् ( before ज्ञाने ). C om. अतो न. ADH न बुद्धिमालम्बते. ADH ज्ञानं ज्ञानमि°. C om. न ( before विषय° ). CM विषयाप्र°. C स्वात्मन्यव° C सवे°. L °ज्ञानास्तिता°. AD बोधत्वादिशे°. M बोद्धृबोधत्वावि°. [c]) BLM ज्ञानं घटज्ञान विषयो. ADH पदे तत् . D बोध्यविषय. [d]) BL इति ज्ञानमिति ज्ञानं. A °मिति तु ज्ञातरूपानु°. ADH परसंवेदनपर इव.

परं निरूपयितुं शक्नोति, न तु सा तदीया बोधरूपता तस्य प्रतिभासते परसंवेदन इव। [e]) परेण हि घटज्ञानमस्योत्पन्नमिति कयाचिद्युक्त्या ज्ञानं परिच्छिद्यते, न तु स्वत्परस्य प्रतिभासते इति ततो विलक्षणं न तस्य परिच्छेदकम्। उपलम्भात्मकत्वात्स्वयं प्रकाशत इति स्वसंवेदनं ज्ञानमुच्यते। न त्वात्मानमर्थमिव प्रकाशयतीति न स्वात्मन्यस्य कश्चिद्व्यापारः ॥ १०५ ॥

ननु ज्ञानस्य ग्राह्याकारो न व्यतिरिक्तः, स च घटज्ञानमिति ज्ञानेन संवेद्यत इति बुद्धिरेव संवेदिता भवतीत्याशङ्क्याह—

**यतो विषयरूपेण ज्ञानरूपं न गृह्यते।**
**अर्थरूपविविक्तं च स्वरूपं नावधार्यते ॥ १०६ ॥**

(146) [a]) निराकारवादेऽप्ययं परिहारो लगति, यतस्तत्रापि घटज्ञानमेतदिति ग्राह्यस्वभावेन ज्ञानं ज्ञानान्तरमुपलक्षयति, न तद्रहितमात्मतत्त्वं तस्यावधारयति। न च ग्राह्याकारो ज्ञानस्वरूपम्, औपाधिकत्वात्। यथा स्फटिकस्य नीलादि। न च ग्राह्याकारविविक्तं ग्राहकरूपं ज्ञानान्तरेणोपलक्ष्यते शुद्धबुद्ध्यनुकारेण बुद्ध्यन्तरानुपपत्तेः। एवं च विषयाप्रकाशने ज्ञानत्वायोगात् ज्ञानज्ञानाभिमतमपि विषयनिष्ठमेव। तथा चोपसर्जनेन विषय एव तेन विशिष्टोऽवस्थाप्यते ज्ञातोऽयमर्थ इति। नीलज्ञानमित्येतदपि नीलनिष्ठतया विषयप्रभवं ज्ञानं परामृश्यते। [b]) एवं च कृत्वा संविदाकारस्य ज्ञानान्तरेणाग्रहणान्न व्यतिरिक्तसामान्यरूपेण निरूपणम्। ग्राह्याकारस्य तु ज्ञानान्तरेणाभेदेन ग्रहणं ज्ञेयस्याभिन्नसामान्यनिमित्तम्, तेन तस्य ग्राह्याकारस्याविलक्षणस्य जनने तथैव बुद्ध्यन्तरेण ग्रहणादिति न तत्र सामान्यान्तरमुपयुज्यते। नापीतरेतराश्रयदोषः। ज्ञेयसामान्यस्याभिन्नज्ञानजनकत्वेनाभिन्नज्ञानस्य च ज्ञेयताप्रतिपादकत्वेन व्यापारभेदात्। तेनैतदचोद्यम्। यथा विनैव सामान्यमभेदावसायो बुद्धीनाम् एवमर्थानामपि भविष्यतीति बुद्धीनामपि सामान्यवशेनैवोक्तप्रकारेणाभेदावसायात् इति। [c]) ननु यदि ज्ञानरूपमर्थरूपविविक्तं

---

[e]) ADH ins. ज्ञानमुपादाय (after परेण हि). B स्वस्वरूपस्य. ADH °भात्मन्वात्. C स्वयं सं°. A न ह्या°. C ज्ञानस्य यो ह्याकारो. D om. ज्ञानस्य ... स च घट. C ins. न (after बुद्धिरेव).

का १०६. C ज्ञानरूपेण. C अर्थरूपं वि°. D अथरूप वि°.

(146) [a]) C °हाहोऽत्रलंगयति. AD °स्वभावेन ज्ञानं ज्ञाना°. AD °यति। तद्र°. ADH ज्ञानस्य रूपम्. CL °मतविषय°. [b]) BL ज्ञेयाजाति प्रति°. ADH तेनैत देव चो°. C तेनैव तदेव°. [c]) D om. मर्थरूपवि. BL °व्यस्य विधिर्न°. C यत् पृष्टपातिना उक्तानुरूपा. L तत् प्रविष्टभाविनो ह्यादतावप्रकामा. M °विनोभावादतापप्र°. BLM अनहङ्का°; L °र्माणोन्तररूपा. M °र्माणोन्यरूपा. C संवेद्यत.

नावधार्यते स्वतोऽप्यस्य सिद्धिर्न स्यात्। सत्यम्। सर्वदैव ग्राह्याकारः सहभाव्यनुभूयतेऽस्य, किन्तु तत्पृष्ठभाविनो ह्लादनीयप्रकामा अहङ्कारास्पदविच्छिन्नग्राह्याकारविधर्माण उत्तररूपा अहङ्कारास्पदतया संचेत्यन्त इति स्वतस्तद्विविक्तरूपावधारणमस्ति बुद्धीनाम्। [d]) ज्ञानान्तरेण तु ह्लादादयो गृह्यमाणा अपि तथा न संवेद्यन्त इति अनुभवसिद्धमेतदनपह्नवनीयम् इत्यलमतिविस्तरेण।

तदेवं प्रमाणपरिशुद्धा जातिः शब्देनाभिधीयमाना दृष्टादृष्टविषयव्यवहारसाधनसमर्थेति जातिपदार्थसिद्धिः ॥ १०६ ॥

इति भूतिराजतनयहेलाराजकृते प्रकीर्णप्रकाशे

जातिसमुद्देशः

समाप्तः ॥

---

[d]) L ग्राह्यमाणा. ADH प्रमाणे परि°.

# अथ द्रव्यसमुद्देशः।

(1) [a]) जातिर्वा द्रव्यं वा पदार्थावित्युक्तम्। [b]) तत्र वाजप्यायनदर्शनेन जातिं विशेषणभूतां पदार्थं व्यवस्थाप्य व्याडिदर्शनेन विशेष्यरूपं द्रव्यमपि पदार्थं व्यवस्थापयितुं यथादर्शनं तदेव पर्यायान्तरैरुद्दिशति।

**आत्मा वस्तु स्वभावश्च शरीरं तत्त्वमित्यपि।**
**द्रव्यमित्यस्य पर्यायास्तच्च नित्यमिति स्मृतम्॥ १॥**

(2) [a]) इहार्थक्रियायां द्रव्यमेवोपयुज्यते इति तदेव प्रवर्तकमर्थिनाम्। अतः शब्देन तदेवोच्यते। अनभिधीयमाना तु जातिरवच्छेदिका गुडशब्दे माधुर्यादय इवेति द्रव्यवादिनां दर्शनम्। [b]) द्रव्यं च द्विविधम्, पारमार्थिकं सांव्यवहारिकं च। तत्र द्वितीयं भेद्यभेदकप्रस्तावेन गुणसमुद्देशे वक्ष्यते

'वस्तूपलक्षणं यत्र....' (Vāk. III. भू. ३)

इत्यादिना। [c]) अनेन च द्रव्येण व्याडिदर्शने सर्वे शब्दा द्रव्याभिधायिनो भवन्ति। इह तु पारमार्थिकं द्रव्यं निरूप्यते। [d]) तथा हि **आत्मा** अद्वैतवादिभिरात्मशब्देन तद् द्रव्यमुक्तम्। आत्मैव ह्युपाधिभिन्नं प्रतिभासमानं 'द्रव्यं पदानामर्थ इति तेषां दर्शनमिहैव वक्ष्यमाणम्। [e]) **वस्तु** स्वलक्षणमर्थक्रियाकारि द्रव्यमिति शाक्यैरुक्तम्। [f]) **स्वभावः** इति सत्ताद्वैतवादिभिः स्वभाव आत्मभूता सत्तेति कृत्वा। [g]) तथा हि क्रमरूपोपसंहारे सत्तैव सत्त्वमिति स्वसंबन्धिभिरुपाधिभिरुपहितभेदा सैव द्रव्यम्। [h]) प्रकृतेरेकदेशः चेतनः पुरुषः तद्वारेण शरीरशरीरिणोरव्यतिरेकात् **'शरीरम्'** द्रव्यं

---

(1) [a]) L om. वा. B पदार्थमि°. D °वित्युक्त. [b]) C °व्यापं तदर्थने. C जाति. CD °भूता. C पदार्थवेन (for पदार्थं). B व्यालि. CL °भूतं (for °रूपं); D रूप°. C °स्थापयितु. C °साद्दिशति.

का. १. D स्वभावः C ins. सः॥ १॥ (after °मित्यपि) D °मित्यस्या.

(2) [a]) C अतश्च. C गुंडं (for गुड°). B शब्देन. C वादिना. [b]) D द्विविध. B °भेद° (for °भेदक°). D °प्रह्यावे म. [c]) B व्याळि°. B °मार्थकं. BL om. द्रव्यं. [d]) C त (for तद्). C जात्यैव (for आत्मैव). D सुपाधि (for ह्युपाधि). B °मान. D द्रव्य. C पादाना. M माण. [e]) M om. वस्तु. M °लक्षमाण°. C om. मर्थ. C श्लोकै° (for शाक्यै°). D om. शा (in शाक्यै°). [f]) DH स्वभावमिति. C स ता°. C सेताति; D सतति. A कृता. D कत्वा. [g]) C सतैव. D सक्षैव. B स्वत्व° (for सत्त्व°). C संवर्धाय°; D संबन्धे. C °रुपाधि; M om. °रुपाधिमिः. C रहिता. C सतैव; M सत्तैव (for सैव). [h]) D देशचेतनः. H °व्यति° (for रव्यति°). B °रेका (for रेकात्). B °देवैक°. B om. एक. B शरिरिकिभिः. C शरीत्यभि.

प्रधानमेवेति प्राकृतिकैः शरीरमेवैक आत्मा येषां तैः शरीरात्मभिरुच्यते । [i]) '**तत्त्वम्**' इति चतुर्भूततत्त्ववादिभिश्चार्वाकैर्द्रव्यमुच्यते । पृथिव्यप्तेजोवायुरिति तत्त्वानि, तत्समुदाये शरीरेन्द्रियविषयसंज्ञा इति वचनात् । [j]) तदेवमेतैः परमार्थेन एकमेव वस्तूच्यते । '**द्रव्यमित्यस्य**' इति । द्रव्यं नाम यः पदार्थः तस्यैत एव पर्यायाः । एतेषामेव पारमार्थिकरूपाभिधायित्वात् । नान्ये घटादिशब्दाः । सत्यपि तदभिधायित्वे वक्ष्यमाणनयेनात्मादिशब्दानामेव सर्वत्र घटादावव्याहतप्रसरत्वम् । [k]) तथा च भाष्यम्—

'एकोऽयमात्मा उदकं नाम' (M Bh.)

इति । अत्रात्मशब्द उदके प्रयुज्यमानो द्रव्यवचनः । आकृतिद्वारेण चान्ये शब्दा द्रव्ये वर्तन्ते । [l]) इमे तु तत्परित्यागेन मुख्यया वृत्त्येति विशेषः ।

'सिद्धे शब्दार्थसंबन्धे' (Vā. 1, in पस्पशाह्निक)

इत्यत्र

द्रव्यं नित्यमाकृतिरन्या चान्या च भवति (M. Bh. on Vā. 1 in पस्पशाह्निक)

इति

वदता भाष्यकारेण **नित्यं** द्रव्यं **स्मृतम्** । [m]) संग्रहोक्तस्य तस्यार्थस्यानुवादात् **स्मृतम्** इत्याह । यद्यपि शाक्यादिदर्शने नित्यं न भवति द्रव्यं तथापि तन्मतस्यानभ्युपगमाददोषः । [n]) केवलं यदस्माकं द्रव्यमन्यैरेवमभिधीयत इत्येवमत्रोपन्यासः । यद्वा भाष्यानुसारेण स्वरूपान्यथात्वानापत्तिः विकारभेदेऽपि नित्यत्वं विवक्षितमेवेति सर्वत्र तत्सिद्धिः ॥ १ ॥

[o]) एवं दर्शनान्तराश्रयणेनोद्दिष्टेष्वपि द्रव्यभेदेषु स्वसिद्धान्ताश्रयेण सार्वत्रिकीं द्रव्यपदार्थव्यवस्थां कर्तुमाह—

**सत्यं वस्तु तदाकारैरसत्यैरवधार्यते ।**
**असत्योपाधिभिः शब्दैः सत्यमेवाभिधीयते ॥ २ ॥**

---

[i]) C चतुभूत°. C °वादिभिः आर्वावैः. L °व्यापस्तेज्ञो°. C °रीति. C तत्वभिः. D ततानि. B शक्तिरि° (for शरीरे). [j]) BL om. एवं. B एकैः. A परमार्थ; BL पारमार्थिक. C °त्यस्यैति. C एव (for एत°). C °मेपि (for °मेव). C °मार्थिक°. L °रूपायित्वात्. M °रूपत्वाभिधायित्वात्. C °शब्दः. C °प्याहतस्य. B °प्रसरता; C प्रत्यक्षत्व; H °सरत्वस्व. [k]) °शब्दे. D वर्तते. [l]) L °त्यागे. C ins. द्रव्य (before वृत्त्येति). D वृत्तेति. C °माकाति. H om. चान्या. L अवन्तीति. [m]) B तन्त्रा°. C वादा तस्य (for वादात् स्मृतं); M °वादानात् स्मृतं. BCLM ins. च (after यद्यपि). C शक्यादि. B om. तथापि. C न दोषः (for °ददोषः). BLM ins. एव (before अदोषः). [n]) D केवल. M ins. द्रव्यं (after केवलं). BLM ins. अपि (after अन्यैः). C om. एवं. D °धायते. M वात्रोप°; D °मन्त्रोप°. AH यच्च (for यद्वा). D यद्वाच. C °नपितिः (for °नापत्तिः). C मित्यत्रेति; L °मत्रेति तत्. [o]) ABCDH परं (for एव). C om. °श्रायणेनोद्दिष्टे°. C ins. श्रायणोद्दिष्टेष्वपि (before द्रव्य°). A om. द्रव्य°. C व्यवस्था

का. २. B °पाधि. B शण्डैः. C °मेव. D °धायते.

(3) [a]) इह सर्वशब्दानां पारमार्थिकं तत्त्वं साक्षात् स्प्रष्टुमशक्तानामनेकोपाधिविषयनिहितपदानां तद्रूपालिङ्गनं व्यवहारे समालक्ष्यते । [b]) उपाधीनां चागमापायवशविधुरितनिजस्वरूपाणामर्थिसार्थसमाशापूरणप्रतिहतशक्तित्वान्न तावत्येव पर्यवसानमित्युपलक्षितरूपपृष्ठपातिनः शब्दा व्यवस्थाप्यन्ते । [c]) अवधृतरूपनिवेशित्वाच्च शब्दानामवधारणानुसारमर्थे प्रवृत्तिः, अवधृतिश्चाकारद्वारेण । निराकारस्य बुद्ध्युपारोहायोगात् यथाप्रत्ययं भेदावसायस्य बाध्यमानत्वादनुयाय्यभिन्नमेव रूपं परमार्थतः । तदेव ब्रह्मरूपं **सत्यम्** ॥ २ ॥

[d]) स्यादेतत् । उपाधिषु शब्दानां विश्रान्त्यभावे शब्दार्थोपाधित्वं तेषां न स्यात् । अवाच्यस्य तदुपाधित्वायोगदित्येतद्विचारयितुमाह—

**अध्रुवेण निमित्तेन देवदत्तगृहं यथा ।**
**गृहीतं गृहशब्देन शुद्धमेवाभिधीयते ॥ ३ ॥**

(4) [a]) अदो देवदत्तस्य गृहं यत्रासौ काकः प्रतिवसतीत्यत्रानियतस्वामिकगृहोपलक्षणायोपलक्षणभूतस्य काकस्योत्पतितेऽपि तस्मिन्नुपलक्षणस्य कृतत्वाद् अध्रुवत्वमनित्यत्वमिति तदनादरेणैव तदुपलक्षितं गृहमभिधीयते गृहशब्देन यथा [b]) तथा प्रकृतसंबन्धादसत्योपाध्युपलक्षितं सत्यमुपाधिरूपानादरेण शब्दैरभिधीयत इत्यनभिधीयमानस्याप्यभिधानविषयनियामकत्वादुपलक्षणत्वे सत्युपाधित्वनिदर्शनेन समर्थितम् । [c]) तथा हि

'क्तक्तवतू निष्ठा' (P. 1. 1. 26)

---

(3) [a]) D तत्र ( for तत्त्वं ). M om. साक्षात्. C °मशब्दानां ( for अशक्ताना ). B विहित. BLM तद्रूपोक्ति. D तद्भया° ( for तद्रूपा° ). C लिङ्गाना. C लक्ष्य. B चक्षते ( for लक्ष्यते ). D उपाधाना. [b]) C एव शब्द ( for वश° ). D विधुरिति. M ins. साक्षात् ( before अर्थि° ). D °सर° ( for पूरण° ). C °पातितः. C शब्द. [c]) C °धूत ( for धृत° ). C तुसारम्येर्थे. A प्रकृतिरव°; CM प्रतिर्पत्तिरव°; D प्रकृति अव°. C °स्वाकार° ( for °श्चाकार° ). D °नुद्ध्यु ( for बुद्ध्यु° ). B प्रत्ययस्त्वः. L प्रत्ययं त्व°. M प्रत्ययं च. D बध्यः. C °दनुपाध्य°. D °भिवमेव. H ins. परमार्थतः तदेव ब्रह्मरूपं (after ब्रह्मरूपं). [d]) C ins. सत्यं ( before स्यादेतत् ). B °भावात्; D °भावो ( for °भावे ). B एतत्. BL व्याभिचारयितुम्.

का. ३. C °ग्रहं. ( for °गृहं ). C ग्रहीतं. D धायते.

(4) [a]) C आदौ ( for अदो ). C प्र° ( for प्रति° ). DHLM नियत°. B गृहायोप°. C ग्रहो° C om. °पलक्षणायो°. D °लक्षणस्व°. D rep. ( after °मनित्यत्व ) °मनियतस्वामिकगृहोपलक्षणायोपलक्षणभूतस्य काकस्योत्पतितेऽपि तास्मिन्नुपलक्षणस्वकृतत्वादा°. C तदादरेणैव. C लक्षण ( for लक्षितं ). C गृहीतं ( for गृहं ). B °मधीयते. C संबन्धेन ( for °शब्देन ). D ins. या ( before यथा ). [b]) ADH om. °त इत्यनमिधीय°. C om. अपि. M °लक्षणे ( for लक्षणत्वे ). BM उपाधित्वं. C उपाधिदर्शनेन. [c]) D क्तवक्तवत्. C क्तवस्तु. C निष्टे°. D निस°. A °बन्धस्य स°. C दध्युप°. C ins. न ( before तद्ग्रहितस्य ). C °पह्ययस्य ( for °रूपस्य ). L भाष्य°. ACDH दर्शन°. C °मुपज्ञम्.

इत्यनुवन्धस्याप्रयोगसमवायित्वादध्रुवस्योपलक्षणत्वे तद्रहितस्य शुद्धस्य प्रत्ययरूपस्य संज्ञाप्रसङ्ग इत्यत्रेदं भाष्ये निदर्शनमुक्तम्। [d]) ननु काकोऽतिविलक्षणाद् गृहाद् भेदेनावधार्यमाणो मा भूद्गृहशब्दाभिधेयः। घटादयस्त्वाकाराः पृथगनुपलभ्यमानतत्त्वाः कथमिव तच्छब्दैर्नाभिधीयेरन्। [e]) अन्यो ह्युपाधिरुपलक्षणभूतः सामानाधिकरण्येनावच्छेदकः। तद्यथा दतिहरिरित्यत्र पशुः। [f]) अन्यत्तु विशेषणमपृथक्छब्दवाच्यमुपरंजकम्। तद्यथा वानेयमुदकमिति। वनसवन्धोपाधीयमानरूपविशेषमुदकम्। [g]) '**अभिधीयते**' इति। वनसंवन्धो विशेषणमुपरंजकतयाभिधेयकमापद्यत इति। तथा चोक्तम्।

> अर्थविशेष उपाधिस्तदन्तवाच्यः समानशब्दो यः।
> अनुपाधिरतोऽन्यः स्यात् श्लाघादिविशेषणं यद्वत्॥

इत्याशङ्क्य सदृशतरमत्र निदर्शनमाह—

> **सुवर्णादि यथा भिन्नं स्वैराकारैरपायिभिः।**
> **रुचकाद्यभिधानानां शुद्धमेवैति वाच्यताम्॥ ४॥**

(5) [a]) रुचककुण्डलाद्याकारविशेषोपाधीयमानरूपभेदमपि सर्वत्रानपायिरूपं सत्यमिति '**अपायिभिः**' आकारविशेषैस्तत्साध्यार्थक्रियाकरणान्न तत्रैव रुचकादिशब्दाः कृतपदसंवन्धाः। [b]) किन्तु तदतिरिच्यमानमर्थवस्त्वभिधायकत्वेन समाविशन्ति तद्वत् प्रकृतिसंवन्धादाकारोपहितनानात्वमपि परतत्त्वं शब्दगोचर इत्यर्थः। [c]) तत्र च

---

[d]) ACD अस्ति ( for अति° ). H om. अति. C क्षणे. C ग्रहात्. M om गृहशब्दा ... सामानाधिकरण्ये. C स्वाकाराः. C °लद्भ्य° ( for °लभ्य° ). C तत्त्वात्. D °धायेरन्. [e]) ABCDH °प्युपा°. C ins. सामान्येनाधिरुपलक्षणभूतः ( after °भूतः ). C समाधि° ( for सामानाधि° ). ADH इति हरिः. B दतिः हरिः. BCL ins. पशु ( before °रित्यत्र ). [f]) CM अन्यत्र. C °मप्रथम. C °रंतकं ( for रञ्जकं ). D तद्व्य व्या°. L om. तत्. C °पाधिम°; D °पधाय° L °पधीय° ADH °विशेषणं ( for विशेपमुदकम् ). [g]) A वचन° ( for वन° ). ADH ins. शरीर ( before संवन्धो ). A संवन्धे. D °तयं ( for °तया ). B °मापाद्यत. BL एव ( for इति ). A ins. आर्या ( before °मान° ). C शब्दे. M यं ( for यः ). M. अन्यस्या° ( for अन्यः स्यात् ). C om. श्ला ( in श्लाघां° ). C याद्व ( for यद्व° ). C °दितिरां° ( for °दित्या° ). C तूरमित्यत्र ( for °तर° ).

का. ४. BCDHLM युक्तं ( for भिन्नं ). C °रपादिभिः. D ह्चका°. C °द्याभिधा°. C °द्धं मवैति.

(5) [a]) BL °पोपधीय. ACDH °रूपाभेद°. ACDH °त्रोपाधि°. M. om. इति ( after सत्य ). AH उपाधिभिः; D उपाधिभिः. D °ह्यत्साध्या° ( for °स्तत्साध्या° ). C °कारणात्. BCL °वन्धाः ( for संवन्धाः ). [b]) C °माने. C शरीरमर्थाद्वस्त्यभि° ( for मर्थवद्वस्त्वभि ). BLM °धेयकेन; C °धा. B °दाकारोपहिता°; D °दारोपहित°. C नाचात्व°. BL परं. [c]) C अत्रैव ( for तत्र च ). C उपाधिभि°. ADH शाक्य° ( for साध्य° ). D कतः (for कृतः). D °पाधाना. C °मत्यत्वं° ( for °मवाच्यत्व° ); C °मवाच्यत्वं ( for मसत्यत्वं ). C कारणात्. C तदर्थं. B °हारवाच्य. C ins. अतः ( before तेषा ).

अपायिभिरिति हेतुर्निर्देशः साध्यसमकक्ष्यतया कृतः। ततश्चोपाधीनामवाच्यत्वमसत्यत्वं च सिद्ध्यति। असत्यत्वादेवार्थक्रियाकरणात्तदर्थं च शब्दव्यवहारादवाच्यत्वं तेषामित्यर्थः। [d]) ननु रुचकादौ प्रकृत्यन्वयोऽवधार्यत एव। [e]) इहापि वस्तूना ज्ञायमानत्वेन सत्वात्, ज्ञानस्य वैकल्पिकाकारानवस्थानान्निराकारशुद्धसंविन्मात्रानुगमस्य स्वसंवित्तिसिद्धत्वाददोषः। [f]) ननु विशेषणोपरक्तं विशेष्याभिधानं युक्तमित्युपसर्जनीभूतस्याभिधाने का क्षतिः। [g]) न काचित्, केवलमुपाधिष्वेवात्र तात्पर्यदृष्ट्या पदबन्धो निवार्यते। गुणत्वेन त्वभिधानमस्तु न तावत्येव विश्रान्तिरिति द्रव्यनिष्ठतासिद्धिः ॥ ४ ॥

अत एव विशेषणोपरागात् साङ्कर्यदोषं परिहर्तुमाह।

**आकारैश्च व्यवच्छेदात् सार्वार्थ्यमवरुध्यते।**
**यथैव चक्षुरादीनां सामर्थ्यं नाडिकादिभिः ॥ ५ ॥**

(6) [a]) सर्वभावेषु ब्रह्मणो द्रव्यलक्षणस्याभेदात्तदभिधायित्वे शब्दानां सर्वत्र तस्य भावात् सार्वार्थ्यं शब्दान्तराभिधीयमानार्थत्वं साङ्कर्यं प्रसज्येतेऽयत्रेदमुच्यते। प्रतिनियताकारपरिच्छिन्नवृत्तित्वात् सर्वार्थत्वप्रतिबन्धादसङ्कर इत्यर्थः। [b]) घटाकारोपधानपुरःसरं घटशब्देन ब्रह्मद्रव्यमभिमुखीक्रियते पटाकारोपधानेन तु पटशब्देनेत्याद्युपाधिरूपोपाहितविवेकित्वमभिधानीयम्। [c]) तद्यथा नाडिकाशुषिरवर्त्मनिहितनयनास्तदवकाशावस्थितमेवार्थभागं पश्यन्ति तथाविद्यावच्छिन्नदृक्शक्तिभिराकारभेदैरेव वस्तूपलक्ष्यते। [d]) तथैव च यथाध्यवसायं शब्दनिवेशाच्छब्दैरेभिधीयत इत्यर्थः। यथावरणादिनेन्द्रियस्यैव प्रकाशशक्तिः प्रतिबध्यते न विषयो विक्रियते तथानाद्यविद्यावच्छेदप्रकल्पितविभागाना जीवानामेव संवेदनशक्तिर्नियम्यते येन

[d]) ADH चकार्यादौ (for रुचकादौ). C एवं. [e]) ACHLM जायमानत्वेन D तायमानत्वेन. D °मत्वात् (for सत्वात्). C °कारस्पानवस्थानानि°. B om. निराकार ... स्वसवित्. ACDHL °नगम्यस्य. [f]) ABCDH om. युक्तं. D °सर्तना (for °सर्जनी°). [g]) A om. युक्त. C om. काचित्. C ins. अपि (after अत्र) C तात्पर्यं दृद्धा; H °इष्ट्वा. B पद्य° (for पद°). D °त्वविधान°. BLM ins. च (after न). D °निमु° (for निष्ठ°).

का. ५. M स्वव्यवच्छेदात्. L सामर्थ्यं. ADHM अनु°. M नालिका°.

(6) [a]) BL ब्राह्मणो. BC सर्वार्थ्य. D °धायमाना°. C प्रसज्यनः. D प्रसज्येत. A सर्वार्थत्वाप्रति° B सर्वार्थप्रति°. CD सर्वार्थत्वं प्रति°). [b]) °मामुखीक्रि°. C घटाकारो°. C शब्देन तु रूपा°; D शब्देनत्वाद्युपा°. BL om. °विवेकि°; C °विवेकी°. [c]) CM नालिका°. B सुपिवन्मर्मविहित; C वर्त्मनीहित; D om शुपिर ... शक्तिमिराका°. B स्तदाकाशा°. M तथाविच्छिन्न°. ACH °पृथक्शक्ति. C वस्तु. [d]) M यथार्थावसायं. C °णादिन्द्रिय. M प्रकाशन°. CD शक्ति. D om. प्रति ... सवेदनशक्तिः. C तेन (for न). B °पि क्रियते. C अनाद्या°. C °छंद. C °न्त्यभि°. C प्रयुज्यते; D प्रयुयुन्ते. BL प्रयुञ्जते. B तत्त्वविद्यया. C ins. नाति (before नाडिका°). M नालिका°. C सुचयति.

विच्छिन्नार्थाभिधानेन भेदविषयाण्यभिधानानि प्रयुज्यन्ते, न तु तत्त्वं विषयाविली-क्रियते इति नाडिकानिदर्शनेन सूचयति । [e]) नाडिकादिभिरित्यादिग्रहणादवधानप्रति-घातमूर्त्यभिजनाद्यवरोधः । यत्रैव ह्यवधानं तदेव ह्यवधार्यते । मूर्त्यभिजनो रूपसौन्दर्यं तेनापहृतोऽन्यं न पश्यति ॥ ५ ॥

[f]) ये तर्ह्याकारमात्रनिवेशिनः सन्निवेशादिशब्दाः ते धर्ममात्रमभिदध्युः इति सार्वत्रिकी द्रव्यपदार्थव्यवस्था विशीर्येतेत्याशङ्कयाह ।

**तेष्वाकारेषु यः शब्दस्तथाभूतेषु वर्तते ।**
**तत्त्वात्मकत्वात्तेनापि नित्यमेवाभिधीयते ॥ ६ ॥**

(7) [a]) उपाधिमात्रस्वभावेष्वपि सन्निवेशाद्याकारेषु सन्निवेशादिशब्दा वर्तमानाः परमार्थतस्तत्त्वादव्यतिरेकादुपाधीना तन्निष्कर्षे स्वरूपस्यास्वरूपत्वात्तदात्मनैव सत्त्वात् तदेव नित्यमुपाधिमद्द्रव्यमेवमप्यभिधानेऽभिहितं भवति । [b]) तत्त्वमात्मा ह्युपाधीनाम्, न तु ते तस्यात्मान इति व्यावर्तकत्वात् सर्व एवोपाधयस्तदात्मना सन्तः तथैवाभिधीयन्ते । [c]) यदा ह्युपाधिमल्लीनता तदोपाधय उपाधयो न भवन्ति । ततस्तु निष्कर्षे धर्मान्तराश्रयतया स्वातन्त्र्यादुपाधिमत्त्वमेव नोपाधित्वमित्याशयः ॥ ६ ॥

[d]) यद्येवं धर्माणामवस्थान्तरे धर्मिरूपत्वान्नित्यत्वे सत्यत्वे चाकाराणामसत्यत्वम्, द्रव्यस्य तु सत्यत्वमित्येतस्य नियमस्यानुपपत्तिरित्याशङ्कयाह ।

**न तत्त्वातत्त्वयोर्भेद इति वृद्धेभ्य आगमः ।**
**अतत्त्वमिति मन्यन्ते तत्त्वमेवाविचारितम् ॥ ७ ॥**

---

[e]) CM नालिका°. ACD °दवघात°. B यत्रैवं. DM व्यवधानं. BCLM तदेवाव°. H °धार्य (for धार्यते). AM °जना. B रूपं. C °हृतो ; BH °हुतो. B अन्यन्न; C अत्यन. [f]) C ins. न (after ये) ACDH °निर्देशतः. C रि (for इति). D सार्वत्रिका. C विभिद्यीयते; D विशीर्यंते.

का. ६. D यशब्दः B सदा (for तथा). B °त्वोक्तेनापि. D °धायते.

(7) [a]) C om. °मत्र°. C °स्वभावेष्वपि. D °द्याकारेषु. CM °शब्दो ; D शब्द. BL om. वर्तमानाः, CM °वर्तमानः, D वर्तमाना. B °नुपाधीना. D तन्निष्कर्ष°. C आत्मस्वरूप°. ACD om. तद् (before आत्मनैव). C °मुपाधी. ACDH °मल्लीनता तदा द्रव्य° ; M °मल्लीनता तदो द्रव्य°. C om. °मेव. C °मप्युभि°. C ऽनिहितं. [b]) ACH केवलस्य (for ते तस्य). D तेवलस्य. ACH आत्मनः ABCDHL व्यापकत्वात्. B उपचय° (for उपाधय°) BL ins. ते (before तदात्मना). ACD तदात्मना. C सत्तथैवाभि (for सन्तस्तथैवाभि°). B °धीयते ; D °धायते. [c]) BC तथा ह्युपा° ; D तदा ह्युपा ; M तथा यदा ह्युपा°. C °धीमल्लीनता ; D °धिमल्लानता. ACDHL उपाधेय. B om. उपाधयो (before न). D om. उपा° (in उपाधयो). B निष्कृष्टे ; D निर्भेपे. C °पाधित्वमेव. C °ते भावः (for °त्याशयः). [d]) BM ins. अपि (before अवस्था). H °न्तर. C धर्मि°. D चाकरीणां°. C मनित्यत्वं. C ins. अवयव (before द्रव्यस्य). C सत्यत्वे नित्यत्वे तस्य.

का. ७. C आगतः.

(8) [a]) अयमत्रार्थः। नेहाद्वैतनये सत्यासत्ये द्वे रूपे स्तः, अद्वैतहानिप्रसङ्गात्। किन्तु पारमार्थिकमेकमेवाद्वयं तत्त्वम्। तच्चानादिसिद्धाविद्याविलसितसहं प्रमातृविषयतया यथातत्त्वमनवभासमानमित्यनेकविकल्पपरिघटिताकाररूपतया व्यवहारमवतरति। [b]) तथा च तदेवाकारनानात्वोन्नीयमानस्वरूपभेदं चकास्ति, नान्यत्। तद्व्यतिरिक्तस्यान्यस्याभावात्। तत्र च योऽयं प्रकाशः स विद्या। [c]) अप्रकाशस्तु तमोऽविद्या। न च प्रकाशाभावोऽप्रकाशो नाम कश्चित्प्रमाणसिद्धो निरूप्यः। ततश्च योऽयं भेदप्रकाशः स एवैकघनप्रकाशाभावः प्रकाशविच्छेदोऽविद्या। [d]) तत्र विच्छिन्नान्वयोऽवच्छेदोऽवधार्यत इति विच्छिन्नप्रकाशः सत्या विद्यैव। विच्छेदमात्रं तु अप्रधानस्वभावं न किंचिदविद्येति परमार्थविचारे न किंचित्तत्त्वं व्यवतिष्ठते। तत्त्वमेव यथाप्रतिभासं भेदेन चकासदविचारितरमणीयं प्रपंचोऽतत्त्वमिति व्यवह्रियत इति ब्रह्मविदः। [e]) तथा चाविचारितरमणीयं परीक्षया व्यवस्थापितं तत्त्वमेवाभिन्नं तीर्थिका भेददर्शनव्यवस्थिता भेदात्मकमतत्त्वं मन्यन्त इति विचारेणाविद्याविलये ब्रह्मैकनिष्ठता दर्शनानाम्। तदुक्तम्।

सत्या विशुद्धिस्तत्रोक्ता विद्यैव

इत्यादि ॥ ८ ॥

एवं तेन तेन रूपेण ब्रह्मैव विकल्पितं भवतीति सर्वशब्दानां तत्तदुपाधिमुखं तदेव विषयः सिद्ध इत्याह—

**विकल्परूपं भजते तत्त्वमेवाविकल्पितम्।**
**न चात्र कालभेदोऽस्ति कालभेदश्च गृह्यते ॥ ८ ॥**

---

(8) [a]) C ins. अस्य ( before अयं ). BL om. अत्र. C नहि. C द्वैतं° ( for अद्वैतं ). C द्व ( for द्वे ). C om. एकं. D एवं ( for एकं ). ADH om. तत्त्वम्. D अविया° ( for अविद्यां ). BCHLM सह ( for सहं ). D ins. यया° ( before प्रमातृ° ). C तथात्वं ( for यथातत्त्वं ) ADH om. इति ( before अनेक° ). C °मनु° ( for °मव° ). [b]) D तानात्वो° ( for नानात्वो° ). BL om. अन्यस्य. L प्रकाशा. L om. स ; M सा. [c]) C प्रकाशाभ्या° ( for प्रकाशाभावो° ). B °भावः। प्रकाशो ( for °भावोऽप्रकाशो ). C सैवै° ( for सैवैक ). D °घान ( for घन ). C °प्रकाशक° ( for प्रकाशा° ). [d]) C विच्छेदान्वयो° CM ऽविच्छेदो ; L विच्छेदे. C छेद° ( for विच्छेद° ). C °मात्रत्वं ( for मात्रं त्व° ). C त्वप्रधा° ; L. त्व प्रधन° ( for त्व प्रधान° ). B °स्वभावो. C om. न ( before किंचित् ). AHD परमार्थत्वं°. C परमार्थत्वे ; M परमार्थ तत्त्व°. ACDH om. न ( before किंचित् ). C °द्यत त्वं. D रमणायं. B चसकाशा° ; C चावकाशा°. B प्रपंचस्तत्त्वं. [e]) D पराक्षया. ACDHL व्यवस्थितं. C अत्यन्त ; M अभिन्न. C तीर्थिका°. M तीर्थकार°. D विचारेण ब्रह्मैव. C °वीलये. C निष्ठतया. ADH दर्शनम्. ACDLM सूत्रोक्ता ( for स्तत्रोक्ता ). f ) ABH °विधाना ( for शब्दानां ). D विशब्दाना. ACDH तदुपाधि°. ACD °सुखं ( for °मुखं ).

का. ८. D °कल्पित°.

(9) [a]) परमार्थतः **अविकल्पितं** विकल्पानामविषयो यत्तत्त्वं तदेव व्यवहारेऽन्यस्याभावाद्विकल्पमात्रम्, **विकल्परूपं** नानाविधभेदावभासम्, अनादिसिद्धाविद्यावशात् समवलंबते। जीवात्मभेदेनावतिष्ठमानं तद्गतत्वेनेति मूर्तिविवर्ताश्रयदिक्च्छक्तिप्रविभक्तदेशनानात्वं निमित्तपौर्वापर्यावलंबनसहम्। [b]) एवमकालकलितमपि तत्त्वमनादिनिधनं कालाख्यस्वतन्त्रशक्तिविनिवेशितप्रतिबन्धाभ्यनुज्ञावशाज्जन्मादिभावविकाराभिधीयमानपौर्वापर्यं चकास्तीत्यर्थः ॥ ८ ॥

[c]) नन्वविद्यमानस्य तत्त्वे प्रतिभानमयुक्तमित्याशङ्क्य दृष्टान्तेनोपपादयति।

**यथा विषयधर्माणां ज्ञानेऽत्यन्तमसंभवः।**
**तदात्मेव च तत् सिद्धमत्यन्तमतदात्मकम् ॥ ९ ॥**

(10) [a]) विज्ञानवादे विषयाकारस्य भावतोऽसत्यत्वान्नीलादिस्तद्गतो धर्मो जडोऽजडे **ज्ञानेऽसंभवी अत्यन्तम्** इति जडाजडयोर्न केनचिदंशेन सारूप्यमित्याह। तथा चोक्तम्—

'एकदेशेन सारूप्ये सर्वं स्यात् सर्ववेदनम्।
सर्वात्मना तु सारूप्ये ज्ञानमज्ञानता व्रजेत् ॥' इति ॥ ९ ॥

[b]) अथवा संभविधर्माच्छुरितं विज्ञानं विशुद्धबोधस्वभावमप्यविद्याया व्यवहारेऽवभासत इति इष्टं निदर्शनान्तरमाह।

**तथा विकाररूपाणां तत्त्वेऽत्यन्तमसंभवः।**
**तदात्मेव च तत्तत्त्वमत्यन्तमतदात्मकम् ॥ १० ॥**

---

(9) [a]) D परमार्थतोः. D °कल्पित. B °मविपयोऽप तत्त्वं; C °मविषयः यदेव तत्त्वं. C °हारेऽस्त्यस्तिस्वभावा°. M °द्विकल्प्य°. M विकल्पत°. C नानावेध°. नानात्रिध°. CM सर्वमवलंबते. AHL तदत्वेनेति; D तद्गुनत्वेनेति C निविवर्ता° (for मूर्तिविवर्ता°). AHL °विभक्त°. C विभक्ते; D निमित्त°. C om. देश. BC नानात्व°. B °पर्यालंबन° [b]) B तत्तत्त्व°. C मनधिनिधान. C कालाख्य. BCLM स्वातन्त्र्य C विवेशित°. CM °विधीय°; D °भिधाय°. C चकास्तित्यर्थः. D चकास्तात्पर्यः. [c]) D नत्व (for नन्व°). C तत्वेन. L °भासन°. B °युक्त° (for मयुक्त°). D शङ्का (for °शङ्क्य)

का. ९. D °मसंभव. B तदात्वेन; C तदात्येव; L तथात्मेव. C संसिद्ध°. C °मत्यंत्यमहदा°.

(10) [a]) C वाह्याकारस्य. ADH तावतो°. C °ऽसत्वत्वा°. C °नीत्वादि°. D °तीलादि° (for °नीलादि°). ADHM °स्ततद्गतो: C तद्गतो D जडा (for जडो). C om. ज्ञाने. ACDH असंभवो°. C °जड° (for °जडयो) B तदुक्तम् C सारूप्य°. C संवित् (for सर्व). BL सर्वात्मनात्म°. C सारूप्या°; L सारूप्य°. C संवित्स्यात् (for ज्ञानम°). D °मज्ञानता. [b]) BL अथवा°. D °वर्मो°. ADHM °क्षुरितं. C विज्ञान; D om. विज्ञानं. ADHM अनुज्ञाया. ADH इत्यं. C द्रष्टुं. C निदर्शनामाहप्या; L निदर्शनान्तरमप्याह.

का. १०. CLM यथा. C °यत्वे. C तदात्मैव. C तत्रत्व. C °मदात्मकम्.

(11) [a]) सांख्याभिमतमविकृतं प्रधानतत्त्वं सर्वविकारग्रन्थि बीजावस्थमभिन्नमनुप्रसृष्टमेव महदादिविकाररूपैः परमार्थतः। तद्धि महदादिविकारशक्तियुक्तं गुणसाम्यावस्थात्मकं गुणवैषम्यविमर्दवशोपजायमानविकारनानात्वाद्विलक्षणमेव। [b]) अथ च व्यवहारे महदादिविकाररूपावधारणेन विना तदुपलंभासंभव इति सर्वदर्शनेष्वविवान्वयिनी। एवमसत्याकारोपधानेन तत्त्वप्रतिभासः सिद्ध इति साध्यान्वयो गृहीतः॥ १०॥

[c]) कथं पुनरेतदवगम्यते आकारा असत्याः, ततोऽन्यत् सत्यमित्याह।

**सत्यमाकृतिसंहारे यदन्ते व्यवतिष्ठते।**
**तन्नित्यं शब्दवाच्यं तच्छब्दतत्त्वं न भिद्यते॥ ११॥**

(12) [a]) 'तदेव हि नित्यं यस्मिंस्तत्त्वं न विहन्यते'

(M. Bh on Vā. 1, पस्पशाह्निक)

इति भाष्यानुसारेणैतदुच्यते। तथा हि तत्रोक्तम्।

'कनकमित्येव सत्यं पुनरपरयाकृत्या युक्तं खदिराङ्गारसवर्णे सुवर्णकुण्डले भवतः' इत्यनेनैव दृष्टान्तेन विकारापेक्षया भिन्नस्य ब्रह्मणः सत्यतोच्यते। [b]) यथा हि तत्र रुचकाद्याकारोपमर्देन सुवर्णमित्येव सत्यम्, एवमनन्तविकारग्रामापाये सर्वान्तेऽवतिष्ठमानमनपायि ब्रह्मरूपं सत्यं तदेव च भावतो नित्यम्। [c]) आपेक्षिकं तु जात्यादीनां व्यवहारे नित्यत्वमुच्यते। तथा हि व्यक्त्यपाये जातिरवतिष्ठमाना गोत्वादिका नित्या। तत्राप्यश्वत्वादिभेदत्यागे पृथिवीत्येव सत्यम्। तत्राप्यप्त्वादिभेदापाये वस्त्वित्येव

---

(11) [a]) B साख्यस्यापि, CM साख्यस्यावि°; H साख्यावि. C °कृत. BM प्रधानं; C प्रधानत्वं. C यन्थिं (for ग्रन्थि). C °संसृष्ट°. C महादा°. C विकारपैः D om. °रूपैः ... विकारस्य. C परमार्थत. AH विकारस्य. C °युक्तुं. D °वश्यात्मकं. D °वैशम्य°. D om. °विमर्द°. C नानाद्वित्रं. [b] ADHM अयं च. C ins. रूप (before °विकारं). C om. विना. AH सर्वदेशेष्व°; D सर्वदेशेय° B °न्वयिनि; D तुयिनी. C यव (for एव). B °मत्याकारो°. ACDH ऽपधानेन. C ins. च (before तत्त्व°). [c]) L om. एतद् (after पुनः).

का. ११. C °संहारो पदन्ते. C °तिष्ठते. LM तच्छब्दात्तच्च न भिद्यते.

(12) [a]) C तदव. C विहेन्यत. C भाषाश्रय°. ADHL °ह्यत्रोक्तम्; C om. अत्रोक्तम्. D °मित्यव. D सत्य. C युक्त. AB °ङ्गारसदृशे; DH °ङ्गारः; L ङ्गारे. CDHL om. सवर्णे. C सवर्णः (for सुवर्ण°). D °सवर्ण°. B भव (for भवत). C om. दृष्टान्तेन विकारापेक्षया. [b]) ACDHM तथा हि. C स्त्वका; D रवका°. C मर्द्दनेन. L °मनन्तर°. C सन्वतोते (for सर्वान्ते). C °मानोपाधि C om. ब्रह्म. C भवतो. D नित्य. [c]) AH आपेक्ष्यं; BL आपेक्षकं; C आपेक्षितं; D अपेत्यं. C जात्यादिना. ADH ins. सर्व (before व्यवहारे). C °व्यत्तयापाये. D °तिमुमाना C दतिका (for नित्या). B °प्यश्वत्वादि ... अप्त्वादि. D अस्वत्वा°. C °त्यापायादि°; L °त्वाद्भिदाभावे; CM त्वादिभेदापाये. C °श्वत्वादिभेदो°; D °प्यत्वादिभेदा°. C °नाममप्र°,

सत्यं सर्वनामप्रत्याय्यम्। [d]) तत्रापि संविद्रूपस्यानपायिनोऽनुगमाद् विषयाकारविवेके तदेव पारमार्थिकं सत्यमिति नेतिनेत्युपासीतेति भावनाय चोद्यते। संविच्च पश्यन्तीरूपा परा वाक् शब्दब्रह्ममयीति ब्रह्मतत्त्वं शब्दात् पारमार्थिकान्न भिद्यते। विवर्तदशायां तु वैखर्यात्मना भेदः। [e]) तत्र च तदेव नित्यं जात्यादिरूपेण शब्दवाच्यम्। तत्राप्यान्तरोपादानविश्रान्त्या वाचकत्वस्य व्यवस्थापनात् स्वरूपान्तर्गतस्यार्थस्य वाच्यत्वाद् वाच्यवाचकयोरविभागः सिद्ध इति प्रथमकाण्डे निर्णीतम्। अत एवानन्तरमिहाभिधास्यति

'तस्य शब्दार्थसंबन्धरूपमेकस्य दृश्यते"

इति ॥ ११ ॥

[f]) यदुक्तं

'तदात्मेव च तत्त्वमत्यन्तमतदात्मकम्' इति तत्रात्यन्तमतदात्मनां तावद् व्याचष्टे।

**न तदस्ति न तन्नास्ति न तदेकं न तत् पृथक्।**
**न संसृष्टं विभक्तं वा विकृतं न च नान्यथा ॥ १२ ॥**

(13) [a]) वैकारिकसर्वव्यवहारातीतत्वात् पारमार्थिकेन रूपेण विकारात्मकं तत्त्वं न भवति। [b]) तथा हि। **अस्ति** इति न शक्यते व्यवहर्तुम्। सत्त्वोपाधिकस्य स्वरूपस्य तत्त्वस्वरूपायोगात् तेनात्मना व्यवहारानवतारात्। [c]) नापि **नास्ति** इति, अभावोपाधिकस्याप्यतथात्वात् प्रमाणेन भावात्मकस्य तत्त्वस्याचोदितत्वात्। एकसंख्योपाधीयमानस्वरूपविशेषं तत्त्वं न भवति। निरूपाधिनः तत्त्वस्य वस्तुतोऽभिन्नत्वात्। तथा चैकमित्यप्रतीतेः। [d]) नापि पृथक्त्वाहितविशेषम्, तद्भिन्नस्यासत्यत्वात्। नापि

---

[d]) C °नुपायिना; D °नुयायिनो; H °नुपाथितो. C °नवगमा°; M °नपगमा°. ACDH °दविषया° B °गमाविषया° B °विवेक. C तप्त्वे (for तदेव). C °पर (for °पार°). ACDHM भावनया. C सविश्य. C वाक् (for वाक्). C °मार्थिकेन. D वैश्वर्या. D भेद. [e]) A तन्त्रान्तरे उपा°; DH तन्त्रान्तरे पा°. C ins. शब्दविषय (after वाचक°). M व्यवस्थानात्. C सरूपा°. B om. अर्थस्य. H om. वाच्य°. B °वाचकतयो° D निणातम्. C अ एव. C वायति. M om °रमिहा ... दृश्यत इति. BL संवन्धरूपं. B मृश्यते. [j]) M om. यदुक्त ... अतदात्मताम्. C repeats च. C तत्रत्व; D तत्तव. B °दात्मक इति. BHL °मतदात्मकता

का. १२. D नं तत्. BHLM न (for वा) C वि. C वाकृत. BL नन चान्यथा.

(13) [a]) CD °तीततापार°. [b]) H om न शक्यते ... नापि नास्तीति. B सत्तो°. AM तत्त्वस्य भावं; B तत्तस्वभावा°. C °स्यत्यन्ताभावो°. BL प्यतत्वा. [c]) C °प्यन्यत्वा: M °प्ययतत्वा°. BDHLM °वेदित°. C °पधीय°, D °पधाय. BCL om. °स्व°. DH °मविशेषं. D भति. D भिद्दपा° ADH निरुपाधितः, C निरुपाधि. D °मप्रतीते. [d]) ADH °स्यासत्वात्; C °स्यासत्वात् CD om. विभागोपाधिक. D क्रमाणेन. H हुतो (for कुतो). B संसृष्टः; C विसृष्टं.

संसर्गोपाधिकम्, विभागोपाधिकं वा, ततो द्वितीयस्य प्रमाणेनानुपपत्तेः, कुतोऽभिन्नं विभक्तं च केन वा संसृष्टं स्यात्। [e]) परिणामनिषेधेन विवर्ताभ्युपगमान्न **विकृतम्**। अनेकभावग्रामरूपतया चाद्भुतया वृत्त्या विवर्तनादविकृतमित्यपि न शक्यते व्यवहर्तुमिति सर्वव्यपदेशातीतं तत्त्वं परं ब्रह्म ॥ १२ ॥

[f]) अथ च तदात्मैवाविद्यायामवधार्यत इत्याह।

**तन्नास्ति विद्यते तच्च तदेकं तत् पृथक् पृथक्।**
**संसृष्टं च विभक्तं च विकृतं तत्तदन्यथा ॥ १३ ॥**

(14) [a]) भावाभावविकारावभासजननशक्ति तदेवास्ति नास्तीति च सत्तासत्तोपाधिकव्यवहारसहं भावतस्तु निःसत्तासत्तं निःसदसत् परं ब्रह्म। [b]) व्यावहारिकं चैकानेकव्यवहारं जातिव्यक्त्यात्मना तदेव वर्तत इति संख्योपाधिकमपि च। [c]) एवं संयोगोपाधिकमपि, अन्यसंसर्गितयावभासनात्। एवं विवेकावसायस्तत्र। [d]) तथा समस्तविकारात्मना जन्यमानमिवाकाशाद्यात्मना कूटस्थतया तदेवावभासत इति तदात्मैव तत्त्वमित्युक्तम् ॥ १३ ॥

[e]) एवं च कृत्वा सर्वस्य तन्मयत्वाद्विरोधिनोऽपि व्यवहारास्तत्रैवोपलीयन्त इत्याह।

**तस्य शब्दार्थसंबन्धरूपमेकस्य दृश्यते।**
**तद् दृश्यं दर्शनं द्रष्टा दर्शने च प्रयोजनम् ॥ १४ ॥**

(15) [a]) वाच्यवाचकसंबन्धाना भावतोऽद्वयरूपता। तत्र ह्यान्तरे तत्त्वे श्रुत्यर्थशक्ती संसृज्येते इति विवर्तदशाया श्रुत्यर्थशाखात्मना तस्यैव विकासाद्वाच्यवाचकरूपतया

---

[e]) °माव. B चाभ्युपगतया ; C वात्यद्भुतया ; D चादुतया ; ·M चात्यद्भुता°. B °दपिकृत°. M °दकृत°. C व्यवहर्त्र°. B °मित्याति°. BC ताततत्वं. f) B तदात्मेवा°. C °वाविषयमवा°.

का. १३. C तन्नास्ती. D नन्नास्ति. D तपथन्ह ( for तत् पृथक् ). C विकृत. C ततदन्यथा.

(14) [a]) BL भाराभावाकारा° ; D भावावविकारा°. AD °वभासन°. B °शक्तिः. B अस्तीति. ADH om. नास्तोति. AH °मर्हभावस्तु. CM सद्भावतस्त( त्रि )°. D °महारहे भावस्तु. C °सत्वं. [b]) D व्यव°. C चैकानेक°. C व्यत्मात्मना. ACDHLM वर्तयति. [c]) C ins. च ( after अपि ). [d]) C °रात्मका. A तन्यमान°. C कूटस्थत°. L तदेव भासत इति ; M तदेवावभास इति. L तत्तस्व°. [e]) CM तन्मयत्वावि. C °धिनो प्रे°. C व्यवहारः. BL °स्तदेवो°.

का. १४. C °मेकं हि. Cदृश्यदर्शनं. C दृष्टा.

(15) [a]) C °रूपतो. C ह्यान्तरतः. AHM तत्त्वश्रुत्यर्थ°. C om. तत्त्व°; D तत्त्वयुज्यर्थ°. C °शक्ति. B विवत्तमान°. M विकारा°. BL भेदावभासो. C भेदवतासौ. ADH ज्ञानज्ञेयेवा° ; C ज्ञानज्ञैयैवं. C विद्यंति. C ब्रह्मांड. BLM सपपंचमयमर्थो ; C प्रपंचमर्थो. C एवाच°.

भेदावभासौ, ज्ञानज्ञेयरूपतयैवाविद्येति ब्रह्मकाण्ड एव प्रपंचेनायमर्थोऽस्माभिनिर्णीत इति तत एवावधार्यम्। [b]) द्रष्टृदृश्यरूपतया च तस्यैव विवर्तः। तथा हि दृश्यं तावद्भावजातं संविद्रूपारूढम्। वेद्यमानैकत्वादेव वेदनैकपरमार्थम्, अप्रकाशस्य प्रकाशमानतायोगात् इति पूर्वकाण्डे अद्वयसिद्धौ च वितत्य विचारितम्। [c]) द्रष्टापि जीवात्मा अविद्याकृतावच्छेदो नियतः संसारी भोक्ता ब्रह्मैव चेतनत्वाद्भावतो भेदानुपपत्तेरिति तत्रैवावेदितम्। [d]) अनेन च प्रधानकर्तृकर्मरूपकारकनिर्देशेन कारकान्तरस्याप्याक्षेपात् सिद्धरूपो विवर्तः प्रतिपादितः। [e]) दर्शनशब्देन च प्रधानक्रियानिर्देशकेन क्रियान्तरस्याक्षेपात् साध्यस्वभावक्रियाविवर्तोऽप्युक्तः। कालशक्त्यवच्छिन्नो हि क्रियाविवर्तः। दिक्छक्त्यवच्छिन्नश्च मूर्तिविवर्त इति मूर्तिक्रियाविवर्तरूपं विश्वं प्रतिपादितम्। [f]) प्रयोजनशब्देन च समस्तक्रियाफलनिर्देश इति साध्यसाधनफलरूपतया विश्वसंकलनायामशेषविवर्तानुगुण्यं ब्रह्मणः प्रतिपादितम्। [g]) एतच्च

एकस्य सर्ववीजस्य यस्य चेयमनेकधा।
भोक्तृभोक्तव्यरूपेण भोगरूपेण च स्थितिः॥

इति ब्रह्मकाण्डे प्रतिपादितम्। तत्रैव च सतत्त्वनिर्णयोऽस्माभिरभ्यधायि। [h]) प्रख्योपाख्यात्मकत्वाच्च व्यवहारस्य द्वित्वे शब्दार्थसंबन्धरूपं तद् दृश्यं दर्शनं चेति भेदेनात्र

---

[b]) ADCH om. द्रष्टृ; BM दृष्ट°; C तत्रस° (for दृश्य°). C दृश्य·(for दृश्यं). C संविद्रूपं. D संचिदुपारूटं. A वेद्यत्वादेवेदमनेकवेद्यमानं; BL वेद्यमानावेद्यत्वादेव वेदनैक; C वेद्यत्वादेवं चेदमनेक प्रकाश°; D वेद्यत्वादेव वेदमनेकं; HM वेद्यमानं, वेद्यत्वादेव चेदमनेक°. AD अपरार्थप्रकाशस्य; C परमार्थस्य; H परार्थमप्रकाशस्य. C प्रकाशयोगा°; H प्रकाशमानतायोगा°. M प्रकाशनायोगा°. C दितिः. C °काण्डेः; D काण्डं. ADH द्वितीय°; C तसिद्धा. C त (for च). L om. च. C वीतत्य; M प्रवितत्य. [c]) C दृष्टापि; D °ष्टापि. D तावात्मा. C अपिचा° (for अविद्या). L नियत°. ACH ins. सत्व°; D ins. सत्व. D सारी (for संसारी). C ततो (for द्भावतो). C भेदोनु°. C त्रैवो° (for तत्रैवो). C °वोपपादितम्. [d]) D om. च प्रधान ... प्रतिपादितः. ACH °निश्चयेन (for °निर्देशेन). C कारका तस्या°. ACHM om. अपि. AH °पेक्षणात्. C °रूपात्. C विवर्तपादितः. [e]) D om. दर्शन शब्देन च. C निर्देशनैक. L ins. अपि (before आक्षेपात्). A °पेक्षणा°; C °क्षेपेक्षा°; D °पेक्षा°. C °स्वभावः. B प्युक्तम्. ACDHM °च्छिन्ना; B °च्छिन्ने. B अपि (for हि). C °विवर्ता. B om. दिक्शक्ति°. C °दिक्शतया°. ACDH छिन्नस्य. C om. मूर्तिक्रिया°. [f]) B om. च. ADH संमति°; C समाभि°. ACDH ins. इति (after °फल). AD निदर्श°; H निदर्शन°. C साध्या°. C °सकलना°; D °सकलायाना°. B °मवशेर°. C ब्रह्मण. C °पादितस्य. [g]) B om. एतच्च ... अस्माभिरभ्यधायि. ACDHM om. एतच्च. ACD om. यस्य. D °मकधा. A om. भोगरूपेण च. CD °र्व्यवधायि; LM °र्व्यधायि. [h]) B om. प्रख्योपाख्या ... द्वित्वे. ADH प्राच्यो° (for प्रख्यो°). L °गमकत्वात् (for °त्मकत्वात्). C °पात्मकत्वात्. C om. च. C नित्य (for द्वित्वे). BL om. °संबन्ध° C om. तद्. ACDHM दृश्य°. C दर्शन. B छेदेन. C रूप.

निर्देशः । एतच्चाविद्यामयं रूपं कथ्यते । [i]) पारमार्थिकन्तु प्रशान्तप्रपंचरूपं वक्ष्यति ।

यत्र द्रष्टा च दृश्यं च दर्शनं चाविकल्पितम् ।
तस्यैवार्थस्य सत्यत्वं श्रितास्त्रय्यन्तवेदिनः ॥

इति ॥ १४ ॥

[j]) उक्तमिदम् 'आकृतिसंहारेऽन्ते यदवतिष्ठते तत्सत्यम्' इति । तत्रैतत् स्यात् । अन्ते न किंचिदवतिष्ठते । असदपदमेवैतद्विश्वमाविर्भवतीत्याशङ्कयापि हेतुनाभिन्नकारणपूर्वकत्वमन्वयमुखेन दृष्टान्तोपक्रमं साधयितुमाह ।

**विकारापगमे सत्यं सुवर्णं कुण्डले यथा ।**
**विकारापगमे सत्यां तथाहुः प्रकृतिं पराम् ॥ १५ ॥**

(16) [a]) कुण्डलावस्थात्मकविकारापाये कुण्डले सुवर्णमेकं सत्यमवतिष्ठते यथा तथा पृथिव्यादिविकारविगमेऽन्वयिनी प्रकृतिरभिन्ना सत्यावतिष्ठते इत्युपेयम् । [b]) आहुरिति आगमप्रमाणसिद्धतां ध्वनयति ब्रह्मणः । तथा चोक्तम् ।

'एकमेव यदाम्नातम्'

इति ।

'आत्मैवेदं सत्यम्' ।

इति हि श्रुतिः । [c]) उपोद्बलनमात्रं चानुमानम् । तथा हि । निरुपाख्यादसतोऽपदाद्विकारप्रादुर्भावो न युक्तः । अभावस्य भावरूपत्वविरोधात् । न हि शशशृङ्गात्कस्य-

---

[i]) C परमार्थक. AH प्रकाशित; D प्रशात°. L om °रूप. C इव्यावशात् (for द्रष्टा च). C चापि° (for चावि°). B °स्तूर्यन्त°, C °स्त्वेत्यन्त°; H °स्वर्यन्त; L °सूर्यन्त°. [j]) ACDH युक्तं. C °स्मात् तदनेन. D °दन्त्रे (for °दन्ते); L °दतो. C आस° (for अस°). AHM °दन्यपद°; D °दमयद°. C °भंती (for भवती°). L °पीतहेतु°; M विना हेतु°. D °सर्वकं° (for °पूर्वकं).

का. १५. B °रावगे. C सत्यसुवर्णैः. D rep. सत्यं. C कुण्डलैः. B सत्यात्तथा. M सत्यतथा. C प्रकृति.

(16) [a]) ADH कुण्डलस्वात्मकविकारापाये; B कुण्डलं चावस्थात्मविकारापाये; C कुण्डलं स्वात्मविकारापाये. ABCDHM ins. द्रे (before कुण्डले). D सुवर्ण°, C °मेक°. L ins. एव (after सत्यं). M om. यथा. C ins. विकारापगमे (after तथा) C विकारादिगमे C °त्वयानी (for न्वयिनी) ACDH सत्यव°. C °त्यभ्युपे°; D °त्यपये°. [b]) C अहुरी°. C om. °प्रयाण°. C धनति; BDHM ध्वनति; L स्वनति. [c]) BCLM उपोद्बलमात्रं; D उपोद्बलमात्र°. LM त्व (for चा°). ACDHM अपरात्; L अपादानात्. ACDH om. °विकार°. H ins. भावस्य (after अभावस्य) B रूपता°. D उद्भवो. C विद्यते.

चिदुद्भवो दृश्यते । [d]) अस्ति च विज्ञानिरूपतया जगत्यन्वय इति तत्पूर्वकमेवैतत् । तथा च वक्ष्यति ।

"नाभावो जायते भावो नैति भावोऽनुपाख्यताम्"

इति । [e]) तस्य चिद्रूपस्य चिच्छक्तिरपरिणामिनीति विकाराभावान्नेदं सांख्यनयवत्परिणामदर्शनम्, अपि तु विवर्तपक्षः । [f]) विशेषश्चानयोर्वाक्यपदीयेऽस्माभिर्व्याख्यात इति तत एवावधार्यम् । इहापि संबन्धसमुद्देशे वक्ष्यते । कारणान्तरव्युदासश्चाद्वयसिद्धावभिहित इति सत्यर्थित्वे तत एवावगन्तव्यः ॥ १५ ॥

[g]) तदेवमात्मशब्दाभिधेयस्य ब्रह्मणः पदार्थपरमार्थरूपत्वात् द्रव्यरूपत्वमुपपाद्य सर्वशब्दवाच्यत्वं तस्यैव निगमयितुमाह ।

**वाच्या सा सर्वशब्दानां शब्दाश्च न पृथक् ततः ।**
**अपृथक्त्वे च संबन्धस्तयोर्नानात्मनोरिव ॥ १६ ॥**

(17) [a]) तत्तदुपाधिपरिकल्पितभेदबहुलतया व्यवहारस्याविद्याभूयस्त्वे प्रतिनियताकारोपाधीयमानरूपभेदं ब्रह्मैव सर्वशब्दविषय इत्युक्तोऽर्थः । [b]) आत्मा, ब्रह्म, तत्त्वम्, इत्यादयोऽपि हि शब्दाः समवलंबितोपाधयोऽपि द्रव्यात्मानमनु परिवर्तन्ते । निरुपाधिनो वाग्विषयातीतत्वात् । वाङ्मनसातीतं हि तत्त्वमित्युपदिशन्ति ब्रह्मविदः । [c]) घटादिशब्दापेक्षया त्वात्मादिशब्दाः प्रत्यासन्नाः । सर्वस्य च तन्मयत्वाच्छब्दा अपि

---

[d]) C °त्येन्वय. C om. तत्. ACDHL तत्पूर्व°. D °मेव वक्ष्य तत् (for °मैवतत्). C om. च (after तथा). D वति (for वक्ष्यति). C नाभावो. C विज्ञायते. CDH नैक (for नैति). C °स्कपा° (for ऽनुपा°). [e]) BLM तत्र (for तस्य). C om. तस्य. C चिच्छक्तिः. C परिणामिनी. f) ABL वाक्यप्रदीपे. CD व्याख्यात. B °वधार्य ; C वधार्या. D कारणान्त इ°. D व्यदासश्च. B °सिद्धौ विवृत ; LM °सिद्धौ विहित. M °गन्तव्यम्. [g]) ACDHM °दद्रव्य°.

का. १६. ADH विद्या (for वाच्या).

(17) [a]) C तदुपावि°. C °कल्पिकं त°. CD °वहुतया. ACDHL °स्यापि विद्या°. AH °ऽर्स्थायमान°; BL °पधीयमान°; C ऽहीयमान°; D °स्थायमान°. C ins. ब्रह्मैव (after रूप°). [b]) B ins. (after ब्रह्म) एतच्च ... व्यवहारस्य द्वित्वे (vide 37 a and b). C °मित्युक्तो°. D °मित्युदये°. B om. अपि हि ... तोपाधयोऽपि. C शब्दः (for शब्दाः). L समलंविको°. ACDH °ऽप्यात्मानमनु. D °मन (for °मनु°). D निरुपाधितो ; H निरुपाधि°; M निरुपाधिको. C वावि° (for वाग्वि°) D वाद्येः. C om. °त्वाद्वाङ्मनसातीत. M वाग्विषयातत्वविषय इति तद्वाङ्, B विवर्त्त (for हि तत्त्व°). M ins. तत् (before तत्त्व°). C ins. तु (after ब्रह्मविदः). [c]) ACDH यदि (for घटादि°). C शब्दो°. D °पेक्षया. B om. च. M ins. तदात्मकत्वा° (after तन्मयत्व°). M om. शब्दा°. B तदात्मतया ; DH तदात्मिकाः. C यथाचित्रं. C om. प्राक्.

तदात्मकाः यथाविभक्तं प्राक्। [d]) अभेदेऽपि च पारमार्थिके सांवृतो लोकयात्रायां भेदोऽसत्य इतीवशब्दः। अत एव द्विष्ठसंबन्धोपपत्तिः ॥ १६ ॥

[e]) ननु चेन्द्रजालमिदं यदवधृतरूपभेदानामपि भावानामनादृत्य तत्त्वमनवसीयमानाभेदपरमार्थोपदेशनमित्याशङ्क्य दृष्टान्तेनैतत् साधयितुमाह।

**आत्मा परः प्रियो द्वेष्यो वक्ता वाच्यं प्रयोजनम्।**
**विरुद्धानि यथैकस्य स्वप्ने रूपाणि चेतसः ॥ १७ ॥**
**अजन्मनि तथा नित्ये पौर्वापर्यविवर्जिते।**
**तत्त्वे जन्मादिरूपत्वं विरुद्धमुपलभ्यते ॥ १८ ॥**

(18) [a]) स्वप्नावस्थागतः प्रपंचो जागरया बाध्यमानत्वादसत्य इति सर्वबाधभ्युपगमः। तेनैव दृष्टान्तेन जागरायामपि भावभेदस्तुरीयदशायामननुवृत्तेरसत्योऽवस्थाप्यते। [b]) यत्किल सर्वावस्थास्वनुगतं तदेव सत्यम्। तच्च संविन्मात्ररूपमबाध्यमानम्। अवस्थाभेदस्त्वागमापायित्वाद्बाधितोऽसन् सुखदुःखादिवत्। [c]) तथा हि रागादयः सुखादयश्चास्वभावत्वात् संविन्मात्ररूपं न विकुर्वन्ति। तथावस्थाभेदोऽप्यनेकाकारकालुष्योपहतः। तत्र स्वप्ने विरुद्धाकारोल्लेखो वैकल्पिकी दृष्टिः प्रतिप्रमातृनियता। [d]) वैकल्पिको हि मनोव्यापारानुसारी संसारी भोक्ता, स च भावतश्चेतनत्वाद् ब्रह्मैव। तथा च तावति स्वातन्त्र्यान् निर्मितावीश्वरोऽनन्योपादानात् भावानाभास्योपभुङ्क्ते प्रियाप्रियरूपतया रागद्वेषादिमयेन

---

[d]) C शक्यभेदे° (for °अभेदे°). AH पारमार्थिकसवृतो°; C पारमार्थिकं सृष्टतो; D पारमार्थिकसंवतो; M पारमार्थिके संवृतो. C त्रैलोक°. D पालाया (for यात्रायां). C भेदासत्य. D द्विष्ट°. C पतिः (for पत्तिः). [e]) D यदववृत्त°. C °मुप° (for रूप°). C ins. सं (before भावाना). ACDHM °मनावृत्य. L °मनादृश्य. B ता (for तत्वं). ACDH °मवसीय°. ABCDHL °मानापरमा°. B °र्थवोददेशन°; C °र्थतोपनदशन°. D दृष्टान्तेन.

का. १७, १८. C परप्रि°. C प्रयोजना. D विरद्ध मुपलभ्यते (for विरुद्धानि ... चेतसः). B यदैकस्य; M यथेकस्य.

(18) [a]) B °गतप्रपचो. L जागरेण. B बुद्धया (for बाध्य). C सप्त. C जामरीया°- D तागराया°. D तुरायदसा°. C मननननवृत्तेः. BCL व्यव°. [b]) ABCDHL °न्मात्रं. B °मबुध्य; मान. AD तत्सुख; BCH ऽसत्सुख°. [c]) L ins. च (after रागादयः). H अस्वभावात्. M संविन्मात्ररूपं. C कुर्वन्ति. ADH अनेकाकार बुद्ध्योपहितः. B ins. च (after तत्र). ADH स्वप्नं. ACDHLM विरुद्धकारो°. AH °ल्लेखौ, C °ल्लेखे; M ल्लेखोल्लेधो. C सार्वत्रिकी (for वैकल्पिकी). D वैकल्पिका. ADH °मातृ (for प्रमातृ°). C °मात्र°. C °नियत्. [d]) ADH वैकल्पिकीति; C वैकल्पिकेति. ACDH कोऽभिमानः, M काभिमानो. C सुचभा°: L स्वभा°. A भावत्वा; CH भावत°. AH °दचेतनत्वात्; C °देवनाचत्. C स्वातन्त्र्य°; D स्त्रातन्त्र्या°. AH निमित्तापी°; C °मित्यापी; D निमित्ताया°. M °न्वितोपी°. ACDH ईश्वरे. ACDH °दानाभावात्. °पादानान् भावा° would be a better text but there is no manuscript anthority for it. C नाभ्यस्य; M नाहार्य. AH अपि तु (for उपभुंक्ते). C अयतु; D अयल्ल. ACDH rep. °भागा°. L °नुसारं. C °कथादिति.

संसारमोहेन स्वपरविभागानुसारी परसंकथादिषु । [e]) तदाहुः वेदान्ततत्त्वनिपुणाः ।

प्रविभज्यात्मनात्मानं सृष्ट्वा भावान् पृथग्विधान् ।
सर्वेश्वरः सर्वमयः स्वप्ने भोक्ता प्रवर्तते ॥

इति । भोक्तेति वचनात् प्रत्यगात्मसृष्टिरियमुक्ता । तस्य च सर्वेश्वरत्वात् ब्रह्मरूपत्वे सृष्टिसामर्थ्यमुक्तम् । सर्वमयत्वाच्चानन्योपादानविचित्रभावरचनामात्मोपादानमाहुः । [f]) अत एव प्रविभज्यात्मनात्मानमिति कर्तृकर्मभेदाभावाच्च वैकल्पिकत्वमस्याः सृष्टेः स्फुटमुक्तम् । बाह्योपादाना तु जागरायामैश्वरी सृष्टिर्विश्वशब्दवाच्या सर्वप्रमातृसाधारणी । स्थिरत्वास्थिरत्वग्रहावेशनिमित्तस्तु भेदः । [g]) अविद्याप्रवृत्तिरूपत्वात् पुनरसत्यता समानैव । केवलं सत्यामविद्यायामपरो मोहश्चिच्छक्तेरावारको निद्रा नाम । तद्वशादत्रैव भ्रान्तत्वाभिमानोऽर्वाग्दृशाम् । [h]) परमार्थदृशा तु जननमरणरहितेऽप्रविभक्ते कूटस्थे परस्मिन् ब्रह्मणि चिदानन्दरूपे सर्वमेव जगज्जाग्रत्स्वप्नाद्यवस्थागतं मूर्तिक्रियाविवर्तरूपमसत्यम् । अन्वयिचित्सामान्यमात्रं तु परमार्थ इति सिद्धम् । [i]) **विरुद्धमुपलभ्यते** इति वदन्नविद्याया विरोधमभ्युपैति । एतदेव ह्यविद्यायाः स्वरूपं यदनुपपद्यमानमप्याभासोपगमं नयति, उपपन्नत्वे विद्यैव स्यात् । [j]) तस्मादसत्यप्रपंचप्रकाशनशक्तिर्ब्रह्मणोऽनादिसिद्धा ग्राह्यग्राहकयुगलं स्वानुरूपमुपरचय्य जगन्नाट्यमातनोतीत्यविचारितरमणीयामिमामपनयन्ति तत्त्वदृशः ॥ १७–१८ ॥

इति भूतिराजतनयहेलाराजकृते प्रकीर्णप्रकाशे द्रव्यसमुद्देशो नाम द्वितीयः ॥

---

[e]) C तथाहुः. D तदाहुः. D दान्त°. C पृथविधान्. C सर्वमया. C सर्व (for स्वप्ने). C प्रवर्तन्ते. ACDH om. °वचनात्. C °मिद्धि (for °सृष्टि°). C सर्वविषय°. AHLM °पादानं. A °स्वभावाना; C स्वभाव°; DH स्वना°. AD °भात्मोपज्ञाना°; C °मोहोपज्ञाना; H °मात्मोपज्ञानं. °दानामाहुः would be a better text, but the manuscıipt do not have it. f) C ins. ज (before अत एव). L om. अत एव. C °त्मानात्मान° C om. च. C °द्वैकल्पिक°. A °त्वमस्य; C °त्वमस्व; H °त्वरव. D स्फुटक्तम्°. B °दानं तु. C °दानात्तु. C सृष्ठि°. CD °वाच्य C °विषयिणी (for °साधारणी); D साधारणा. ADH °ग्रहावेदा; C °ग्रहावेदना°. [g]) C °रस्य सत्यता. C केवलम सत्य°; D केवलं मत्या°. M ins. असत्या (after सत्या). C मविद्यापरमो°. B आपातती (for आवारको). M आवारका. ADH °मतत्वाभि°. D यादृशं (for ऽर्वाग्दृशा). [h]) C om. परमार्थदृशा तु. C ins. मनु (before जननं). H प्रविक्ते; L अप्रविभक्ते. C कूटस्थैर्वास्मिन्. B °रूपः (for °रूपे). B om. जगत्. D °प्रवस्था° (for °व्यवस्था°). BM °गतमूर्ति°; D °गतंतमूर्ति°. C मूर्ती. C om. °रूपं. A सत्त्वाप्र; C सत्त्रत्सः D सत्रत्स; H सत्रत्त्वाप्र° (for असत्य°). A सिद्धि. D विरुद्धं मप°. [i]) C वेदनं (for वदन्न°). C यतदेव. C अविद्याया. C तदनु°. AH °मत्यात्मोपगमं. C नापैति (for न यति). A उपलब्धे; B उत्पन्नत्वे. D om. उपपन्नत्वे ... स्वानुरूप. [j]) BM असत् (for असत्य). M om. °प्रपंच°. C °प्रकाशशक्ति°. A °युगलस्वानु°; C °युगेनस्वानु°. M युगलस्यानु°. C °मुपचारतया; H °मुपरचया°. AH जगलाद्य°; C जगन्नाद्य°; D °तगलाद्य°. C °तविचारीत°. D °रमणाया°. C रमणीयमामनन्ति. D °रात° (for राज). C ins. काण्ड (for प्रकाशे). C ins. ॥ २ ॥ 1929 श्रीकृष्णो विजयतेतराम्. D ins. शुभम्।

# अथ संबन्धसमुद्देशः ।

(1) समुद्देशद्वयेन जातिद्रव्ये दर्शनभेदेन शब्दार्थमवस्थाप्य शब्देनार्थस्याभिधाने संबन्धो हेतुः, अन्यथा सर्वं सर्वेण प्रत्याय्येतेति तत्र संबन्धं प्रतिपादयितुमाह—

**ज्ञानं प्रयोक्तुर्बाह्योऽर्थः स्वरूपं च प्रतीयते ।**
**शब्दैरुच्चरितैस्तेषां संबन्धः समवस्थितः ॥ १ ॥**

(2) [a]) प्रयोगेणाभिज्वलितैः शब्दैस्त्रितयमवगम्यते-आत्मीयं रूपम्, अर्थश्च फलसाधनः, प्रयोक्तुरभिप्रायश्च [b]) न चैतदसति संबन्धे नियमेन घटत इति वास्तवसंबन्धावसायो न सामयिकः शब्दार्थयोः संबन्धः, अभिधानियमनादनादेः । [c]) अत एव समवस्थित इत्याह । स्वभावत एव निरूढो न तु पुरुषेण निवेशित इत्यर्थः ।

(3) [a]) तत्र स्वरूपमन्तरङ्गमभिधेयमिति तेन मुख्यसंबन्धोऽभिधाननियमः । अत एवान्यथापि पाठक्रमे सामर्थ्यात् स्वरूपे प्रथमं प्रतिपत्तिर्विभजनीया [b]) ततोऽध्यस्तस्वरूपेऽर्थक्रियाकारिणीत्याभ्यामर्थस्वरूपाभ्यां शब्दस्य वाच्यवाचकसंबन्धः [c]) प्रयोक्त्रभिप्रायेण तु सह कार्यकारणभावः ।

(4) [a]) ननु च वाच्यवाचकभावलक्षणः संबन्धः प्रस्तुतः । तत्र कः प्रसङ्गो ज्ञानस्वरूपयोः [b]) सत्यम् । सर्वपार्षदं पुनरिदं शास्त्रमिति ये बाह्यस्यार्थस्य शब्दवाच्यत्वं नेच्छन्ति तन्मतोपसङ्ग्रहार्थं वक्त्रभिप्रायारूढस्यैव शब्दार्थत्वे तत्र कार्यकारणसंबन्धमाह ।

---

(1) ACDH °द्वये जा°. ACDH °द्रव्यदर्शन°. AC शब्दार्थं व्यव°. M शब्देनर्थ°. D °भिधने; M °भिधन. C om. सर्वेण. C प्रत्ययेति; M प्रत्याय्येते संबन्धं.

का. १. C °क्ताबाह्या°; D °क्तर्बा°.

(2) [a]) CDH °भिजनितैः. C °ब्दैस्त्री°. C जात्मीयं. C °र्मार्थ°; L °मर्थ च; M °पं सर्वस्य. M °धनं. [b]) CLM वास्तवसंब°. C °बन्धः वसा°. C शब्दार्थयोः सामयिकः. D संबन्धं. C °दवादेः; D °यमीदनादेः [c]) C निरूपितो; M निर्हेतुको. C पुरुषो नि°.

(3) [a]) C तत्र रूप°. C °न्तरमभिधेयमिते; D °धेय इ°; M °रङ्गमि; M om. भिधेये इति. C ins. तेन मुख्यसंबन्धाभिधेयमिति. M मुख्यः सं°. C °न्धाभि°. ACDH °धानं नि°. B पाके (for पाठ); D पाट°. M °क्रमेऽपि. C स्वरूप. C प्रथमप्रति°; L प्रथमा प्र°. AH विवर्जनीया; C °तिवेनीय; D विवर्तनीया. [b]) ACDH ततोप्यसत्स्वरू°; M ततो स्वस्वरू°. H °रूपेऽर्थ्य°. AH °रिणी ताभ्या°; CD °रिणा त्या°; D °र्थरूपा°. [c]) CD प्रयोक्तभि°.

(4) [a]) C न च वाच्यवाचकलक्षणलक्षणः. M om च...तत्र कः M त्रमाणा (for प्रसङ्गो). [b]) C तवमिति (for शास्त्रमिनि) AH तन्मतोपस्कारार्थं; C °तेविसं°. D °तोसस्का°. C °प्राया-रूट°; L °ग्रूढ°; M °यस्तटस्यस्यैव. L शब्दस्यार्थत्वे.

(5) [a]) यथाहुः—

वक्तृव्यापारविषयो योऽर्थो बुद्धौ प्रकाशते ।
प्रामाण्यं तत्र शब्दस्य नार्थतत्त्वनिबन्धनम् ॥

इति [b]) अत एव द्विविधः संबन्धपदार्थो व्यवतिष्ठते, योग्यता कार्यकारणभावश्च । अध्यासस्तु द्वयोरपि परमार्थ एव, न पृथग्रूपः ॥ १ ॥

(6) [a]) यथा चेहोपचारसत्तासमाविष्टं वस्तु शब्दार्थं वक्ष्यति तथा कार्यकारणभावोऽपि संबन्धः [b]) स्वरूपस्य तु मुख्यमेव वाच्यत्वमित्याह—

**प्रतिपत्तिर्भवत्यर्थे ज्ञाने वा संशयः क्वचित् ।**
**स्वरूपेषूपलब्धेषु व्यभिचारो न विद्यते ॥ २ ॥**

(7) [a]) अयं गौरयमर्थ इति शब्दार्थयोरभेदावभासनात् स्वरूपमभिदधदेव शब्दोऽर्थमभिधत्त इति निश्चयिते । स्वरूपाविवेकेनैव ह्यर्थपरामर्शोऽभिधानमुच्यते । [b]) वृद्धव्यवहारात्तथैव संबन्धव्युत्पत्तेः । तथा हि अयं गौरिति सङ्केतः क्रियते, भेदेनैव घटशब्दस्यायमर्थ इति तु व्याख्यातृभूमिर्न व्यवहारदशा [c]) अत्रापि चायमिति शब्दाभेद एव । यदा गौरित्युच्यते तदायं सास्नादिमानर्थो बोद्धव्य इत्यप्ययमित्यभेदेनैव परामर्शे सङ्केतप्रवृत्तिः [d]) व्यवहारफलो हि सङ्केतः । यथा च लौकिके व्यवहारे प्रतीतिस्तथासौ न्याय्यः । अभेदेन च तत्र प्रतीतिः ।

---

(5) [a]) A यथा; C om यथाहुः, BM यदाहुः. A °विशेषे यो; DH °विशेषो यो C प्रमाणत; D प्रामाणं. A शब्दानामर्थत्वनि°, C शब्दाना सार्थकत्वनि°; D शब्दनार्थत्वं नि°. [b]) A द्विविधः सबन्धः पदार्थे; C द्विविधपदार्थः सबन्धः पदार्थो; द्विविधः संबन्धः पदार्थो. C °तिष्ठता. C यावता; D यागता. A ins. परस्परं. AD अभ्यासश्च; C आध्या°, M °सश्चु. C द्वयोर्वा; D द्वयोवपि A °ग्रूपम्; C °ग्रुपुम्.

(6) [a]) A चोपचारसत्तांशमाविष्टस्य शब्दार्थत्वं; C एथावेद्य एव सत्तामात्राविवृतश्च शब्दार्थोक्तरी; D चेक्षेयवात्यारसंत्ताशसाविवृत्वस्य शब्दार्थत्व. ADH स्वरूपः C स्वरूप. [b]) ADH सबन्धमुख्यमेव.

का. २. C ज्ञाते. C °पेपु°; D °पेष° BDHL °पलभ्येपु. C °ब्धेपु विचारो

(7) [a]) B इयं हे. AH °रभेदेना°, °रभेदेदा°; M °रभेदानात्. ACDH शब्दार्थ°. ADH घटपरा°; C om ह्यर्थ D °मर्शे. M °र्शोऽप्यभि°. [b]) AH °रात्तत्रैव; C °रा तत्रैव; D °हा तत्रैव; M °हारे. C सबन्धः व्युत्पत्ते. C °य गौरी सं°; D गौदि. M om. संकेतः क्रियते ADH मुख्या तु भूमि°, C मुख्या क्रियाभूति, M °ख्यातुभ्रमित. [c]) ADH शब्दात्तद्; C शब्द तत्र; M शब्द एव. C गौरी° M तदा सास्ना°. ADH इति अर्थभेदेनैव; C °व्यमित्यर्थभेदेनैवो, B इत्ययमित्य°. M इत्ययमभे°. B परामर्श सं°; D पसम°; M परामर्शो. [d]) C व्यवहार सङ्के° H om. सङ्केतः. M °फलो स° H om. यथा च. C क्लौकि°. C °हार. AD न्यायः H om. लौकिके...न्याय्यः.

(8) [a]) प्रतीतौ हि किञ्चित्तटस्थमेव तामननुप्रविशदेवोपायमात्रं दृष्टं यथेन्द्रियम्। [b]) किञ्चित् पुनस्तत्रानुप्रविशदेव प्रतीतिं जनयद् व्यधिकरणं भवति दण्ड इव, यथा धूमादि लिङ्गम्। [c]) शब्दस्तु न जनकतामात्रेणार्थप्रतीतौ संबन्धमनुभवति, अपि तु तत्रार्थः शब्द्यमानः शब्दमय एवावभाति। तादृश एव हि स प्रतीतिस्वभावः। रूढत्वाच्च न भ्रमः।

(9) [a]) ननु न वर्णमालार्थे समुपलभ्यते। दर्शनानभिज्ञो देवानांप्रियः। [b]) इह शब्दो नाम वाचकः स उच्यते योऽयं चिच्छक्तेर्वागात्मा व्यापारः शब्दनापरपर्यायोऽश्रूयमाणोऽप्युपांशुप्रयोगे शब्द इति व्यवह्रियते यतः। [c]) तस्य च प्रथममुद्भिद्यमानावस्थस्याविभागापन्नशब्दार्थमयस्वभावस्य परवागात्मना स्वरूपेणावस्थानम्। [d]) परतस्तु प्राणवृत्त्यनुप्राणितमनोभूमिसमवलम्बितनिजस्वभावस्य वाच्यवाचकरूपभिन्नशाखाद्वयावलम्बिनः समवस्थानम्।

(10) [a]) अस्या च मध्यमावस्थायां परामर्शनात्मा वाचकः शब्दोऽभिन्नचैतन्योद्रेकात्मिकां परवागवस्थामत्यजन्नेव स्वरूपवाच्यमुखेन तत्संभिन्नमर्थं परामृशति सामानाधिकरण्येन, गौरयमर्थ इति। [b]) तथा च स वाच्योऽर्थो वाचकाध्यासवानुच्यते। तदनु च स एव परामर्शकः शब्दः पूर्वावस्थावष्टम्भेनैव स्थानकरणाभिहननात्मावस्योपारूढः श्रवणविषयतायोग्येनात्मना विभिन्नवाच्यवाचकरूपतया व्यक्तिमासादयन् स्फुटी-

(8) [a]) H om. हि B °स्थमव ता°. CM तामनुप्र°. B °विशे ; C °देवोप्यव्य° C °मात्र द्र°. AH °न्द्रिये ; C °न्द्रियः [b]) AH पुनश्चानु°; C पुनर्वा°; D पुनचा°. CD प्रतीति ज°. ADH °दप्यधि°; C °यद्रव्य°; M °यदपि व्य°; ADH दहन इव ; C क तदुद्भवः C नादि. C लिङ्ग. [c]) ACDH om. न. ACDHM जनकमात्रेण ; C °र्ताति ; M °तीतौतो. ACDH शब्दमानः ; M शंक्यमानः. ADH शब्दरूप. M शब्दमेय. ADH एव चाभाति. ACDH om. हि स. ADH क्रमः, C तत्र यनः, M वमः.

(9) [a]) M मनु. C om. न. C °मात्रार्थे. D °भिह्रो. [b]) C स व उ°. C °गात्म. BL °पार श°. C शब्दनामापर°; L शब्दनापर्या°. C °पांशप्र°. [c]) M om. प्रथममुद्भिद्य°. ADH °स्याविभागोऽयं न ; B °वस्थायामपि भा°; C °स्थस्य वि°; M °पि वि°. D °स्वभा°; M °स्वभागस्य. AH परिवागात्मना ; C °त्मना ; D पदवा°; M परमात्मना. M om. स्थानं... वृत्य. [d]) C प्राणप्रवृ°; D प्राणइ° L प्रमाणवृ°. C °मानोभमित°; D °मानोभू°. M ननुप्राणित°. C °निस्वभास्य ; M °स्वभास्य C °न्नचाखा°; D °मिन्नाशा°.

(10) [a]) C अस्या च. B °र्शनामा ; C °शर्माना ; D °नामा ; °मदर्शनात्मा. ACDHLM शब्दो भिन्न°. C °न्योद्रेके प°. C परुद्वावस्था° ; M परमागवं°. H °मभजन्नेव ; C °चत्यज्यन्ते नैव ; D °मुभ्यजने. H °भ्यंज°. M °दाच्यत्वमु°. C तत्समित. C पतमृ°. C गौरीय° [b]) C सर्वे वार्थो° C वाच्यवाच°. A C D H ननुच. C om. स. C °व रामर्शकः ; B °मर्शतः ; B शब्दं. A H करर्णाति हननान्मनस्युपारूढः ; C °क्करणमितिहनवात्मानतत्स्थो ; D करर्णाति हननात्मानस्यारूढः. A D H °तायोगेना°. C °वाचकंतुम्°. C °दयं ; D °दय, A श्रयो भवति ; C व्याप्यं भ° ; D स्यप्यं ध°. CM त. भवतित्ये° CM °त्येतावति.

भवतीत्येतावती शब्दव्याप्तिः । [c]) ततश्च परवाग्रूपनिष्पन्दात्मकस्यास्य शब्दस्य तद्रूपानुगमाच्छब्दनात्मकव्यापाररूपस्य स्वसामानाधिकरण्येनार्थरूपशब्दनादभेदेनैवैकया वृत्त्या स्वरूपविशेषेण विशिष्टमर्थाभिधानमत्रतिष्ठते । [d]) तद्यथा शुक्लः पटोऽयमिति शुक्लगुणच्छुरणया सकृदेव विशेष्यपटप्रत्यवमर्शः । न ह्यत्र शुक्लगुणस्य पृथक् परामर्शः । एवं घटोऽयमिति प्रधानभूतविशेष्यानुप्रवेशेनैव घटस्वरूपपरामर्शी इत्येकैवेयं शब्दनात्मिका प्रतीतिः शब्दार्थयोः ।

(11) [a]) क्वचित्तु स्वरूप एव विश्रान्तिः, तद्यथा-'अग्निमन्तोदात्तमधीष्व,' 'अग्नेर्ढक्' इत्यादौ । अत्र ह्यनुकार्यं स्वरूपमेव प्राधान्येनावस्थितम् । [b]) बाह्यार्थप्रतिपिपादयिषाया तु स्वरूपार्थयोः सम्भेदेनैवावभास इति न पृथक् स्वरूपपरिमर्शः, अपि तु स एतस्यापि यतस्तदभेदभाजोऽर्थस्य । [c]) घट इति हि घटशब्देनार्थवत् स्वरूपमभिधयैव विषयीक्रियते । ज्ञानशब्दप्रदीपास्त्रयो हि प्रकाशा येनैव प्रकाशेन परं प्रकाशयन्ति तेनैवात्मानमपि । [d]) तथा च ज्ञानमर्थं प्रकाशयति प्रथयति तथैवात्मानमपि प्रकाशयति । एवं प्रदीपो रूपमाभासयन्नात्मानमप्याभासविषयभावोपगमनेन प्रकाशयति ।

(12) [a]) तथा शब्दोऽपि वाचकोऽर्थमभिधीयमानतया प्रकाशयन्नात्मानमभिधयैव प्रकाशयतीत्युचितम् । न तु श्रोत्रेन्द्रियविषयभावोपगमनेन [b]) अर्थसामानाधिकरण्यापन्नं च स्वरूपमर्थवत् परामृश्यमानं शब्दस्याभिधानविषयोऽभिधेयम् । [c]) न तु वाचकतायामभिधीयमानतास्ति, परमार्शस्य परवागात्मनः कर्तृभूम्युपारूढस्य प्रकाशस्य वाचकत्वात् तत्र च परामृश्यमानात्मकवाच्यताविरोधात। तथा चाह—

---

[c]) A D परवागुप° H स्वपर°. AD स्यास्मच्छब्दस्य ; C °द्वात्मयस्या तद्रू°. AD °नात्मनैकव्या° ; C °ब्दामाननेक°, C स्वसमा°,. A D H °रूपशब्दनाभेदे°. C °रूपशब्द कया°. M प्रवृत्त्या , C °शिष्टार्था°; B °ष्टमत्त्वा°; M °शिनष्टम°. [d]) C शुक्ल , C °णस्फुर , D °णछर°. D शकदे°. A °ष्यपरप्र°. C प्रत्यमव°. L °मर्शनं. A D ह्यस्य. M om न. C °यमिती°. C प्रधानं भू°. B °दिशेऽप्या°. A C D घटस्य रूपं° M घटश्व पपरा°. A D °मर्शशब्दस्पैकै°. H °त्मिकाया प्र°.

(11) [a]) C °मधीत्य. C अग्ने ट ; अग्नेर्दुं ; L °ब्यात्तेन सांग° ADHL अत्र न ह्य°. CD °कार्यं. C प्रधानेन विवक्षिस्थितः। [b]) C वाह्यर्थ° C °प्रतिपादयि°. M °दयिषया तु. AD संभेदो. A नावभासत. C नावभास ; D नावभासत्र दति. AD पृथक्स्वरूपं वि°. AD एव तत्स्थापिपदस्तदभेदो भाजो ; C एवायतत्रस्तदभेदभाजो. [c]) A घटक ; C घटत C om हि °शब्दस्वरूपं. L °शब्दोना°. AD °मभिधयैव ; C °मभिवार्धेव. C °नसद्वप्रवाहा°; M प्रतिपाद्यत्र°. ADH प्रकारेण. C पर ; CL प्रकाशयति ; D प्रकाशं यन्ति. C तथैवात्मा°. [d]) ADH °मर्थः C om. तथा च...आत्मानम ; L प्रथमयेति तथैव ; M प्रथयेति. B °भासायनात्मा°. B °वोपशम°.

(12) [a]) C °ब्देऽपि. C वाचकार्थ°. ADH °मभिधेयतथैव ; C °मप्यभिधायेव ; C °मप्यभि°. D श्रात्रे° C °त्रेन्द्री°. M °विषयविपयभा° [b]) H °नेन नार्थ. C °पन्न च ; D °पत्र च. ADH स्वभावरूपमर्थमर्थवत्. A परामृश्य मनः, C परामर्श°. D °विपयी°. [c]) D ननु. C °कतयाभि° CDH °मानता नास्ति. AD कर्तृमत्युपा°; C °भत्युपा°. H °मृत्युपा° BCLM om. च ( after तत्र ) C °मृश्यमाना°.

न च वाचकरूपेण प्रवृत्तस्यास्ति वाच्यता ।

इति ।

(13) [a]) एवं च कृत्वा सर्वघटशब्दसाधारणं सामान्यरूपमर्थपक्षनिक्षिप्तमर्थसमानाधिकरणं स्वरूपमस्य वाच्यम् । [b]) अर्थवत्तत्सामानाधिकरण्यात्, तत्रापि तथा प्रतीतेः, सामान्यरूप एव च सङ्केतोपपत्तेः तेनैवार्थस्य सामानाधिकरण्यात्, तथैव च व्यवहारे श्रोत्रा प्रतीतेः, तदनुसारेणैव प्रतिपाद्यप्रतिपादकभावार्थमेकपरामर्शावस्थितौ सङ्केतोपपत्तेः [c]) अत एव च स्वाभिप्रायानुसारेण श्रोत्रा वक्तृज्ञानस्यानुमानात् स्वयं शब्दस्वरूपाध्यस्तमर्थमवबुध्य तथैव वक्तर्यनुमानमुचितमित्यभेदेनैव घटशब्दाध्यस्तं प्रयोक्तृज्ञानमवसीयते । [d]) तथा च ज्ञानमप्यध्यासेनैव शब्दः प्रतिपादयति वक्त्रवगतमिति तत्रापि परमार्थदशाध्यास एव सबन्धः ।

(14) [a]) लोलीभूतानि शब्दार्थज्ञानानि घट इत्येवमवगम्यन्ते । यथोक्तम्—

न सोऽस्ति प्रत्यय ........

इत्यादि । अत एव

गौरित्यत्र कः शब्दः

इति प्रश्नः । [b]) तदहर्जातस्यप्यायमस्त्येव शब्दसंभेदः । सङ्केतसहत्वात् । एवं च कृत्वा तात्पर्यदशाध्यास एव योग्यताया कार्यकारणभावे च फलतः संबन्धोऽवतिष्ठत इति स एव मुख्यः । [c]) ज्ञानस्यैव च परस्परसङ्क्रान्तिर्व्यवहार इति शब्देन स्वरूपाध्यस्तं ज्ञानमपि प्रतिपाद्यते परत्रेति तदपि तस्याभिधयैव प्रतिपाद्यमुपपद्यते । [d]) घटमानयेति नियुक्तो घटानयनेऽहमनेन प्रेषित इति शब्दपूर्वकमेव प्रतिपद्यते । तदाह वार्तिककारः—

न वा शब्दपूर्वको ह्यर्थे सम्प्रत्ययः ।

इति ।

---

(13) [a]) M ·°रूपपक्ष°. C °प्रसमर्थसामानार्थानामधि°. C °पस्य वा° [b]) C om. तत्रापि. CM प्रतीयते. C °तोपदतिः M तेनैवामर्थर्कस्य. D om. व्यव. C श्रोत्राः प्र°. C °नुमारण° C om. प्रतिपाद्य. D °कवरागमर्श. L °भावात्त्वमेक°. [c]) M °नुसारेणैव. C श्रोतु; D शोभ्रा. C वक्षुज्ञा°. D वत्कज्ञा°. C °मर्थमेवनुद्धय ते त°. D वक्तर्यनमा°. C °मानमुपचि°. AH °ध्यस्तप्रयो° C °ब्दार्थास्त° D °ब्दास्वरूपाध्य°. D °योत्कहानप्रव°. [d]) A तथा ज्ञा°. D तथा न ज्ञा°. M ins. तथा ज्ञानमवसीयते ( before तथा च ). C °मभ्यासे°. C शब्द प्र°. D °पादया व°. C वक्तृगत°. C तथापि. ADH °र्थदशाध्गा°.

(14) [a]) B लोकि°. M °भूतानि हि°. C °गम्यते; D °गम्यन्तो. H इत्येव गम्यन्ते. C गौरीत्य°. [b])C तदहजा°. C °मर्थेव. ADH तात्पर्याव्यास. A योग्यतायाः DM °ताया का°. AD om च. L फलान्तः AD इति । एवं च मुख्यो. [c]) AD °सङ्क्रान्तिव्य°. C °संज्ञाभिर्त्य°. C °ध्यस्त ज्ञा°. AD परत्रैतदपि. AD °भिधेयतयैव. [d]) M °तिहिनि°. D घटन°. C °पूर्वक प्रतिपा°. L न चा श°. M om. न वा. ADHLM °शब्दपूर्वो.

(15) [a]) तदेवं शब्दनात्मकेन व्यापारेण परवागात्मनो व्यवहारे प्रवृत्ते प्रकाशस्य तज्जीवितत्वादेकशब्दनानुप्रवेशाच्छब्दार्थयोः सामानाधिकरण्यादभेदाध्यासाख्य-संबन्धविषयता सिद्धा । [b]) अविभागदशायां तु पश्यन्त्यभिधानाया वाच्यवाचकभेदानुल्लासान्नाध्यासचिन्ता काचित् [c]) इत्थं च कृत्वा शब्दैकजीवितत्वाद् व्यवहारेऽप्यर्थस्य तदवियोगात्तद्विवर्त्तरूपं विश्वं सिद्धमित्यास्तामेतत्, पूर्वमेव सप्रपंचमस्यार्थस्य निरूपितत्वात् ।

(16) [a]) तत्रान्तरङ्गत्वादहेयत्वादसाधारणत्वाच्च स्वरूपं मुख्यमभिधेयम् । तत्र हि सङ्केतानपेक्षा शब्दस्य वृत्तिः । [b]) तच्च जात्यादिपक्षभेदेन ब्रह्मकाण्डे निरूपितम् । अभिधानाभिधेयनिमित्तभेदाच्च भिन्नरूपमिति **स्वरूपेषु** इत्याह । [c]) तथा हि-कारणसन्निवेशि वाचकम्, स्वरूपमर्थपक्षनिक्षिप्तं बाह्याभेदेन सञ्चेत्यमानं वाच्यम्, संबन्धसवेदनसमयानुभूतमभिन्नश्रुतिविषयनियामकत्वादर्थे प्रवृत्तिनिमित्तमिति त्रितयं सर्वत्राव्यभिचारि । [d]) व्यवहाराभ्यासाच्छ्रुतिसाम्याच्च नैतत्त्रितयं विवेकेनावधार्यते । श्रुत्यविशेषाच्च तत्स्वरूपमिति व्यवह्रियते न तु सर्वथैवाविभेदात् । अप्रवृत्तसङ्केतस्य **अर्थे** तद्विषये **ज्ञाने** सन्देहो जायते न तु श्रुते स्वरूपे [e]) अर्थापरिज्ञानाच्च किमयं वेद वक्तेत्ययमपि वक्तृज्ञानविषयः सन्देहो जायत एवाप्रवृत्तसङ्केतस्याप्यक्षादिसामान्यशब्दादेव चाक्षादौ सन्देहो न तु स्वरूप इति सिद्धम् ॥ २ ॥

(17) संबन्धः समवस्थितः स्वभावत एव निरूढः, न तु सामयिक इत्युक्तम् । तस्य सद्भावे लिङ्गमाह ।

**अस्यायं वाचको वाच्य इति षष्ठ्या प्रतीयते**
**योगः शब्दार्थयोस्तत्त्वमित्यतो व्यपदिश्यते ॥ ३ ॥**

---

(15) [a]) ACD तदेव. C शब्दनाना°. M व्यवहारेण. L प्रवृत्तेः C °शश्य. ADH तज्जीवित्वा°. ACDH °क शब्दानु°; B °कशब्देनानु°. A °साख्यः संबन्धो वि°. C °द भेदेनसाख्य वि°. DH °ख्य संबन्धं. [b]) M अभ्यासदशाया. C °भिधाया. B °वाचकभेदोऽल्पासन्ना°. C °वाचकभावा°. L °भेदोऽनुल्ला°. AD °व्यासं विना का°. [c]) C om. कृत्वा. C °च्चमर्थस्य°. D °पितं तात्वा.

(16) [a]) ADH शब्दस्य सङ्केतात् शब्दानपेक्षा शब्दस्य वृत्ति . CM प्रवृत्तिः. [b]) ADH जात्यादिभेदेन. [c]) M वाचकमर्थ°. C °र्थपक्षे°. ADH वाग्भेदेन. M °समवायानुभू°. C °षयकतया तत्पदार्थे प्र°. A °दर्थ प्र°. B °त्तिनिमिति°. [d]) C °तिमामा°. M om. जायते... स्वरूपे. B सन्देहात्मा जा°. [e]) C °ज्ञानच्च. ADH चेदव° D °वक्त्रेत्र°. D वत्कज्ञा°. M om. अर्थापरिज्ञानाच्च...सन्देहो. B सन्देहे BL वृत्तसङ्क°. DHLM नाक्षादौ. C ताक्षा°. C संबन्धो. B इति संबन्धम्. C स्वरूपसिद्ध इति L इत्यर्थसंबन्धं.

(17) BL समवस्थितस्व°. D °स्थितं स्व° CM रूढो. ACDH सामवायिक.

का. ३. A योगशब्दा°. C °र्थयोस्तरतत्त्वमप्यतो च व्य°. M °मथतो

(18) [a]) अस्यार्थस्यायं शब्दो वाचकोऽस्य शब्दस्यायमर्थो वाच्य इति षष्ठ्यन्यथानुपपत्त्यास्त्येव स्वाभाविकः शब्दार्थयोर्योग इत्यवसीमते। असंबद्धानां घटपटादीनामेवमन्योन्यपारतन्त्र्येण व्यवहारायोगात्। [b]) अत एव च स्वाभाविकात् संबन्धाच्छब्दार्थयोस्तत्त्वं गौरयमर्थ इत्यभेदेन व्यवह्रियत इत्यर्थः। यदि वा **अतः** षष्ठयाः सकाशात्तत्त्वं स्वरूपं संबन्धस्योच्यते ॥ ३ ॥

[e]) ननु षष्ठी सवन्धस्य कार्यम्, स्वरूपनिवेशि तु लक्षणमुच्यतामित्याशङ्कयाह—

**नाभिधानं स्वधर्मेण संबन्धस्यास्ति वाचकम्।**
**अत्यन्तपरतन्त्रत्वाद्रूपं नास्यापदिश्यते ॥ ४ ॥**

(19) [a]) इह पदार्थानां स्वरूपमवधार्य तदनुगामिशब्दनिवेशेन लक्षणं क्रियते। [b]) तत्र **स्वेन** असाधारणेन **धर्मेण** स्वभावेनोपलक्षितस्य **वाचकं** प्रत्यायकम्, **अभिधानं** षष्ठीव्यतिरिक्तं नास्ति, इदंतया स्वरूपानवधारणात्। [c]) गुणा द्रव्याधीना अपि प्राधान्येन शुक्लादिशब्देन कदाचिदुच्यन्ते, नैवं संबन्ध इति **अत्यन्त** ग्रहणम्। [d]) नित्यपरतन्त्रो हि संबन्धः परोपाधिस्वरूपः संबन्धिनोः परस्परौन्मुख्यस्वभावो धर्ममात्रलक्षणः। [e]) ततो निष्कृष्य संबन्धशब्देन स्वप्रधानः संबन्धिरूपतयाभिधीयमानो न साक्षात् स्प्रष्टुं शक्यत इत्यसंविज्ञानपदः कार्यैकगम्यः ॥ ४ ॥

तदाह—

**उपकारात्स यत्रास्ति धर्मस्तत्रानुगम्यते।**
**शक्तीनामपि सा शक्तिर्गुणानामप्यसौ गुणः ॥ ५ ॥**

---

(18) [a]) C °मर्थे वा°. C षष्ठ्यान्य°. C °त्यास्तेव शब्दार्थयोः स्वाभाविको योग इत्येवर्नायते. AD असवन्धानमिव. C °पटादिना मेवं अ°. M om. घटपटादीनां. B °दीनामन्योन्य. [b]) ACD अत एव स्वा°. M °विकाच्छब्दा°. A यदि वात्र ष°; C वान षष्ठी; C °काशा त°. D सकाशो. A स्वरूपसंव°. M षष्ठ्यर्थस्याविकारात्तत्त्वं ब्रह्मरूपं संबन्ध°. [c]) A कार्यत्वं. D कार्ये. C स्वरूपं निवेशयि. M °वेशि न तु लक्षणमुचितमि°.

का. ४. C om. K. ४. B नाभिधेन. L °भिधान स्व. L वाचकः. M °दिश्यति.

(19) [a]) B °वधार्यतो. C °ब्दविविशेन°. [b]) M तच्च. C स्वेनास्य°. C तेनोपेक्षि°. C वाचक. ACDH प्रत्यायनं C इदं च स्वममानसाधा°. [c]) C निगुणा. M स्वप्राधा°. C कदाचिच्छुक्लादिशब्देनोच्यते तेनैव. M °च्यन्ते नैव स°. C इत्यन्त ग्रहणम्. [d]) C °न्त्रो विहितः. M हि तत्स° C °परोपाधौ°. AD °पाधिस्वरूपसंव°. L धर्मोऽत्र लक्षणम्. [e]) C निष्कृत्य. C संबन्धः स्वश°. C संबन्धोरू°. D °भिधाय°. C प्रष्टुम्. D स्पष्टं. M न शक्यते°. C इति सवि°. AD °ज्ञातपदः. M °ज्ञातपक्षका°. C कार्यगम्यत्वादाह.

का. ५. A उपकारः स°. DC यत्रा °स्ति परस्त°.

(20) [a]) उपकार्योपकारकयोरुपकारप्रभावितः संबन्धोऽसंबद्धानामुपकाराभावात्। **धर्म** इति नित्यपारतन्त्र्यमाह। [b]) धर्मित्वे स्वातन्त्र्यात् संबन्धान्तरप्राप्तेरनवस्थापातात्। [c]) न च शक्तिरेव संबन्धः, शक्तीनामप्याधारपारतंत्र्ये नियतकार्यजनने च संबन्ध एव नियामको यतः, गुणानामपि च द्रव्याश्रितत्वात्स्यापकः संबन्ध एवेति परतन्त्राणामप्युपकारकत्वात् सर्वत्रानुमीयमानस्वरूपो नित्यपरतन्त्रः ॥ ५ ॥

[d]) ननूक्त एव संयोगसमवायलक्षणः संबन्धः परैरिति कोऽतिशयस्तत्प्रतिपादन इत्याशङ्कयाह—

**तद्धर्मणोस्तु ताच्छब्द्यं संयोगसमवाययोः।**
**तयोरप्युपकारार्था नियतास्तदुपाधयः ॥ ६ ॥**

(21) [a]) पारतन्त्र्यं संबन्धलक्षणमिति संयोगसमवाययोर्द्रव्यगुणादिषु तत्त्वात् संबन्धशब्दप्रवृत्तिः। तस्य संबन्धस्येव धर्मः पारतन्त्र्यलक्षणो ययोस्तौ तद्धर्माणौ। [b]) स्वरूपमात्रेण हि तौ संबन्धमनुकुरुतः। तथा च तस्य संबन्धस्येव शब्दस्तयोः, गौणः संबन्धशब्दः **संयोगसमवाययोः**, न तु मुख्यतस्तावेव संबन्धः। [c]) तथा हि-यदा स्वतन्त्रपदार्थान्तरवत् तयोरपि स्वगतोपाधिविवक्षा तदा तदुपक्रियमाणत्वात्स्वातन्त्र्ये सति पारतन्त्र्याभावात् स्वतन्त्रपदार्थवत् संबन्धरूपताहानिः। [d]) **उपकारार्था** उपकारप्रयोजनाः। **नियता** असाधारणाः। **तदुपाधय** इति। संबन्धस्य उपाधिर्येषाम्, असंबन्धानामनियामकत्वात्। [e]) इत्थं चोपाधिमन्तौ स्वतन्त्रौ यौ, ययोश्चोपाध्यवच्छेदे संबन्ध उपयोगी, तौ संयोगसमवायौ कथमुपाधिरूपेण परतन्त्रेण संबन्धेनैकात्म्यं भजेतामिति स्वाश्रये संबन्धिप्रतीतिहेतुत्वात् संबन्धसधर्माणौ तौ ॥ ६ ॥

---

(20) [a]) A उपकारकः स्वभावतः. C om °कयो.. कार. D संबन्धा. M om. संबन्धो. AD असंबन्धाना°. ADH इति तु नि°. L नित्यं पा°. [b]) AD धर्मत्वे. C °त्वे न स्वा°. D °त्वे पात°. ADH °न्त्र्याद्धर्मान्तर°. [c]) C शक्तिना°. D शक्ताना°. CM द्रव्याश्रयत्वा°. AD °त्रानुमानस्व°. [d]) D एवं. C °योगप्रथमचाय°. C °तिपदाने.

का. ६. D °च्छब्द्य. C ततोयमुपकारार्थ. D रतपोप्युप°. C °यतास्वदुपाद्धयः. B °रार्थत्वानि°.

(21) [a]) C °तन्त्रः ADH संयोगल°. M °ग मपि. H repeats पार...समवाययोः C द्रव्यादिपु. AD संबन्धिश° B °गयोर्ययोः तद्ध° C °योस्तु धर्मणो हि तौ. [b]) C om. हि तौ (after °मात्रेण). C °न्धमुपकु°. AD तत्संबन्धस्यैव धर्मशब्दः. [c]) D °विवक्ष्य. C स्वातन्त्रे; C °पदार्थसव°. D °वत्सबन्धः रूप°. A °रूपतात्वापत्तिः. C °रूपता अन्यानि ; D °रूपतानानिः. H °तातानिः. L °ताजानि. M °ताजाति. [d]) C °रार्थोप°. M °रार्थोवका°. CM °जना. B °जनानिसाधा°. C °धारण. AD उपर्येपा संबन्धाना नियामकत्वात्. B संबन्धस्य तूपा°. CM संबन्ध उपाधि°. C संबन्धानामेव नि°. [e]) C इत्थ चचापोपा°. AD चोभयोश्चो°. C यौ पयोश्चो°. B ययौः शाखावच्छेदे. ACD °योगी तेन. C तेन समवायौ. C °पादीरू° AD पारतन्त्र्येण. M °नैककर्म्यं ABCDH संबन्धप्रती°. C °दुयाधा.

तत्र संयोगस्य तावदुपाधयः ।

**काचिदेव हि सावस्था कार्यप्रसवसूचिता ।**
**कस्यचित् केनचिद्यस्यां संयोग उपजायते ॥ ७ ॥**

(22) [a]) परस्परसंयोगेनावयवानामुपसर्पणप्रत्ययाहितेनावयवि द्रव्यं जायत इत्यसमवायिकारणं संयोगोऽवयव्यन्यथानुपपत्त्यावसीयते । [b]) तथा च द्रव्यैकनियतत्वं गुणत्वेन सत्तासंबन्धः संयोगस्योपाधिरिति तत्रोपकारः संबन्धेन तस्यावच्छिद्यते । [c]) यत्परतन्त्रश्च संयोगस्तेनोपाधिना संबन्धानुगृहीतेनावच्छिद्यत इति पारतन्त्र्यं नाम संबन्धसामान्यरूपमस्यान्वयि न तु तदेकजीवितं पारतन्त्र्यम् [d]) अस्य गुणकर्मसामान्यादावपि भावादस्य च द्रव्यैकनियतत्वात् । किं च संयोगस्य गुणत्वात् संबन्धो गुणत्वसंयोगत्वसंबन्धश्च [e]) न पदार्थसंबन्धस्य सर्वपदार्थोपकारस्य तद्योगो द्रव्यगुणकर्मभ्योऽन्यत्वात् । वस्तुभूतकार्यकारित्वं च संयोगस्य, योजनामात्रहेतुस्तु संबन्ध इति भेदः ।

समवायादपि संबन्धस्य भेदं नियतोपाधिनियमितसमवायस्वरूपानुवादेनाह—

**निरात्मकानामुत्पत्तौ नियमः क्वचिदेव यः ।**
**तेनैवाप्यपवर्गश्च प्राप्त्यभेदे स यत्कृतः ॥ ८ ॥**
**आत्मान्तरस्य येनात्मा तदात्मेवावधार्यते ।**
**यतश्चैकस्य नानात्वं तत्त्वं नाध्यवसीयते ॥ ९ ॥**
**तां शक्तिं समवायाख्यां शक्तीनामुपकारिणीम् ।**
**भेदाभेदावतिक्रान्तामन्यथैव व्यवस्थिताम् ॥ १० ॥**
**धर्मं सर्वपदार्थानामतीतः सर्वलक्षणः ।**
**अनुगृह्णाति संबन्ध इति पूर्वेभ्य आगमः ॥ ११ ॥**

---

का. ७. CM °सूचिका. C चिद्यस्या. M चिद्यस्याः.

(22) [a]) C °सर्पणं प्र. L परस्परं सं°. C °प्रत्ययानियतेन. C द्रव्य जातय. C °वायिकर°. C °वयवान्य°. [b]) C गुणेन. C तत्त्वोपकारक. [c]) A °तन्त्रः सं°. M स्वसंयोगः. C स्तेनो°. C °धिनानुगृ°. C °तन्त्र. [d]) C °तन्त्र्यस्य गुण°. DH °कर्मसहमासामा°. A गुणत्वात् सत्ता सबन्धो°. M °त्वात् कुतास°. CD गुणत्वं. D om. संयोगत्वं. [e]) CM ननु; L न तु. CM om. पदार्थ. CLM om. सर्वपदार्थसंबन्धावधर्मस्य. DH द्रव्यं गुण°. C °भूतकारि°. M संयोगयोगना°. C योजनमतः सं. ACD भेदे. C °धिनिर्मित°. A °समवायं स्व°.

का. ८. D निनात्मका°. C नियामः. CD °वाप्यवयव°. C प्राप्त्यतेयश्च.

का. ९. C °न्तरश्चे. C तदात्मैवा°. M तदावाव°. M om. यतश्च...नाध्यवसीयते. °करवनाना°.

का. १०. D तां शक्तिं. D शक्तानामु°.

का. ११. A धर्मः सर्व°. C सर्वधर्मपदा°.

(23) [a]) सत्कार्यवादे कारणमेव कार्यं भवतीति प्रतिनियतैः शब्दैस्तज्जन्यत इति तत्रैव तदुपलंभो युक्तः। असत्कार्यनये तु नियतेष्वेव कारणेषु कार्यम्, तन्तुष्वेव पटः, कपालेष्वेव घट इत्यादिबुद्धिहेतुः समवायोऽभ्युपगतः। [b]) सत्यपि च भेदे कार्यकारणयोः **तेनैव** नियमविपर्ययेण कारणेनैव कार्यस्यावियोगो देशकालभेदात् प्राप्तेः संबन्धरूपतायाः संयोगेन सहाविशेषेऽपि समवायकृतः। [c]) तथा च संयोगात् समवायस्य भेदः। अत एव कार्यकारणयोरवयवावयविनोर्धर्मधर्मिणोर्जातितद्वतोर्गुणगुणिनोर पदार्थान्तरत्वेऽपि तादात्म्येनावभासः। [d]) यथायोगं स्वगतविशेषसद्भावात्तु तादात्म्यमतत्त्वमिति **इव**-शब्दः। **तेनैवाप्यपवर्गो** इत्युक्तस्यैवेदं फलकथनमिति न पौनरुक्त्यम्। [e]) अव्यपवर्गादेव ह्यन्यस्यात्मनावभासः। अत एव प्रवादिना विमतिः, अवयवावयविनोर्धर्मधर्मिणोश्चैकत्वं केचिदिच्छन्ति केचिन्नानात्वमिति समवायव्यामोहादपि परमार्थतो न व्यवतिष्ठते। अनेन चायुतसिद्धिः समवायस्योपाधिरुक्तः।

(24) [a]) एवमयुतसिद्धानामिहप्रत्ययहेतुः समवायो नान्येषामित्ययं नियमः संबन्धेन समवायस्यावेद्यते। यत्रैव हि पारतन्त्र्यमस्य तत्रैवेहबुद्धिमभेदमिव च प्रकल्पयति [b]) द्रव्यगुणकर्मसामान्येषु शक्तयोऽपि वाधारपारतन्त्र्येण तेन नियम्यन्ते। समवायिष्विव च समवायस्यापि भेदस्तेभ्यो नावधार्यते। [c]) संमूर्छितरूपत्वेनावभासात्। इह प्रत्ययकार्यवशात्त्वनुमीयते सतत्त्वतः संबन्धिव्यतिरेकेणेत्येवं परप्रसिद्धम्। **येन** इति समवायमनूद्य **तां शक्तिमिति** शक्तित्वमस्य विधत्ते। [d]) अनुग्राहकत्वेन पदानामस्य तैस्तुल्यकक्षतया निर्देशानुपपत्तिरित्यर्थः। शक्तित्वादेव च **भेदाभेदावतिक्रान्तत्वम्**। [e]) तत्त्वान्यतत्वाभ्यामनिर्वाच्या हि शक्तयः। तथोक्तम्—

शक्तीनां वस्तुरूपत्वे तत्त्वान्यत्वविचारणा।
युज्यते कल्पिताना तु युक्ताद्वयवियुक्तता॥

---

(23) [a]) C कारणत्वमेवकार्याभि° L °कार्यि भ°. C तदुपलभो. C कार्यकारणेषु तु' C इत्यादि इहबु°. ACDH °भ्युपगन्तव्यः। [b]) LM °कालभेदः प्रा°. C सयोगे. AD °हाविशेषोऽपि. C °शेषेविपस°. [c]) ADH om. जातित...वभासः; B गुणगुणिनाः, C जातितत्वयोः, L °त्म्येनैवावभासः. [d]) ADH om. यथायोगं...पैनरुक्त्यम्। C °विशेषेऽपि समवायकृतस्य सद्भावात्तादात्म्यमीतिवशब्दः। M तथायोग स्वगतविशेषेऽपि समवायकृतः यद्भावाना तु तादात्म्यवमितीवशब्दः। [e]) ADH om. अव्यपवर्गाद्...धर्मधर्मिणोः; C अथापवर्गादेवान्यस्य. C अत एवावयवादीना विमतिः. C °धर्मिणोश्चैकत्वात्. C °दिच्छति नाना°. AD अनेनायुत°.

(24) [a]) D एवम प्रतसि°. C एवमयुतसे°. B °सिद्धीना. AD पारतन्त्र्यस्य तत्रैव बुद्धि°. [b]) C साधारणपारतन्त्र्येणे A °तन्त्र्येण न निय°. C तेनाभ्यावधार्यते. [c]) B संमर्दित°. A °नुमितसत्वतः. B °नुमितसतत्वः. D °मितसत्वः. HL °मितसततत्रः. M सतत्व स°. M समवायतत्वमनूद्य. C तामिति शक्तिमिति शक्तिमत्व°. [d]) B वैतत्तुल्य°. C तैरुक्तस्य कक्ष°. [e]) °न्यत्वाभ्यामानि°. AD °द्वयविकल्पिता.

इति ।

(25) [a]) तथा हि-समवायिसम्मूर्च्छितत्वेनावभासान्न ततो भिन्ना नाप्यभिन्ना। आश्रयासंभविनः कार्यस्येहप्रत्ययलक्षणस्य जननादिति तत्त्वान्यत्वाभ्यामनिर्वाच्यता। [b]) अतश्च **अन्यथैव** पदार्थवैलक्षण्येनेयमवस्थिता । यदि वेहप्रत्ययकार्यस्याभेदात्स्वतोऽभिन्ना, तस्यैव तु समवायिप्रकल्पितभेदत्वाद्भिन्नापीत्येवमेकापि सती संबन्धिनानात्वात्कल्पितभेदेति **अन्यथा व्यवस्थिता** । [c]) साधनादिशक्तीनां चाश्रयावस्थानेन **उपकारिणी** । [d]) तदेवंरूपामपि **समवायाख्यां शक्तिं** सर्वपदार्थगतस्वाधीनत्वलक्षणं धर्ममतिक्रान्तो नित्यपारतन्त्र्यलक्षणोऽत एवोपकारापेक्षं **सर्वं** वस्तु **लक्षणं** ज्ञापकमस्य न समवायस्येव प्रतिनियतं संबन्धिरूपमेवेत्येवंरूपः संबन्धोऽनुगृह्णाति नियमयति, परतन्त्रे एवायुतसिद्धेऽवस्थापयति, पारतन्त्र्यसामान्यात् स्वव्यपदेशं च निवेशयतीत्यागमज्ञाः संबन्धलक्षणं पारतन्त्र्यमाहुः । [e]) एवंविधकार्यकारी संबन्धो नाम पदार्थविलक्षण इत्यागमेन द्रढयति ॥ ९–११ ॥

एवं च कृत्वा संयोगसमवायावेव नेह संबन्धौ यथान्येषां दर्शनमित्याह—

**पदार्थीकृत एवान्यैः सर्वत्राभ्युपगम्यते ।**
**संबन्धस्तेन शब्दार्थः प्रविभक्तुं न शक्यते ॥ १२ ॥**

(26) [a]) षट्पदार्थवादिभिर्वैशेषिकैर्गुणपदार्थे संयोगः प्रक्षिप्तः । समवायस्तु स्वतन्त्रः पदार्थ इत्युक्तनयेन पारतन्त्र्याच्छक्तिरूपोऽपदार्थोऽपि पदार्थः कृत इव तद्रूपसमारोपात् संबन्धः । [b]) न चेहास्य शब्दस्यायमर्थ इति नियमेन प्रविभागे शब्दार्थयोः सोऽभ्युपगन्तुं पार्यत इति तद्व्यतिरिक्तस्तयोरस्ति संबन्ध इत्यव्याप्तिः पदार्थसङ्ग्रहे वैशेषिकाणाम् । तथा हि—

---

(25) [a]) A °वभासाच्च ; C °वभासानां न ततो भिन्नाम°. A भिन्नाप्यभिन्ना. M तत्वतो भिन्नानामथ भिन्ना. AD आश्रायासमवायिसंभविनः. B आश्रयासंबन्धिनः. [b]) B पदार्थसंबन्धवैल°; C °वैलक्षण्येयेनय°. A चेहप्रत्ययस्याभेदात्. A भिन्नेत्येव°; C भिन्नानित्ये°. DH भिन्नानीत्ये°. AD संबन्धनाना°; C संबन्धेना°. M संबन्धीना°. AD °भेदेऽन्वयान्यथानवस्थिता. C °न्यथाव्यव°. [c]) C साधनादिनीश°. A चेयमत्रोपस्थाने योपका°. C चायमाश्रयोवस्थापितोपका°. D वादा अयोपस्थाने. [d]) A तदेवभूतानामपि; C °भूतायामपि. B सर्वपदावगतस्वाधीनस्त्वल°. AD °लक्षणां. A °लक्षणतयैवोपकारापेक्षत्व; C °लक्षणे एवो°; D नित्ययास्त्रअलक्षणेतिपवा°. AD सर्ववस्तुल°. AD समवायस्यैव. C समवायस्य. A प्रतिनियतसं°. A °मेवेत्येक रूपसंबन्धो; C °रूपे मेवित्ययं रूप°. AD नियमितपरतन्त्रे एवायुतसिद्ध वस्था°; C नियमातिपरतन्त्रये. C °सिद्धे व्यं°. AD व्यपदेशं च निवेदय°. AD °तन्त्र्यमाह. [e]) AD पदार्थलक्षण. C °लक्षण न इत्या°. D इहयति. AD संयागसमवायाविव. C °समवायव्यव.

का. १२. ADH अपदार्थी°. B संबन्धं ते°. B शब्दार्थे.

(26) [a]) D ins. षट्पदार्थप्रविभक्तुं न शक्यते before षट्पदार्थवादिभिः. C °वादीभि°. A °रूपोऽप्यर्थोवि ; C °रूपोऽपि. L °पदार्थोविपदार्थः. AD कृत एव. M कृत इति. A °समारोपासंबन्धः. [b]) AD इत्यतिनियमेन. A इत्यव्याप्तिप°. C इत्यव्याभिप.°

**समवायात् स्व आधारः स्वा च जातिः प्रतीयते ।**
**एकार्थसमवायात्तु गुणः स्वाधार एव ये ॥ १३ ॥**

(27) [a]) खाकाशगगनादयः शब्दाः स्वार्थमाकाशाख्यं तत्र समवायात् प्रतिपादयन्ति, स्वसमवेता जातिं स्वरूपलक्षणां सर्वे शब्दाः समवायसंबन्धात् प्रत्याययन्ति, तस्याः शब्दव्यक्तिषु समवायात् । [b]) शब्दत्वमपि शब्दशब्दस्तत्र समवायात् प्रत्याययति । ये त्वाकाशगुणा महत्त्वादयस्तानेकार्थसमवायाच्छब्दाः प्रत्याययन्ति, महत्त्वादिशब्दानामसाधारणानां महत्त्वादिविशेषगुणानां वाकाशे एकत्र समवायात् । [c]) एवं शब्दव्यक्तिलक्षणा गर्जितकूजितभणितहेषितादयो गगनस्यासाधारणा गुणास्तदभिधायका अपि गर्जितादयः शब्दास्तदेकार्थसमवायादेव ॥ १३ ॥

तथा—

**द्रव्यत्वसत्तासंयोगाः स्वान्याधारोपबन्धनाः ।**
**तत्प्रदेशविभागाश्च गुणा द्वित्वादयश्च ये ॥ १४ ॥**

(28) [a]) **द्रव्यत्व**मपरसामान्यं **सत्ता** च महासामान्यमेकार्थसमवायाद् द्रव्यत्वादिशब्दैः प्रत्याय्येते । सत्ताद्रव्यत्वे हि द्रव्यत्वादिशब्दस्य यः स्व आधार आकाशस्तत्रान्यत्र च पृथिव्यादौ वर्तेत इति **स्वान्याधारा**भ्यामुपबध्येते, स्वात्मनि नियम्येते । [b]) तथा च स्वान्याधारवृत्तिनी, स्वाश्रयपरिसमाप्तत्वात्, सामान्यानामाश्रयान्तरसमवायेऽप्येकैकत्र समवायाविरोधात् तथा चाकाशेन पदार्थान्तराणां ये प्रदेशवृत्तयः संयोगविभागद्वित्वपृथक्त्वादयश्च तेऽपि संयोगादिशब्दैरेकार्थसमवायादेव प्रत्याय्यन्ते द्विष्ठत्वात् संयोगादीनामाकाशेऽपि समवायात् ॥ १४ ॥

तथा—

---

का. १३. ACD सा च. D °वायास्तु. A एव तेः. D एव यो.

(27) [a]) AD ये वाकाश°; C वाचकागम°; M समवायाय. C °समवेत्ता जाति. C सर्वशब्दः. [b]) A om. शब्दत्वमपि...प्रत्याययति. D समवायात् प्रत्यापयति ये°. M येस्य गुणा. L °शस्य गुणा. D नागेकार्थ°. C °समवायया°. A प्रत्यापमन्ति. L महत्वादिविशेपणाना चाका°. [c]) C शब्दव्यति°. C °कूर्जितमणितहाप°; D °गतित...मणित°; M मणितहर्पि°. C °स्याधाबु°. AD °स्यासाधारणा तद°. D गर्हिता°. C °वायादेव तथा.

का. १४. B द्रव्यप्रसक्ता. C °तथासंयोगात्. A स्वाधारोपनिवन्धनाः. C °विभागाच्च. B तत्प्रभेदविभा°.

(28) [a]) ADH om. सत्ता च महासामान्यम्. C सत्ता च सागा°. C °कार्थसंवाधादि. A प्रत्याय्येत ; C प्रत्याय्यते. C °दिशब्दः यश्च स्व. D आकाराः. CL वर्तत. D स्यान्याधा°. C °मुपबुन्यते. L °वध्यते. L सात्मनि. [b]) A प्रदेशशब्दे त्रयः. D प्रशब्दतयः. B संयोगात्...श्रयश्च. C संयोगात् विभागात्. A प्रमाप्यन्ते. C °काग. विशेपसमवायसमवायात्. C ins. चकाशेन पदार्थान्तराणा य प्रदेशवृत्तयः before Kā. 15.

**केचित् स्वाश्रयसंयुक्ताः केचित् तत्समवायिनः ।**
**संयुक्तसमवेतेषु समवेतास्तथा परे ॥ १५ ॥**

(29) [a]) स्वशब्दानामाश्रय आकाशः, तेन संयुक्ता रथघटादयो रथघटादिशब्दैः समवेतसंयोगात् प्रत्याय्यन्ते । [b]) घटादिसमवेतास्तु रूपादयो गुणा उत्क्षेपणादयश्च कर्मविशेषाः स्वाश्रयसंयुक्तसमवायाद्रूपादिशब्दैः प्रत्याय्यन्ते [c]) घटादिसमवेतरूपादिसमवेतास्तु रूपत्वादयो रूपत्वादिशब्दैः स्वाश्रयसंयुक्तसमवेतसमवायादभिधीयन्ते ॥ १५ ॥

तथा—

**स्वाश्रयेण तु संयुक्तैः संयुक्तं विभु गम्यते ।**
**समवायस्य संबन्धो नापरस्तत्र दृश्यते ॥ १६ ॥**

(30) [a]) दिक्कालात्मनां विभूनामाकाशेन सहाप्राप्तिपूर्विकायाः प्राप्तेरसंभवात्साक्षात् संबन्धाभावाद्दिक्कालादिशब्दैः स्वाश्रयसंयुक्तसंयोगात्ते प्रतिपाद्यन्ते । [b]) आकाशेन हि संयुक्ताः पृथिव्यादयः, तैः संयुक्ता हि दिक्कालात्मानः । एवं पूर्वानुसारेण विभुद्रव्यसमवेताः गुणाः तत्समवेताश्च सामान्यविशेषाः स्वशब्दैः स्वाश्रयसंयुक्तसमवायात् स्वाश्रयसंयुक्तसमवेतसमवायाच्चाभिधीयन्त इत्यध्यवसीयत इति पृथङ् नोक्तम् । [c]) तदेवं द्रव्यगुणकर्मणा सामान्यानां च प्रतीतेहेतुरुक्तः । विशेषस्यापि परमाणुमनःसमवेतस्य स्वाश्रयसंयुक्तसमवायात् स्वशब्देनाभिधानम् । आकाशसमवेतस्य त्वेकार्थसमवायात् [d]) दिक्कालात्मसमवेतस्य स्वाश्रयसंयुक्तसमवायापेक्षया प्रतीतिरुक्ता । एवमत्र यथायोगं विभजनेऽपि समवायशब्दस्य स्वार्थप्रतिपादने न कश्चित् संबन्धः स्यात् समवायस्याद्रव्यत्वात् केनचित् संयोगाभावात् स्वरूपवृत्तित्वात् समवायान्तरा-

---

का १५. A prints the Kārikā as part of Helārāja's commentary. C संयुक्तः केचित् सम°. M समुपेताः.

(29) [a]) AD स्वः श°. BM आकाशं. M समवेततसंयो°. [b]) AD घटादिसमवेतरूपादिसमवेतास्तु रूपत्वादयो रूपादयो. C घटादिसमवेत्या गुणो. C °समयुक्तसम°. [c]) D घटादिसमवेतास्तु. D ह्यत्वादिशब्दैः. C श्वाश्वेतसंयुक्त°.

का. १६ C om. तु. B समयायः स सं°. M संबन्धेना°. C विद्यते ।

(30) [a]) AD विभुत्वमाका°. D repeats दिक्कालात्मनां विभुत्वमाकाशेन सहाप्राप्ति; C सहप्रति; H सहाशक्तिपू°. C द्विकाला°. C °संयोगाते ; D °संयोगात्ते. [b]) C एवं प्राणा पूर्वानु°. B °वेतगुणं. D °वेतः गुणाः. B °युक्तः संयुक्तसम°. AD om. °समवायात्...पृथङ् नोक्तम् । CM अभिधीयते. [c]) AD om. तदेवं...परमाणुमनः. B repeats चाभिधीयन्त...परमाणुमनः. AD वेदार्थसम°. [d]) M °समवायापेक्ष.ाया प्र°. C °रुक्तः. C एवमंत्रा. C विमजने. AD स्वार्थस्य प्र°. AD पादनेन कचित्. C कञ्चित्. C °भावास्य.

भावाच्च । [e]) स्यादेतत्—समवायशब्द आकाशे समवेतो घटादयश्चाकाशेन संयुक्तास्तेषु च समवायः स्थित इति स्वाश्रयसंयुक्तसंबन्धात्तमभिधास्यति । [f]) नैतद्युक्तम्, समवायान्तराभावात् समवायस्य घटादिषूक्ता कल्पना न युज्यते ॥ १६ ॥

तथा हि—

**संबन्धस्याविशिष्टत्वान्न चात्र नियमो भवेत् ।**
**तस्माच्छब्दार्थयोर्नैव संबन्धः परिकल्पते ॥ १७ ॥**

(31) [a]) यदायमर्थो विशिष्टस्य संबन्धस्याभावादिति तदान्तरेण संबन्धं समवायशब्दः स्वार्थं न प्रत्याययेदित्यनर्थकः, यद्वा प्रत्याययन्न नियमेन सर्वमर्थं प्रत्याययेदिति व्याख्या । [b]) प्रकृतापेक्षया वानियमः । निमित्तं विना समवायशब्दस्य स्वार्थाभिधानेऽनिबन्धनलक्षणस्य संबन्धस्याविशिष्टत्वात् सर्वः शब्दः सर्वमर्थं प्रत्याययेत् । यदा तु **संबन्धस्याविशिष्टत्वात्तुल्यत्वाद्** अन्येन साधारणत्वादित्यर्थस्तदेयं व्याख्या । [c]) आकाशशब्देन समवायात् स्वाश्रयाभिधाने घटादयोऽपि शब्दा गगनाभिधायिनः स्युः, आकाशसमवायस्याविशेषात् । एवं च स्वसमवेतजात्यभिधाने शब्दशब्दस्य गुणत्वं सत्ता च प्रतिपाद्या स्यात् । [d]) घटादिशब्दैश्च स्वाश्रयसंयोगाविशेषात् पटादयोऽपि प्रत्याय्येरन्नितीयं अव्याप्त्यतिव्याप्तिभ्या व्यवस्था शब्दार्थसंबन्धे विशीर्यते यतस्तस्मात्संयोगसमवायरूपतया नात्र संबन्धपदार्थपरिकल्पनं न्याय्यम् ॥ १५ ॥

प्रौढिवादितया वैशेषिकदर्शनं समर्थयितुमेतदाह—

**अदृष्टवृत्तिलाभेन यथा संयोग आत्मनः ।**
**क्वचित् स्वस्वामियोगाख्योऽभेदेऽन्यत्रापि स क्रमः ॥ १८ ॥**

---

[e]) C देतत् (for स्यादेतत). CM आकाशेन. D आकाशं. C °वेता. D °स्तंषु. AD °वांयास्थिति. C °सयुक्तसंमवायात्. C ins. (after समवायात्) स्वशब्देनाभिधान आकाशसमवेतस्य स्वेकार्थसमवायदिकालात्समवायात्तस्य स्वाश्रयसंयुक्तसंबन्धा. L तदभिधा°. [f]) A घटादिषु कालकल्प°. D °दिषु का कल्प°. C om. तथा हि. M तथापि.

का १७ C °र्थयोर्नैवः ; L °र्थयोर्नैवं. HLM °कल्प्यते.

(31) [a]) °यदर्थो. AD विशिष्टसंब°. ACDHM om. अन्तरेण...नियमेन and have instead. तस्य सबन्धस्याविशिष्टत्वात्. CM शब्दः सर्वमर्थ°. ACDHM om. इति व्याख्या. [b]) ACDHM om. प्रकृतापेक्षया...प्रत्याययेत्. AD °ल्यत्वादनेन साधा°. D °दित्यर्था तदेवं ; M तदेवं. [c]) M आकाशस्य श°. ACDH °भिधाने शब्दस्य°. C °पाद्यं. [d]) D स्याश्रसयोग°. ADM घटादयोऽपि. AD समव्याप्ति अभिव्या°. M नियमव्याप्त्य°. C °तिव्याप्तिव्यव° C °समवायिस्व°; D °समयरूप°; M °वायस्वरू°. AD om. न्याय्यम्. AD °दर्शनेस°; C °दर्शनं न स°. M °दर्शनेन स°.

का १८. C °योगभेदो. D °स्यत्रापि. L °योगाख्ये. ACDH सङ्क्रमः.

(32) [a]) व्यापकस्यात्मनः सर्वैर्द्रव्यैः संयोगस्याविशेषेऽपि धर्माधर्मवशाच्छरीरादावेव स्वस्वामिभावलक्षणः संबन्धो यथा, एवमिहाप्यविशिष्टेऽपि स्वाश्रयसमवाये स्वाश्रयसंयोगे वाऽदृष्टवशादेव प्रतिनियतः शब्दार्थो व्यवस्थास्यत इत्यतिव्याप्त्यभावः। **अदृष्टस्य** धर्माधर्मलक्षणस्यात्मगुणस्य **वृत्तिः** फलदानं प्रति व्यापारः तस्या **लाभो** देशकालादिसहकारिवशात् प्राप्तिः। [b]) तुच्छोऽयं परिहारो हेयत्वादस्य पक्षस्याभिहितः। भोगस्य स्वसुखदुःखसाधनभूतस्य युक्तं कर्माक्षिप्तत्वं न तु सर्वस्य तथाभावो युक्तः। अथ शब्देनार्थप्रतिपादननियमे सति तस्य भोग्यत्वमित्येतदपि कर्माक्षिप्तमेवेत्युच्यते तदा सर्वस्य जगतस्तथाभावाददृष्टहेतुप्रत्याख्यानं सर्वत्रायातम्। [c]) अथायमत्राशयः-यथा संयोगे समानेऽपि न सर्वं स्वमात्मनः, नापि सर्वेषामात्मनां प्रत्यात्मगतादृष्टनियमात् तथा संबन्धाभेदेऽपि न सर्वं सर्ववाच्यम्, प्रयोगदर्शनाभ्यासजसंस्कारपारतन्त्र्यादिति तदा सर्व एव प्रतिनियतविषयः प्रयोगदर्शनाभ्यासात् सङ्केतादवसीयमानस्वरूपः संस्कारो योग्यतारूपः संबन्धोऽस्तु, किमन्येनानिबन्धनेन संयोगसमवायलक्षणेन नान्तरीयकेण कृत्यम्॥ १८॥

समवायस्य त्ववाच्यत्वमेवाभ्युपैति।

**प्राप्तिं तु समवायाख्यां वाच्यधर्मातिवर्तिनीम्।**
**प्रयोक्ता प्रतिपत्ता वा न शब्दैरनुगच्छति॥ १९॥**

(33) [a]) शब्दप्रतिपाद्याना वाच्याना गवादीनामर्थानां धर्मः संसर्गिरूपाच्छुरितत्वम्, निरुपाधीना शब्दविषयतायोगात्। समवायस्तु निरुपाधिः, न हि तस्य गुणसामान्यादिः कश्चिदुपाधिः परैरङ्गीक्रियत इति **वाच्यधर्म**मतिक्रान्तः। [b]) तथेदं तदिति प्रत्यवमर्शयोग्यत्वं **वाच्यधर्म**मतिक्रान्तः। नित्यपरतन्त्ररूपश्चासौ समवायशब्दा-

(32) [a]) AD सर्वद्र°. A विशिष्टस्यापि. AD चादृष्टव°. C शब्दार्था व्य°. AD व्यवस्थास्यति. C °त्मगणस्य. D दत्तिः फ°. C तस्य. C °कारीवशा°. [b]) CM कृच्छ्रोऽय. D तच्छाय. D त्तयत्वा°. M °मिहितः स्यात्. HM भोग्यस्य. BLD स्वस्य सुख°. D प्रक्रकर्मा°. D न त सव स्य. C °र्थप्रत्ययनियमे. M °र्थप्रत्ययादनियमे. A भोगत्वमि°; D भावत्वमि°. LM °वात् दृष्ट°. D सचवायातं. M °त्राख्यातम. [c]) AD संयोगे संयोगे समाने. D समाने वि ग. AD सर्वस्वमा°. D त्रया सं.° M संबन्धो भे°. CD सर्व स°. M स एव. CDM °विषय प्र°. C संबन्धास्तु. AD °न्येन नि°. C किमनेमन. D °लक्षण तु L तन्नान्तरी°.

का. १९. C प्राप्ति. CD °याख्या. CD °वर्तिनी. B धर्मानुवर्ति°. D शब्दार°.

(33) [a]) L om. वाच्याना. ACDHL धर्मसंसर्गि°. AD गुणाः सामान्यादिश्च. C °मान्यादिह. M गुणंसा°. M क्वचित्. [b]) C repeats तथेद...क्रान्तः. AD °परतन्त्ररूपत्वाच्चासौ. AD °शब्दादपि अव°. M °वेशीव संज्ञानयेदं. A °स्ति। एवं. D भावनीयं. ACM समवायशब्दा°. D °वगम्यन.

दपि नावधार्यते प्रयोक्तृप्रतिपत्तृभ्यामिति न तत्स्वरूपनिवेशिसंविज्ञानपदं किंचनास्ति इत्यवाच्य एव भावतोऽयम्। संबन्धिरूपतया तु स्वतन्त्रः समवायः शब्दादवगम्यते। [c]) तथा च धर्मितया प्रतीतेर्धर्मान्तरयोगसहत्वादस्त्येव स्वाश्रयसंयोगः, तदभिधाने समवायशब्दस्य संबन्ध इति न कश्चिद्दोषः। अर्थान्तरे समाजादौ च प्रयोगदर्शनात् समवायशब्दो नासाधारण संविज्ञानपदमस्य लौकिकम्। किं तर्हि? वैशेषिकसमय एव रूढम्। [d]) वाच्यमर्थं प्रयोक्ता विवक्षित्वा योग्यं शब्दं प्रयुङ्क्ते। समवायस्य तु पारतन्त्र्यात्मनो वाच्यत्वाभावात् प्रयोक्तुर्योग्यशब्दोदाहारे व्यापाराभावः, तदभावात् प्रतिपत्तापि न तत्र कश्चिदित्युभयोपादानम् ॥ १९ ॥

अत्रावाच्यत्वे समवायस्योक्ते नैयायिको वाक्छलमुद्भावयति—

**अवाच्यमिति यद् वाच्यं तदवाच्यतया यदा।**
**वाच्यमित्यवसीयेत वाच्यमेव तदा भवेत् ॥ २० ॥**

(34) [a]) **अवाच्य**मित्यनेन शब्देन यद् **वाच्यं** वक्तुमभिप्रेतं तद्यदैवा**वाच्यतया** अवाच्यशब्देन **वाच्यं** व्यवहर्तव्यमिति प्रतीयते तदैव **वाच्यं** भवति, प्रतिपादनकाल एव वाच्यतामुपैतीत्यर्थः। [b]) तथा च वाच्यमित्युक्तेऽवाच्यशब्दस्यैव वाच्यमित्यवाच्यत्वं विरुध्यते ॥ २० ॥

**अथाप्यवाच्यमित्येवं न तद् वाच्यं प्रतीयते।**
**विवक्षितास्य यावस्था सैव नाध्यवसीयते ॥ २१ ॥**

(35) [a]) अवाच्यशब्दस्याप्यवाच्यत्वे प्रतिपिपादयिपितं शब्दानभिधेयत्वं समवायस्य न गम्येतेत्यस्य वाच्य एव। [b]) तथा च विरोध इत्यर्थः ॥ २१ ॥

---

[c]) ACD प्रतीते धर्मा°. M °हत्वास्येव C श्वाश्र°. A तदभिधानसम°. C °भिधाने च स°. AD समानादौ; C समजातौ; M समाजातौ. AD नाम साधारणं. C नामासा°. A °पदमस्य। लौ°:. C °मस्य दर्शन. ACD वैशेपिकसमवाय. [d]) AC विवक्षितत्वा. D विवक्षितत्वा. D पुक्तं. L वाच्यताभा°. C ह्युक्तर्यो°. AD योऽय शब्दो°. C व्यापारेभावात्. M °भावात्. AD तथापि वो वा कं.

का. २०. C तदवाच्य एव तया. C वाच्यमीत्यं° D °सीयते. M om. वाच्य...भवेत्.

(34) [a]) C °वाच्यतया. M om. अवाच्य ... वाच्यतयावाच्यशब्द. A °शब्दे वाच्यं. D om. अवाच्यशब्देन ... भवति. M om. व्यवहर्तव्य. H om. वाच्यं ... प्रतिपादनकाले एव वाच्यतामुपैतीत्यर्थः। D om. प्रतिपा° ... इत्यर्थः। [b]) D om. तथा च ... त्युक्ते. C च तद्-वाच्य°. H om. तथा च ... वाच्यशब्द. M ins. शब्देन वाच्य व्यवहर्तव्यमिति प्रतीयते तदैव वाच्यं भवति प्रतिपादन (after °त्युक्ते वाच्यशब्द).

का. २१. C om. न. L नैतद् वा°. A सेयं. C स्यैवनाथव°.

(35) [a]) C °ब्दस्याथवा°. C तिपिपाद°. ACD न गम्यते त्वस्य. M गव्ये गद्यतेत्यस्य. A वाच्यत्व. [b]) C °त्मना सर्ववाच्यो. AD °त्मनो वाच्यो.

अथ पारतन्त्र्यात्मनावाच्यो न सर्वथेत्याशङ्क्याह—

**तथान्यथा सर्वथा च यस्यावाच्यत्वमुच्यते ।**
**तत्रापि नैव सावस्था तैः शब्दैः प्रतिषिध्यते ॥ २२ ॥**

( 36 ) [a]) पारतन्त्र्यात्मना न वाच्य इत्यपि प्रकारप्रतिषेधे प्रकारवत एव प्रतिषेधः कृतो भवति । न हि तेनान्येन सर्वेण वा प्रकारेणावाच्य इति प्रकारमात्रस्यावस्थालक्षणस्यैतैः शब्दैः प्रतिषेधः । [b]) धर्म्यप्रतिषेधे तदाश्रितधर्मप्रतिषेधानुपपत्तेः । तस्माद्विशिष्टनिषेधेऽपि प्रतिषिद्धमेव वाच्यत्वं समवायस्येति कथमवाच्यशब्दस्यायं वाच्यः स्यादिति चोद्यमेव । यदि वा **तथान्यथा** इत्यादिना निषेधेऽपि न सैवावस्था निषेद्धुं शक्या यावदवस्थाता न निषिद्ध इति नान्तरीयकोऽस्य निषेधः । [c]) शब्दविषयताप्रत्यवमर्शमन्तरेणाकारविशेषः प्रतिषेद्धुं न शक्यत इति शब्दविषयत्वेन तस्य वाच्यत्वोपपत्तेरवाच्यत्वे न विरोध इति पूर्वे व्याचक्षते ॥ २२ ॥

अस्य वक्तुरभिप्रेतादर्थादर्थान्तराध्यारोपेण वाक्छलस्योत्तरं वक्तुमेतत् सदृशं निदर्शनमाह—

**न हि संशयरूपेऽर्थे शेषत्वेन व्यवस्थिते ।**
**अव्युदासे स्वरूपस्य संशयोऽन्यः प्रवर्तते ॥ २३ ॥**

( 37 ) [a]) समानधर्मोपलंभाद्विशेषानवधारणाद् विशेषस्मृतेश्चार्थे संशयिते स्थाण्वादौ स्थाणुर्वा स्यात् पुरुषो वेति यदिदं संशयज्ञानमाजायते तत्र **संशयरूपे** ज्ञाने संशयितेऽर्थे स्वविषये **शेषत्वेन** तद्विषयव्यवस्थापनाङ्गत्वेन स्थिते तदुपरि तदैवान्यसंशयज्ञानं नोत्पद्यते, अस्यार्थपरतन्त्रस्यापरित्यक्तपारतन्त्र्यस्वरूपस्य स्वविषयविज्ञानं प्रति विषयभावोपगमविरोधात् । [b]) यदि हि स्वविषयस्य संशयरूपस्य ज्ञानस्येदं

---

का. २२. ACD अथान्यथा BL सैव नावस्था.

( 36 ) [a]) H om. प्रतिषेधे...इतिप्रकार. C °षेधः प्रका°. D °कारचन. AD तेनान्येनान्येन. CLM वाच्यमिति. D °वख्यालक्ष°. M °स्यैव तैः. [b]) M धर्मप्रति°. C °षेधस्यानुपपत्तेः. C °शब्दत्वस्यायं. C °दित्यचोद्य एव. AD तथापीहान्यथे°. M °न्यथान्यथे°. A तथैवावस्था°. M तस्यैवाव°. ADH निषिध्यते. L °कोऽन्यनि°. [c]) वाच्यत्वौप°. M पत्तेरशब्दवाच्यत्वे.

का. २३ D म हि ; D व्यवःस्थितेः. C अव्युदामे. C ऽस्यः. B प्रतीयते. D प्रावतेने.

( 37 ) [a]) M °र्मोपलंभत्वात्. A °षस्य तेष्वार्थे ; D °षस्य नेश्वा°. L om. संशयिते. D संशः°. D स्थीन्वादौ. C om. स्यात् B ins. स्यात् (after पुरुषो वा ). D प्रहवो. A न जायते. B °ज्ञानमुपजा°. C °ज्ञानं ज्ञायते. M °ज्ञानमायते. C संशयीते. A स्थितम् । CD स्थित. CM तदेवा°. HM °तन्त्यरूप°. D om. गमविरोधात्. [b]) D om. यदि ... विषय. L ज्ञानस्वरूपेणैव. AD °प्रतिष्ठः ; C °तिष्टे. A यो ह्यविनश्यं स्व°. C बाह्यस्वविभावे. D या ह्यविशं. M स्वरूपं. A प्रडोलाय°. AD °मानत्वान्न°. M °प्रवृत्तौ स°. M शयनतायोगात्.

विपयभावमुपेयात्, तदा स्वरूपेणैव संदिग्धत्वादलब्धप्रतिष्ठं स्वस्मिन् बाह्यविमर्शस्वभावे संशयात्मनि स्वरूपे नावतिष्ठेत । तथा च बाह्यस्यार्थस्य दोलायमानत्वं न परिच्छिद्यते युगपद्विषयविषयिभावस्यानुपपत्तेः । तेनैव चार्थप्रवृत्तेन संशयेन विपयवत् स्वरूपस्यापि संशय्यमानतायोगो व्यापारस्यैकत्वात् । [c]) तदेवं यथा संशय आत्मरूपं वर्जयन् विषयं सन्देहयति तथा अवाच्यशब्द आत्मानं वर्जयन् विपयीकृतं वाचयतीति साधर्म्यम् । **संशयरूपेऽर्थे** संशयाभिधाने ज्ञानवस्तुनि वेत्यर्थः । **शेषत्वेन** व्यवस्थितिरत्रार्थाद् वस्तुविषया ॥ २३ ॥

उदाहरणान्तरमप्याह— ( ३७ )

**यदा च निर्णयज्ञाने निर्णयत्वेन निर्णयः ।**
**प्रक्रम्यते तदा ज्ञानं स्वधर्मेणावतिष्ठते ॥ २४ ॥**

( 38 ) [a]) विशेपावधारणरूपे निर्णीयमानार्थविपये **निर्णयज्ञाने** तदैवार्थपरिच्छेदव्यापृतेऽपरः स्वगतो **निर्णयो** न प्रवर्तते । ज्ञानस्य ह्यर्थपारतन्त्र्यं स्वधर्मः । [b]) ततस्तु निष्कृष्य स्वरूपविचारे स्वधर्माद् विप्रकृष्येत, स्वातन्त्र्येण विपयभावापत्तेः । अत एव ज्ञानान्तरग्राह्यत्वं न भवतीति घटज्ञानमिति प्रागेव प्रतिपादितमिति ज्ञानान्तरविपयत्वे विपयित्वत्यागात् स्वधर्मस्य हानिः । [c]) तदेवमन्यत्र व्यापृतस्य तदैव स्वविपयव्यापाराभावाद्यथा ज्ञानस्य ज्ञेयत्वं नास्त्येकस्या संवित्तौ तथा वाचकस्य वाच्यत्वं नास्तीत्यवाच्यशब्दः प्रतिपादनावस्थो नात्मन एव वाच्यतामर्थस्य निपेधति, स्वात्मनि क्रियाविरोधात् । न च शब्दान्तरं तदानीं तद्वाच्यतानिपेधकमस्तीत्यवाच्यशब्दस्याभिधाविषभभावमत्रोपगच्छत्येवार्थः । तथा हि शब्दान्तरस्य समवायशब्दस्य समवायस्वरूपेण न वाच्य इत्येतद्वक्तुर्विवक्षितं प्रतीयत एव ॥ २४ ॥

---

[c]) सशयात्म°. A वर्जयत् . AD साधर्म्यसंश°. A स ज्ञानव°. A °तिरर्थावस्तु°.

का. २४. C निर्णयेज्ञाने ; DH °ज्ञानं. D निर्णयज्ञानिर्णंद्य. D ज्ञंन स्व°. C °नं धर्मेना.

( 38 ) [a]) C °रूप. D मिर्णी°. C निर्णीतेय°. A °मानार्थस्य वि° A °च्छेदे व्या°. BH °च्छेदव्यावृते ; M °च्छेदव्यावृत्तत्वेपर. ADH अपरस्वगतो. AD °तन्त्र्य धेर्मः; L वाह्यार्थपारतन्त्र्यं. M ज्ञानस्येत्यर्थपा°. [b]) AD निष्कृष्टस्व°. D repeats निर्णीयमानार्थस्य...निष्कृष्टस्वरू C °भावोपपत्तेः M अंतस्पर एक. ACM °ग्राह्यं तन्न. M °ज्ञानमिति ज्ञानमिति. AD °पादितम् । ज्ञाना°. AD ज्ञानान्तराविषयित्वत्या°. A °धर्मस्याहानिः. C °धर्महानिः. M °धर्मज्ञाति. [c]) B व्यावृत्तस्य. C व्यावृ°; M व्यर्च्यप्रतद्या°. BD तदेव. C व्यापाराद्यथा. M °भावात् । यथा. C ज्ञानज्ञेयत्वं. BL वाचकस्यावा°. B नासीदित्येव वाच्य° C नानित्यवा°. M नानित्यवा°. CM प्रतिपादनात्मनो नावस्थाना°. A °विपयभाव अत्रोपपन्न इत्यर्थः C °भावमात्रो°. D °भावप्रत्रोपत्रत्येवार्थः A °स्वरूपेण वाच्य.

तद्यथा—

**सर्वं मिथ्या ब्रवीमीति नैतद्वाक्यं विवक्ष्यते ।**
**तस्य मिथ्याभिधाने हि प्रक्रान्तोऽर्थो न गम्यते ॥ २५ ॥**

(39) [a]) स्ववाक्यानामसत्यार्थताप्रतिपादनाय **सर्वम्** अहं **मिथ्या ब्रवीमि** इत्युक्तेऽस्यापि वाक्यत्वान् मिथ्यार्थता न प्रसञ्जनीया । एवं हि **प्रक्रान्तं** विवक्षितं स्ववाक्यान्तराणां मिथ्यात्वं न प्रतीयेत [b]) अथ सत्यपि मिथ्यार्थत्वे प्रतिपादकत्वमस्य वाक्यस्य वाक्यान्तराणामपि तथैव स्यादिति तेषा मिथ्यार्थप्रतिपादनं प्रक्रान्तमफल-मित्यपरोऽत्रार्थः ॥ २५ ॥

अत्रैव युक्तिमाह—

**न च वाचकरूपेण प्रवृत्तस्यास्ति वाच्यता ।**
**प्रतिपाद्यं न तत्तत्र येनान्यत् प्रतिपाद्यते ॥ २६ ॥**

(40) [a]) करणसन्निवेशिनस्तदैवाभिधेयता विरुद्धा, अन्यप्रतिपादनप्रवृत्तस्य तदैव प्रत्युदावृत्यात्मनि व्यापाराभावात् । वस्तुस्वभावोऽयं यत् कर्तृशक्तियुक्तं न तत् कर्मशक्तेरधिकरणं तदैव भवति, स्वातन्त्र्यपारतन्त्र्ययोरेकदैकत्र विरोधादित्यर्थः । [b]) **प्रतिपाद्यं न तत्तत्र** इत्यादिना सर्वनिदर्शनसाध्यमन्ते निगमितवान् । यत् प्रतिपादकं न तत् प्रतिपाद्यम् । यथा संशयज्ञानं निश्चयज्ञानं वा । प्रतिपादकं चाभिधानमतो नैतत् प्रतिपाद्यमिति प्रयोगः ॥ २६ ॥

ननु मा भूद् वाचकं वाच्यम्, विरोधात् । आत्मकर्तृकवाक्यसामान्यानुप्रवेशात्त्वस्य मिथ्यात्मता केन वार्यत इत्येतदाशङ्क्यैतदेव निदर्शनान्तरेणोपपादयति—

---

का. २५. CL सर्वंमिथ्या. H पूर्वं मि°. D ब्रवीनांति. C नैद्वाक्यं वक्ष्यते. M °क्षिते. C प्रक्रान्तार्थो.

(39) [a]) C °वाक्यानां मिथ्यार्थ°. M °वाक्यानामसत्यानामस°. C °पादनाह्. L °पादने. M °पादनय. C वाक्यार्थत्वात्. B स्ववाक्यत्वात्. A मिथ्याभिधाने व्यर्थता. C °र्थता संजनीया. M प्रसनीभिया. D प्रक्रीत. A °क्षितस्ववाक्यान्तराणि. C मिथ्यात्वप्रतीतं प्रतीयते. D °यति. M °यते. [b]) M om. अथ. AD सत्यमपि. A मिथ्यार्थप्रति°. C मिथ्यार्थत्वेन. D मिथ्यार्थत्वे. A °पादकत्वे सत्यवाक्यस्य. D °न्तराप्यामपि. C तश्पाथैव. C मिथ्यत्वंप्रति°. M प्रक्रान्तं फल°.

का. २६. L पाचक°. D प्रवृत्तस्यास्ति. C न तत्रं. C येनान्यत°. M येनन्य°.

(40) [a]) C °सन्निवेधेन°. D °वेशिनेस्त°. M कारणसन्नि°. A °भिधेयान्ता. M °धेयतापि तत्रान्य°. B °पादनात्. ACD तदेव. AD प्रत्युदाहृत्यात्मनि. C प्रत्युदाहृत्यस्वात्म°. M °भावोऽयं कर्तृ°C °कर्तृयुक्तं. M °कर्मशक्तोऽधि°. CDH तदेव. AD स्वातन्त्र्यपारतन्त्र्ये व्यापारे एकत्रैकदा. M स्वातन्त्र्ययोरेकदा. [b]) BLM न तत्रे°. AD सर्वदर्शनसाध्यमन्ते निगमितत्वात्. C °साध्यमते -निर्गम°. C न तत्र प्र°. D प्रतिपाद्य. A संशयज्ञानं वा प्रति°. A वाचाकावाच्यं. AD °कर्तृक-सामान्या°. C °कर्तृकवाच्यसा°. M °कर्तृकं वा शक्यं सा°. C मिथ्यात्मना.

**असाधिका प्रतिज्ञेति नेयमेवाभिधीयते ।**
**यथा तथास्य धर्मोऽपि नैव कश्चित् प्रतीयते ॥ २७ ॥**

(41) [a]) साध्यनिर्देशः प्रतिज्ञा साधनाङ्गं न भवतीत्युक्ते नेयमेव सौगतस्य प्रतिज्ञात्वाविशेषात्तथा भवति, अनर्थकत्वे विवक्षितार्थासिद्धेः । अपि त्वेतद्वर्जं प्रतिज्ञान्तराणां तत्ता । एवं सर्वं मिथ्या ब्रवीमीत्यस्यापि वाक्यस्यायथार्थताप्रतिपादने क्रियमाणे धर्मोऽनृतत्वं न गम्यते [b]) तथाभावे विवक्षितार्थप्रतिपादनाभावे प्रयोगवैफल्यात् ॥ २७ ॥

एवमवाच्यशब्देऽपि द्रष्टव्यम् । उपसंहरति —

**व्यापारस्यापरो यस्मान्न व्यापारोऽस्ति कश्चन ।**
**विरोधमनवस्थां वा तस्मात् सर्वत्र नाश्रयेत् ॥ २८ ॥**

(42) [a]) अवाच्यशब्दस्य स्वार्थप्रतिपादने यो व्यापारोऽभिधालक्षणस्तस्यान्यो व्यापारः स्वविषयस्तदानीमेव नास्ति येनैकेन व्यापारेण शब्दान्तराभिधेयतां निषेधत्यपरेणात्मनोऽप्यभिधेयतामित्यवाच्यशब्दस्याप्यसावर्थो न वाच्यः स्यादिति विवक्षितं शब्दान्तराणामप्यवाच्यत्वं न प्रतीयेतेति विरोधः स्यात् । [b]) निर्निमित्तव्यापारान्तराभ्युपगमे चानवस्था स्यात् । तथा हि— यद्यवाच्यशब्दस्यापि विषयभावनिषेधाय व्यापारान्तरं संभवेत् तदा तस्यापि व्यापारान्तरस्य स्वविषये प्रवृत्तिनिषेधाय व्यापारान्तरं तदैवेत्यनवस्थानादप्रतिपत्तिः स्यादित्यर्थः । व्यापारान्तराभावात्तु नैष प्रसङ्गः । **सर्वत्र** इति न केवलं वाच्यतायामेव, अपि तु संबन्धेऽपि, संबन्धस्य संबन्धिभ्यां सहान्यस्य संबन्ध-

---

का. २७. DH असाधका. C ज्ञेयमे°. D प्रतिक्षेति. DH om यथा. BH नैवं; D नैच M तत्र कश्चित्.

(41) [a]) C व्यापारस्याध्यनिर्दे°. M °देंशप्रति°. C म भवती° C °त्युक्त नियमेनैव मे च. D नेद्य मेव. M नेयमोवा. C अनर्थकत्व. A त्वेतद्वर्जप्रति°. B त्वेतद्वर्जन. C त्वेद्वेतर्जप्र°. D त्वेतद्वर्जं प्र°. AD सत्ता. C ततथा. M सर्वत्र मि°. A °त्यस्यायथार्थ°. C °मितिस्यवाक्य°. A om. DH क्रियमाणे ... गम्यते. [b]) ACDH om. तथाभावे ... उपसंहरति. C om. तथाभावे विवक्षितार्थप्रतिपा and has निधाभावे instead of दनाभावे. C °प्रवैकल्यात्। एवात्मशब्दवाच्यशब्दे. M गम्यते । तत्रात्रविवक्षि°. M °वैकल्यात्.

का. २८. A gives this immediately after K 27. DH delete this Kā.

(42) [a]) ADH om. अवाच्यशब्दस्य स्वार्थप्रतिपादने C अभिघोल°. D अभिधाल°. D तदानीमे; C °न्तरेणाभिधीयतेति. C deletes °षेधति ... प्रतीयेतेति A °परेणान्यतोऽप्य°. D °त्यपरेणादतनो. M विवक्षितं शब्दा°. A °न्तराणामप्यवा° ABDHL om. न. [b]) ADH निमित्ते व्या°. C इति निनिमित्त°. A °न्तरानुगमे वाऽनं°. C यद्यवाच्य स्यापि. L यथाहि यद्य°. ACD °भावनिषेधाद्. C स्वविषयं. C inserts संभवत्वे तदा तस्यापि व्यापारस्य स्वविषयप्रवृत्तिनिषेधाय व्यापारान्तर (before तदैव) C °नवस्थाप्रतिपत्तिः. ACHL तत्र के°. A om. संबन्धेऽपि संबन्धस्य. A सहान्वस्य. C सहान्वसंब°. C भूत् इति सं°.

स्याभावे तयोरपि संबन्धिनोः शब्दार्थयोः संबन्धो मा भूत्। [c]) संबन्धान्तरकल्पने वानवस्थेत्येपानवस्था नाश्रयितव्या। संबन्धस्य स्वयं संबन्धरूपत्वादन्यस्योपश्लेषकस्या- योगादित्यर्थः। अथवा **सर्वत्र** इति सर्वं मिथ्या ब्रवीमि, असाधिका प्रतिज्ञेत्यादावित्यर्थः।

[d]) तदेवं परप्रसिद्धसंयोगसमवायलक्षणसंबन्धाश्रयेण शब्दार्थप्रविभागेऽतिव्या- प्तिरदृष्टवशात् परिहृता। अव्याप्तिरपि, साक्षात् समवायस्यावाच्यत्वे कल्पितेन रूपेण संबन्धितया वाच्यत्वे नास्त्येव तटस्थस्य समवायशब्देनामुखीकृतस्य समवायस्यावाच्यत्व- विधाने विरोधभावादिति प्रौढिवादितया शास्त्रान्तरसिद्धसंबन्धाश्रयेणापि शब्दार्थनियमो व्यवस्थापितः ॥ २८ ॥

इदानीं स्वनिकायसिद्धं संबन्धमुपपादयितुमाह—

**इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा।**
**अनादिरर्थैः शब्दानां संबन्धो योग्यता तथा ॥ २९ ॥**

(43) [a]) समवायादिनिमित्तानपेक्षयैवोच्चरितमात्राच्छब्दादर्थप्रत्ययोत्पत्तेरकृत्रिमा शक्तिरवसीयते। अर्थमात्रेण हि शब्दमात्रस्यावियोगमप्रवृत्तसंकेता अपि प्रतिपद्यन्ते। तथा च **योग्यता** स्वाभाविकी सिद्धा, संकेतस्तु तामेव द्योतयति। [b]) तद्यथा चक्षु- रादीनां रूपादिविषये पुरुषप्रयत्नानपेक्षा ग्राहकता। न हि यत्नेनापि रूपे रसननिवेशः शक्यक्रियः। एवं गवार्थे घटशब्दनिवेशोऽसाधुः। तथा हि भाष्यम्—

"यो हि गामश्व इति ब्रूयान्न जातुचित् सम्प्रत्ययः स्यात्" (M. Bh. on P. I. 2.64)

इति। यथारुचि सङ्केते हि न वाचकशक्तिपुरःसरीकारेणान्यविषये शब्दाः प्रवर्तन्ते

---

[c]) ADH ins. न after भूत्. A संबन्धान्तराकल्पने. C संबन्धेनान्तरकल्पनावस्था. D भासयितन. L °त्येषा नाश्र°. BL °त्येषा नाश्र°. A भासयितव्या. B °यितव्यः C °वस्थाश्रयि°. B °श्लेपकत्वस्या°. C °श्लेषातस्या°. D repeats संबन्धस्याभावे...स्वयं. A °दन्यस्यापि दोषस्या°. C °मीत्यसाधक. D °मीह्यसा°. D °स्योपह्येयस्या° A सर्वमिदं. D सर्वविद. A °मीत्यसाधि°. A विकल्पितेन. AD °त्वेन तटस्थस्य. M °त्यसाविका° [d]) C °संबन्धः श्र°. C °रदृष्टकमवशा° AD विरोधीभा°. C प्रोटिवा°. M तदवस्थस्य. C °मुखीकृत्य°. A °त्वाविधानं. C °च्यत्वे विरो°. L °मोऽवस्था°. M °स्थापिता. C ins. शास्त्रार्थे (before शब्दार्थ°). M शब्दार्थसंबन्धनि°. M सर्वनिका° M °मुपदर्शयि°.

का. २९. D °ष्वनदिर्यो°. C संबन्ध यो°.

(43) [a]) C °त्तामपेक्ष°. D °पेक्षयेवो°. M °क्षयोच्चार°. LM °त्राच्छब्दार्थ°. C °त्ययो- त्युतरकृतिमा वा श°. A अर्थमज्ञात्वेन. A अर्थमज्ञात्रेण. A °मात्रस्यापियोग° C शब्दस्यापि योगः वा. BL °मवृत्तसके°. M °गं प्रवृत्त°. LM °पद्यते. AD तया यो°. C सिद्धाः. AD सकेतास्तु. AD द्योतयन्ति. [b]) C चक्षुरादिना. D चक्षरा°. D °दिविव्य. D °प्रयत्तान°. D °ग्राहकमा. C थत्नेना°. C रसवन्निवे°. L ग्रामश्च इति. D ब्रूयाल जात वि°. M om. संप्रत्ययः ... समयमात्रं तत्.

प्रसिद्धार्थाः, अपि तु समयमात्रं तत्। [c]) संज्ञाशब्दानां तु सर्वसंज्ञिप्रत्यायनशक्तियुक्तत्वेऽपि विशिष्टे संज्ञिनि शक्त्यवच्छेदः सामायिकः। इयं च योग्यता शब्दानामर्थप्रतीत्यनुसारेणैव व्यवस्थापयितव्येत्यभेदेन शब्दार्थयोः प्रत्ययादध्यासफलैवावस्थितेति स एव मुख्यः संबन्धः। अत एव प्रतीतावर्थस्यापि विषयभावेनापेक्षणात् पारतन्त्र्यसामान्यात् संबन्ध इति व्यपदिश्यते। [d]) यद्यपि चेन्द्रियाणि कारकत्वादज्ञातान्येव ज्ञानं जनयन्ति, शब्दस्तु ज्ञापकत्वात् स्वज्ञानेनान्यधीहेतुः, तथापि पुरुषप्रयत्नानपेक्षा शक्तिः साधारणीति साम्यम्॥ २९॥

इहार्थगत्यर्थः शब्दप्रयोगः। सार्थायश्चार्थगतिरपशब्देभ्य इति तेषामपि सम्बन्धोऽर्थेन प्रसक्त इत्याशङ्क्याह—

**असाधुरनुमानेन वाचकः कैश्चिदिष्यते।**
**वाचकत्वाविशेषे वा नियमः पुण्यपापयोः॥ ३०॥**

(44) [a]) दैवी वागशक्तैर्व्यवकीर्णा बालवदन्धादिवदनुमितमूलप्रकृतिर्विदुषां वाचिका। न हि विद्वांसोऽर्थमपशब्दात् साक्षादवस्यन्तीति नापशब्दानामर्थेन कश्चित्संबन्धः। अत एव पुराकल्पेऽनृतादिभिरिवापभ्रंशैरपि रहिता वागासीदिति ब्रह्मकाण्ड उक्तम्। अवाचका एवापभ्रंशाः। [b]) ते तु सादृश्यात् साधुशब्दमनुमापयन्ति। तेभ्योऽर्थसम्प्रत्यय इति। तथा च संग्रहकारः—

शब्दप्रकृतिरपभ्रंशः।

इति। अद्यत्वे त्वधर्मबाहुल्यादनृतादिवद् वाङ्मलाना रूढिः। तथा चाव्यवधानेनैवापशब्देभ्योऽर्थप्रतीतौ न म्लेच्छितवै नापभाषितवै साधुभिर्भाषितव्यमिति शास्त्रप्रामाण्या-

---

[c]) H संज्ञाया शब्द°. A विसृष्टे. D विसष्टे. M सज्ञिनः C शक्यव°. D योग्येना. AD °तव्ये अभेदेन C °तव्येत्यन्तभेदेन. A °फलेवा°. C °फलेवास्थित°. M °स्थिते. A मुख्यसं°. D मरणसंबन्धः. D प्रतीनावर्थस्या°. C °तन्त्र्यसामर्थ्या°. BL इत्यपदि°. [d]) B इन्द्रियादीनि. C कारकारक°. B तथा हि. C °प्रयत्नयानपक्षयाः. C सामान्यम्. C स सार्थी°. C °गतिरेवश°. D °गतिप्रय°.

का. ३०. C वसाधु°. D वाचकाः वि°. M °त्वाविशेषेण.

(44) [a]) AD repeat पुण्यपापयोः (from the कारिका). A विवागशक्तःयक्तीना. B दैर्वावशक्त्यै°. C °गशब्दैर्व्याकीर्णा. D विवागशक्त्यै व्यक्तानां. C बालवन्धा°. L बालपद... न्धादि°. M °वदम्वाम्वादि°. A °दनुमिताकृतिर्वि°. D °दनुम्तिः कृतिर्ति°. L °रनुदितपूल प्र°. ACDH °क्षादेव पश्यन्तीति. ACD एव हि पु°. AD शब्दैरपि रक्षितासीदिति. [b]) C साधुना श°. D साध्वश°. AD संग्रहकारकः. C अद्यत्ये. LM °त्वेऽव°. C त्वनृतना°. A वालाना. C वद्धाजलाना. D °वद्धाजलाना. D रूटि. AD चावाच्यावधा°. C च वाच्यप्राधान्ये°. M °व्यवधानेनै°. HLM om. नापभाषितवै. B शास्त्रप्रबला स्यात्. L तदनुस्मृतिः.

त्साधूनामेव धर्माङ्गत्वमिति तदनुस्मृतिः शास्त्रेण । c) तथा च भेदस्याभेदपूर्वकत्वात्पुरुषविकल्पानियमेनानन्तत्वादपशब्दानामभिन्नसाधुशब्दपूर्वकत्वमेव निश्चीयत इति शब्दप्रकृतिरपशब्दः सिद्ध इति शब्द एव विद्या । तदत्र यथा विद्यावस्थाभिन्नत्वज्ञातिमिका तथा साधुशब्दावस्था विद्या । यथा च विद्यायां भेदो विनयः तथापभ्रंशावस्था । वाङ्मलरूपेति परमार्थनदितरावस्थापेक्षो विकल्पः । अविद्यादशापेक्षमेव " समानायामर्थगतौ शब्देन चापशब्देन च " इति भाष्यम् । अर्थगताविति वचनादर्थाभिधानमपशब्दानामवकर्णयन्ति । d) अविद्याया भूयसापशब्दैर्व्यवहारादर्थप्रतीतिमात्रं भवेत्तामेत्यर्थः । रूढत्वात्तु व्यवहारस्याविशेषं ग्रन्थकार आह । तत्र च शास्त्रं नियामकं साधुशब्दैरेवार्थो वक्तव्यो नापशब्दैरेवं क्रियमाणमभ्युदयकारि भवतीति । **पुण्यपापयोः** पुण्यपापनिमित्तं नियमः क्रियते साधूनां ज्ञानाच्छास्त्रपूर्वकाद्वा प्रयोगादभ्युदय इति । असाधुप्रयोगे तु धर्माभाव एव पापत्वेनोपचर्यते । न म्लेच्छितवै इत्येतस्य निषेधस्यातिक्रमात्पापमेव केचिदिच्छन्ति ॥ ३० ॥

समवाये संबन्धान्तराभावः पूर्वमुक्तः, अस्मिंस्तु दर्शने स न प्रसजतीत्याह—

**संबन्धशब्दे संबन्धो योग्यतां प्रति योग्यता ॥ ३१ ॥ क ख)**

(45) a) संबन्धशब्दो योग्यतालक्षणं संबन्धं योग्यतयैव प्रतिपादयति । एवं समवायशब्दोऽपि योग्यतयैवानादिसिद्धया स्वार्थप्रतिपादकः । b) तथा योग्यताशब्दोऽपि इति सर्वत्रास्य संबन्धस्य व्याप्तिः ।

सङ्केतस्य तर्हि क्वोपयोग इत्याह—

**समयाद्योग्यतासंविन्मातापुत्रादियोगवत् ॥ ३१ ॥ ग-घ-**

c) अनादिसिद्धार्थविषयव्यापारस्य शब्दस्य वृद्धव्यवहारपरम्परापरपर्यायात् समयात्

---

c) AD °विकल्पो नियमेनान्तत्वा°. L एव तत्र विद्या. A तदेवम् । यथा. C °वस्थाभिन्ने व°. A विद्याया भेदो; DH °द्यायामभेदो°. A वाप्यलंरूपेति. C वाजजरू°. D वामलं°. M वांजल°. ACD पर- मार्थत इति तदितरा°. B पारमार्थिकनाकरा°. D °दशोद्येश. H °दशोपेक्ष्य. M °दशपेक्ष. AD om. चापशब्देन. A वचनात् । अर्था°. AD °भिधानमिति शब्दानामेव कर्मपतित. C °मवकर्णयति. d) M अविद्यायामभ्युदयाय शब्दैर्व्य. A भवत्येवेत्यर्थः. C रूढत्वात्ततश्च. M तत्रा च. M om. पुण्यपापयोः. AD साधूनामज्ञानाच्छास्त्र पूर्वकत्वात्प्रयोगाभ्यु°. M °र्वकाद्धि प्र°. C प्रयोगेऽपि. C यापशब्देनोपच°. M °भावपत्वेन°. AD °धस्यापि क्रमात् पापत्वमेव.

का. ३१. क. ख. H प्रति योग्यतां.

(45) a) C °लक्षणसंबन्धो. M °बन्धयोग्य°. D स्वीस्वार्थ°. b) योग्यतासिद्धापी°. M °शब्दोपीति यः सर्व°. ACD नोपयोग.

का. ३१. ग. घ. C योग्यतां संचि. C मातापि°.

c) AD °हारस्य पर°. C °हारपारपर्या°. M °हारपरस्य सामर्थाय. M °समया स्वा°. B समवायमा°. C °मात्रातदर्थाभू°. AD °भूते तथा°. C समुच्चितः. B समवायिको. M °मर्थमर्थे. M नैते परि. A °भ्यासाद्यनिवेशात्. D °भ्यासाव्यानि°.

स्वाभाविक्येव योग्यता निश्चीयते, न तु समयमात्रादतथाभूतेऽपि तथाभावः समुचितः। न हीयमस्य पुत्रस्य मातेति जन्यजनकभावः सामयिकः, वस्तुसिद्धस्यैवैवं प्रतिपादनात्। अथ

प्रत्यक्षपूर्वकं संज्ञाकर्म

इत्यस्मद्विशिष्टानामर्थे शब्दनियोगः सामयिक एव। नैतत्। तैरपि योग्यतानुसारेण पूर्वाभ्यासातया निवेशात्। [d]) तदुक्तम्—

अनागमश्च सोऽभ्यासः समयः कैश्चिदिष्यते।

इति। किं भवानाहेत्यर्थमात्राविनाभावमवगत्य विशेषप्रश्नादवधार्यते। अविदित-संकेतानपि प्रति शब्दस्य योग्यता, पुरुषेणान्यत्र सङ्केतेऽपि प्ररूढेऽर्थे गवादिशब्दाज्झटिति प्रतिपत्तिः। न च पुरुषेण नियोगः शक्यक्रिय इति वक्ष्यति ॥ ३१ ॥

इदानीं कार्यकारणभावं शब्दार्थयोः सम्बन्धमाह—

**शब्दः कारणमर्थस्य स हि तेनोपजन्यते।**
**तथा च बुद्धिविषयादर्थाच्छब्दः प्रतीयते ॥ ३२ ॥**

(46) [a]) श्रोतृबुद्ध्युपारूढस्यार्थस्य **शब्दः कारणं** जनकत्वात्। शब्दार्थौ ह्यर्थो वशीकृततयावसीयमानः। तथा चान्यच्च, वक्तृबुद्धिनिवेशिनोऽ**र्थात्** कारणभूतात **शब्दः** श्रुतिविषयमनुप्राप्तः प्रतीयत इत्यर्थोऽपि शब्दस्य कारणम्। [b]) एवं चोभयथा कार्यकारणभाववर्णनाद्धूमाग्निवैलक्षण्येन शब्दार्थयोरभेदेन संबन्धोऽध्यासलक्षणः प्रतिपादितो भवति। तथा हि बुद्धौ शब्दार्थयोः पूर्वमभेदेनावस्थानम्। न हि विवक्षितोऽर्थः शब्दसम्भेदशून्यः, अन्तःसञ्जल्परूपस्य तस्य प्रतिभानात्। [c]) अनादिशब्दभावनानु-

---

[d]) AD अन्यगनः साभ्यासः C योध्यासः. AD वार्थमत्राधि°. C °मात्राभिन्नाभा°. A कैश्चिदान न केनापि. CM आवोक्षमकेतनापि. DH आचादेनेकेननापि. M °पगान्य सङ्क°. AD °शब्दादिति प्रति°. C °ब्दाजुटीति. AD पुरुषे. D सवंधमाह.

का. ३२. C सहा. D सहि. H सिद्धि. D प्रनीयते.

(46) [a]) M बुद्धयारू°. D ळारणां तन°. B ह्यर्थं. C ह्यवधिरू°. M यथों. ADH बहिरू°; M विहिरू°. AH °यावस्तोयमान :; D °यावस्तायमानः. M ins. त्मानं (before नथा). A चान्यद्वक्त्र°. D चान्यद्वक्तृ°. M °चान्यत्र मव्यक्त° C °न्वेशी तत्त्वान. AD ऽर्थत्वात्. CM °भूतः शब्दः. ACDH कारण एवो°. [b]) A °वर्णमाधूनादेवं° C °नाधुतपानेवं D °र्णमाधु-मोग्नेव°. C भवतो. ACDH यथा. M om. हि. D कुद्दा. C °र्थयो. D शब्दार्थ°. C हे. C °क्षितार्थः. C °शुन्यः. ADH सङ्कल्परूपस्य. B अन्तः सकल्प°. BL om. तस्य. H तस्य भानात्. [c]) AH °वनमनुविद्यत हि. B °भावनाविद्धं हि. C °वनासिद्ध हि. D °तनभाविध्व हि. M °वनानुबद्धं हि. ADH °मपि च. M °श्चामविज्ञान. M सतश्च स्थान°. B om. एव. L अतश्च स्था°. A °रादिभिर्व्यक्तोऽर्थरूपः शब्द इति शब्दश्रोतृ°. C °रादिभिर्व्यक्तोऽर्थस्वरूपः. M °र्थस्वरूपशब्दः. L °र्थस्वरूपः शबलशब्द. AD ins इति (before शब्दश्रो°). C शब्द शब्दशास्त्रीभि°. D °शब्दास्योः तृभि°. C °रूपास्फुरण°. ACDH °र्थमेव गम°.

विद्धं हि तिरश्चामपि ज्ञानम्। अत एव स्थानकरणव्यापारादभिव्यक्तोऽर्थस्वरूपशबलः शब्दः श्रोतृभिरवधारितस्तथैव स्वरूपाच्छुरणयार्थमवगमयति। [d]) प्रतिपाद्यप्रतिपादकयोर्हि परस्पराभिप्रायसङ्क्रान्तिर्व्यवहार इत्यन्तःस्थितमर्थं मूलावस्थामाप्यपरित्यक्तं वक्तृबुद्धिसमाविष्टं श्रोतर्यर्पयति शब्दः। श्रोतापि च तथैव स्ववासनाविकासानुसारेण प्रतिपाद्यते समाविष्टशब्दभावनः। तेन चोद्बोधितशब्दभावनः प्रवर्तत इति निर्णीतं वाक्यपदीये। [e]) तदेवमेकपक्षीभाव एवैकवाक्यतया सम्बन्धे तत्र स्थितः सिद्धान्तानुगुणः। यथाविवक्षं च शब्दोऽर्थमवगमयति नियतस्वरवर्णानुपूर्वीक इति स्वरविपर्यये विवक्षान्तरमिन्द्रशत्रुशब्देऽवगन्तव्यं स्वरभेदेनान्यत्वात्। स्वकारणमेव गमयति शब्द इत्यन्तरा विवक्षान्तरं लाघवादस्फुटप्रतिभासं प्रथमवर्णोच्चारणानन्तरं द्वितीयवर्णोच्चारणवदनुमीयते ॥ ३२ ॥

ननु बुद्ध्युपारूढे शब्दार्थे कथमोदनं भुङ्क्त इत्यादिव्यवहार इत्याशङ्क्याह—

**भोजनाद्यपि मन्यन्ते बुद्ध्यर्थे यदसंभवि।**
**बुद्ध्यर्थादेव बुद्ध्यर्थे जाते तदपि दृश्यते ॥ ३३ ॥**

(47) [a]) बुद्धिविपरिवर्तिनोः क्रियाकारकयोर्विज्ञाननये साध्यसाधनभावः सिद्धः प्रतिभाससारः। तथा हि **बुद्ध्यर्थे** बुद्धौ शब्दार्थौ भोजनं भोक्ता तत्संबन्धश्च यदसम्भवित्वेनाभिमतं तदपि सम्भवत्येव। [b]) कदेत्याह— **बुद्ध्यर्थादेव** ओदनादिप्रतिभासादपरस्मिन् भुज्यमानात्। कारकज्ञानसंवेदने जाते सति, वाक्यवादिनः पदमात्रात् प्रतीतेरपरिसमाप्तेः। अभ्युपगमवादश्चायम्। बाह्यनयेऽपि हि शब्दार्थस्य बुद्धिपरिवर्तिनः

---

[d]) C repeats प्रतिपाद्यप्रतिपादक. C पार°. L. °पादकोर्हि. C अतरिंथतम्°. M इत्यन्तास्थि° BL °विष्टः. AH श्रोतृनर्पति। शब्दश्रो°. D श्रोतृन्यार्पयति। शब्दश्रो°. A स्वाभाविकानुसा°. D स्ववाविकासासारेण H स्ववाचिकवि° L स्ववदनाविकायानु°. ACD प्रतिप°. ADH समाविष्टभा°. C °चोद्बोद्धते. D °शब्दः भाव°. M °चोक्तापाधिशब्द°. C निर्णीत. [e]) AD एतदेवमेकीभावपक्षीभाव. C °मेकीयमतर°. H तदीयेतदेवमेकी°. ACD संबन्धः. ADH शब्दार्थ° D °र्थगवगमयति. C °वर्णनुपूर्वीक. A °विपर्ययवि°. D °विपर्ययावि°. ADH °मिदं शत्रुशब्देन मन्तव्यम् AH परस्परभेदेन° ADH अस्य का°. C स का°. C °र्णवादादनुमी°. B शब्देऽर्थे BLM भुङ्क्तेत्या°.

का. ३३. ACH °द्यामिम°. C °र्थेवदसं°. D बध्यर्था च. D °र्थादवा.

(47) [a]) DHA °वर्तनं. AD °साधकभावसिद्धः C कार्यकारणया°. L °सिद्ध प्रति°. ADH मासभावः. C °माससभवः. C बुद्ध्यते. ADH बुद्ध्यैः. C बुधौ. L शब्दार्थे. D तदपि. [b]) L °र्थादेव चो°. ADH °स्मिन्ननुयुज्यमानाकारज्ञा°. C बुद्ध्यमानाकारज्ञानसंभवे. D ज्ञाने यानि. M °ज्ञानवेदने जाते सति. M °मात्रातींरेपरि°. C °नहे पि. C शदार्थस्य. C °द्धिरपि बद्धिनः. L °वर्तन प्रतीते.

प्रतीतेः । [c]) क्रियाकारकभावे दृश्यविकल्पयोरभेदाध्यवसायात् व्यवहारसिद्धिर्भवत्येव । तथा हि बाह्यार्थे सति दर्शनम् । दर्शनेऽर्थनिर्भासः, तस्मिन् सति वक्तुमीहा ततः प्रयत्नादेः शब्दोच्चारणमिति परम्परया बाह्यार्थ एव वाच्येत तत्र प्रवृत्तिरिति विनापि तु बाह्यार्थं शक्यते विज्ञानमात्रदर्शनेऽपि तन्निर्भासवशेन क्रियाकारकसंबन्धो मेलयितुमित्येवोपन्यस्तम् ।। ३३ ।।

यतश्च बुद्धिपरिवर्ती शब्दार्थः ततः शब्दार्थसंबन्धो नित्य उपपद्यत इत्याह—

**अनित्येष्वपि नित्यत्वमभिधेयात्मना स्थितम् ।**

(48) [a]) घटादिशब्दादुच्चरितादर्थाकारावग्रहस्य प्रत्ययस्य सदैवोपजननाद् बाह्येन रूपेण प्रध्वंसित्वेऽप्यभिधेयकेन शब्दार्थस्य नित्यत्वान्नित्यो ह्यर्थवतामर्थैरभिसंबन्ध इति प्रवाहनित्यताश्रयेण पस्पशायामुक्तम् ।

कूटस्थनित्यताश्रयेणाप्याह—

**अनित्यत्वं स्वशक्तिर्वा सा च नित्यान्न भिद्यते ।। ३४ ।।**

[b]) पदार्थानां सतामसत्त्वविरोधादतीतानागतयोरध्वनोर्नास्तीति प्रत्ययजनकमद्वयस्य तत्त्वस्य स्वस्य आत्मनो ब्रह्मणो द्रव्यलक्षणस्य सामर्थ्यमेव तत्रानित्यत्वमिति तस्य नित्याद्द्वयरूपात्तस्माद्भेदाभावादनित्यशब्देनोपाधिभेदभिन्नस्य पूर्वोक्तेनैव न्यायेन तस्यैव प्रतिपादनान्नास्त्यभावो नाम तदभावतो भावेषु कश्चिदित्यर्थः । [c]) ततश्च घटादिशब्दैः सर्वावस्थासूपाधिविशिष्टब्रह्मद्रव्यमेव नित्यं प्रतिपाद्यत इति नित्यः शब्दार्थसंबन्धः सिद्धः । तदुक्तम्—

द्रव्येऽपि पदार्थ एप विग्रहो न्याय्यः सिद्धे शब्देऽर्थे संबन्धे चेति ।। ३४ ।।

---

[c]) B °रभेदाध्यवहारसिद्धिर्भ°. L °हारासि°. C बाह्यर्थे. M बाह्येऽर्थे. AD दर्शनादर्थनि°. H यद्दर्शनादर्थे नि°. L °निर्भासं. C सतु वक्तुमीर्मा. D वक्रर्मा°. L °मिहा. M om. क्तुमी...ततः. A प्रतिभादेः. ADH बाह्ये एव वाच्ये. M वाच्यस्तत्र. C om बाह्यार्थ...न्यस्तम् । M °मित्येवमुपन्य°. ADH इतश्च. M यतस्तु. C om. यतश्च ... शब्दार्थ. B °वर्तितः. C नित्य एव. B आपाद्यत.

का. ३४ (क, ख) D नित्यर्थम°. C स्थिताम्.

(48) [a]) AH °र्थाकारत्वग्रहस्य. C °कारादवग्र°. D °र्थाकादग्वग्र°. D सदैः वो°. BL °वोपजनात्. C प्रध्वंसितोऽप्य°. M प्रसित्वे°. AH °धेयत्वेन. C शब्दस्यामामु°. C °तां श्रये°.

का. ३४. (ग, घ) D सा व नि°. BD °त्यानभि°.

[b]) C सता समन्वयवि°. A °गतयोरर्थयोर्नास्ति प्र°. AH °प्रत्ययजननम°. D °प्रत्ययनतर. M °जननीद्व°. L °मद्वयस्यात्मनो. ADH सर्वस्यात्म°. C सर्वात्मनो. D ब्रह्मणा. BL नित्याद्वय°. C °पाधिभेदस्य भि°. ACH ins. सामर्थ्यं (before पूर्वो°). AD नास्य भावानाम भावतो. C om. भावतो भावेषु. [c]) C प्रनित्यं नित्य. ACDH एप एव. C शिद्धे. C °वोथोद्गल. L °पोद्गल. M °पोद्गलयन्. D पदमनेनाहं,

एवं संबन्धं स्वाभाविकमवस्थाप्य तत्रैवोपोद्बलकं परमतेनाह——

शब्देनार्थस्य संस्कारो दृष्टादृष्टप्रयोजनः ।
क्रियते सोऽभिसंबन्धमन्तरेण कथं भवेत् ॥ ३५ ॥

(49) [a]) इहार्थं कंचनाप्यनभिदधतीनां शाबरादिविद्यानां विषादिशमने सामर्थ्यं दृष्टम् । [b]) प्रतितन्त्रं प्रसिद्धाना च बीजाक्षराणां जप्यमानानामदृष्टहेतुत्वमत एवोन्नीयत इत्यवाचकेष्वपि शब्देष्वर्थेन सह संस्कारान्यथानुपपत्त्या संबन्धभावात् सर्वत्र संबन्धावसाय इति कश्चित् ॥ ३५ ॥

एतन्निवारयति——

नावश्यमभिधेयेषु संस्कारः स तथाविधः ।
दृश्यते न च संबन्धस्तथाभूतो विवक्षितः ॥ ३६ ॥

(50) घटादिशब्देभ्योऽर्थस्य घटादेर्दृष्टादृष्टप्रयोजनस्य संस्कारस्यादर्शनादत्र संबन्धो न स्यादिति नेदृशसंस्कारनिमितमसौ विवक्षितः ॥ ३६ ॥

अपि तु

सति प्रत्ययहेतुत्वं संबन्ध उपपद्यते ।
शब्दस्यार्थे यतस्तत्र संबन्धोऽस्तीति गम्यते ॥ ३७ ॥

(51) [a]) प्रतिनियतार्थप्रत्यायनान्यथानुपपत्त्या शब्दार्थयोः संबन्धो योग्यतालक्षणश्चक्षूरूपादीनामिवेत्यस्मदुपज्ञमेव ज्ञाय इत्यर्थः । अर्थे नियते नियतस्य प्रतीतिहेतुत्वं **सति संबन्धे** युज्यते नान्यथेति यतस्तस्मादर्थप्रत्यायनाख्यात् कार्यात् **अस्ति संबन्धः**

---

का. ३५. CH संस्कारो दृष्टप्रयोजनः. B सोऽपिसं°. D °बन्धनन्तरेग.

(49) [a]) L कश्चिदप्यन°. C कश्चनाप्यभिद°. D °कश्चनाप्यना°. B शब्दराशिवि°. L शावरादिशब्दानां. C °पादिशयने. C दिष्ट. D दष्ट. [b]) BH प्रतितन्त्र प्र°. CL °तन्त्रसि°. H °वोन्नीयत. CM संस्कार्यान्यथा°. C om. सबन्धभावात् ... निवारयति. A संबन्धोऽवश्य इति. H om. अवश्य इति कश्चित् एतन् निवारयति. A त नि°.

का. ३६. DH om. नावश्य...न च. H om. संबन्धस्तथा. C संस्कारे स. B न तु.

(50) D °दृष्टप्रष्टन°. A °रस्य च दर्श°. DH °रस्यात्र द°. B om. संस्कारस्य. D विवहितः. C अपि तुः.

का. ३७. ACHL °हेतुत्वे. DH om. तत्र.

(51) [a]) C °र्थयो सं°. D शब्दर्थयो°. D संबन्ध गो°. L °लक्षणं. ADH °रूपादिकमिवेत्य (कादुपक्षनेव). C °रूपादिकमेव तस्मादुपज्ञेव जायत. M °दुपज्ञेव. C om. नियते. ADH om. सति. C मानयेति. C यस्मात्. ADH °प्रत्यायनात् का° ACDH शब्दार्थयोरिति.

शब्दस्यार्थ इति निश्चीयते । [b]) नार्थविशेषाधानरूपः संस्कारोऽत्र संबन्धावेदकः; तस्यानुपूर्वीमात्राद्विशिष्टेन प्रभाववता रचितादपि निष्पत्तेः प्रत्यायकत्वानपेक्षणादित्यर्थप्रतीतिनियमहेतुः शब्दार्थयोः संबन्धः प्रतीतिकृतो न प्राप्तिलक्षण इति प्रतीतिलक्षणादुपकारात् तत्सिद्धिः । [c]) यदपि मीमांसकैर्यच्छब्दे विज्ञातेऽर्थो विज्ञायते स संबन्ध इत्युक्तं तदप्यनेनैव दर्शनेन व्याख्येयम् । यतः कारणाच्छब्दश्रवणानन्तरमर्थज्ञानं भवति स संबन्ध इति **सति प्रत्ययहेतुत्वम्** इत्येवोक्तं भवति, अन्यथा शब्दार्थयोः कार्यकारणभाववर्णने निमित्तं नियमेनोक्तं स्यात् ॥ ३७ ॥

सामयिकस्तु संबन्धो न युज्यत इत्याह—

**नित्येऽनित्येऽपि वाच्येऽर्थे पुरुषेण कथंचन ।**
**संबन्धोऽकृतसंबन्धैः शब्दैः कर्तुं न शक्यते ॥ ३८ ॥**

(52) [a]) **नित्ये** तावदर्थे जात्यादौ नित्यशब्दार्थदर्शने वा सर्वस्मिन् पुरुषेणेदंप्रथमतया शब्दस्य सङ्केतः कर्तुं न पार्यते । नित्यत्वादेवेदानीमुपजातस्य पुरुषस्य तत्राव्यापारात् । [b]) पूर्वमपि तस्मादाकाशकालदिगादिशब्दानां नित्यशब्ददर्शने वा ब्रह्मणः शब्दवाच्यत्वात् सर्वेषामर्थसंबन्धादादिपुरुषेणापि कृते शक्त्यनुसारस्य प्रतिपादितत्वात्, आदिसर्गात् प्रभृति च प्रवृत्तौ किमन्यन्नित्यत्वात् स्यात् । [c]) **अनित्येऽप्यर्थे** घटादौ कार्यशब्ददर्शने वा प्रत्यक्षेण सर्वग्रहणायोगाज्जातिद्वारेणापि ग्रहणे जातीनामेकस्मिन्नर्थे भूयसीना संभवे विवेचनानुपपत्तेरनुमानेनापि शब्दाभेदेनार्थस्य प्रतिपत्तेः

---

[b]) AH नार्थविशेषरूपः. C नार्यिविशेपरूपः. D °विशेष्यरूपः. C °रार्थसंबन्धः वे°. ADH तत्रानु°. D °न पूर्वा°. M om. तस्य. C °र्वांमावि°. M °त्रावि°. AH प्रभावनाविनानोदेमात्. C प्रभार्वविचारिताद्. D प्रभावनावितादपि. C °यकत्वापेक्षयादि°. ADH °दित्यर्थः। प्रती°. C °हेतुः स श°. M हेतु श°. D °प्तिकता नु. ADH om. प्राप्तिलक्षण इति. ADH प्रतिलक्षणाद्. C °लक्षण दु°. M °लक्षण इति उप°. [c]) C यदपी. ADH कार्याच्छेद. ACDH om. स (before संबन्धः). AH व्याख्याने. D व्याख्योय. ADH ततः का°. D ins. इत्यर्थः प्रतीतिनियोरिसाद्धि ख्येनेन (after कारणात्). ACDH भवति । संबन्ध. ACDH प्रत्यये हे°. C शब्दाययो. ACDH °वर्णननि°. D कार्यकार्यारण°. C om. निमित्तं. ADH नियमोक्तं.

का. ३८. AH वाह्ये. D काह्येद्वयार्थे. M संबन्धो कृ. D °न्धोऽल्कत.

(52) [a]) D निह्यशब्दाध्येद°. D सर्वेऽस्मिन्; A °णेद भ्रमत°. C °णेदंप्रभया. D °णेद भ्रमत्रया. D पार्यते. M वार्थते. C नित्यत्वांवदे°. [b]) AD °पारात् पूर्वमपि । ADH °दिगादिदशने. M °दर्शनना. ACDH °र्थादि सं°. M सर्वेपाग्रहमसवादि°. D ग्रहपणापि. ACH कृतो. L कृतो. AD अशक्त्य°. A °सारेणास्य. D °नुसादप्यस्य AH आदिशब्दार्थात् प्रभृति. B आदिवर्गात्. C प्रतिसर्गात्. D आदिशब्दागान्. AH प्रकृतवृत्तौ. D प्रकृवृत्तौ. [c]) D कुर्य श°. D वी प्र°. ACDH °ग्रहणयो°. L °ग्रहणम् । यो°. ADH भवे वि°. C भावोऽपि वच°. M °संभवेऽपि व°. C °पत्तं अनु°. D °पत्तरनु. M शब्दानार्थस्य. C °पतेः. D °पत्तः L °र्थासिद्धौ; C पारिशेपा°. AH निरूप्य धियार्थ°. D °प्यधिपमं ACDH क्रियते.

शब्दार्थसिद्धौ तस्यायोगात् पारिशेष्याच्छब्दैरेव निरूप्य विषयं सङ्केतः क्रियेत । [d]) तथा च निरूपकाणामपि शब्दानां सङ्केते सैव वार्तेति तत्रापि शब्दान्तरैर्निरूपणेऽनवस्था, अकृतसमयैर्निरूपणानुपपत्तेरिति सुदूरमपि गत्वा कस्यचिच्छब्दस्य स्वाभाविकी योग्यतैषणीया । तथा चाविशेषात् सर्वेषामपि तत्प्रसङ्ग इति सिद्धः स्वाभाविकः शब्दार्थयोः सम्बन्धः समयवशादभिव्यज्यमानस्वरूपः ॥ ३८ ॥

[e]) इदानीं यन्मतुब्वार्तिके भाष्येऽभिहितम्—

" सम्प्रतिसत्तायां यथा स्याद् भूतभविष्यत्सत्तायां मा भूद् "

( Bhā on P V. 2.94 )

इति, तत्र भूतभविष्यतोः सत्ताव्याख्यानमिषेण प्रकृतं संबन्धनित्यत्वं निर्वाहयितुमाह—

**व्यपदेशे पदार्थानामन्या सत्तौपचारिकी ।**
**सर्वावस्थासु सर्वेषामात्मरूपस्य दर्शिका ॥ ३९ ॥**

( 53 ) [a]) **व्यपदेशे** व्यपदेशनिमित्तं शब्देन प्रत्यायने पदप्रत्याय्यानामर्थानां बाह्यानां वस्तूनां बाह्यविलक्षणा सत्ता बुद्ध्योपचरिता बाह्यार्थसत्ताया हि **अन्या** बुद्धिसमारूढार्थाकाररूपा **सत्ता** । अत **एवौपचारिकी** इयम् । उपचारोऽध्यारोपः प्रयोजनमस्याः **सर्वावस्थासु** इति अतीतानागतास्ववस्थास्वप्यर्थरूपं दर्शयति, तद्रूपेण बुद्ध्याकारस्य प्रतिभासनात् । [b]) एवं चातीतानागतादिशब्दानामप्यर्थसद्भावात्संबन्धनित्यतास्त्येव । विशेषणविशेष्यावस्थायामपीयमेव सत्तार्थानाम् । अन्यथा सदैव विशिष्टस्य निरंशस्य वस्तुनः कथं प्रविवेकः सर्वेषामित्यभावविषयाणां शशविषाणादिशब्दानामप्याकारोल्लेखिनी । तथा हि बुद्ध्या निरूपितवस्तुविषयाः शब्दाः । बुद्धिश्च बहिरसत्यप्यर्थे स्वबीजवासनापरिपाकवशादाकारावग्रहरूपोपजायते वैकल्पिकी । तथैव च शब्दात् प्रतीयत इत्यवधीरितबहिर्गतभावाः शब्दाः बुद्धिप्रतिभासिनमर्थमभिनिविशन्त इत्यलातचक्रशशविषाणादीना-

---

[d]) AH सङ्केतः सैव शक्तिरिति. C नैव वार्त्तेति. D सैव वात्रेति. M वात्तेति. BL वा कर्तेति. ADH शब्दान्ते. C शब्दान्तरे. D निहृयणे. AH प्रकृतस°. C आकृतसङ्केतैः. M अकृतसङ्केतैः. AH निरूपणस्यानु°. D निहयप्यानु°. B °पणीवा. C °शणीया. D सिद्धेः. C om. स्वाभाविकः and संबन्धः. A °भित्यज्य. [e]) A यत्तन्मतुवा°. C °मतुववा°. D यत्रम्मतु°. C °ष्यतान्नयां. ACH प्रकृतसं. C °संवन्धः नि°.

का. ३९. C प्रत्यसन्नोपकारिणी. DI प्रत्यासत्तौप°. C °मात्परू°. B दर्शिता.

( 53 ) [a]) M om. व्यपदेशे. D °देश व्य°. AD °निमित्ते. C शब्दे प्र°. M शब्देन त्या°. M पप्रत्या°. L °प्रत्याप्यासाम°. C बाह्यव°. D बायाना वसूना. M न वा°. D सत्तो. C °र्थसतया. C बुद्धिः सभारूढांतर्याका°. C यत एवौ°. C °स्यासु शब्दार्थस्वरूपं. [b]) °गतादिशिष्टाना°. M °यमेव सत्तार्थम°. C विशिष्टनिरशस्य C अभावविषयणशशाविषाणादिशष्टाना°. M °भावविषयात् शश°. C तथा बु°. M om. तथा हि. C °विषयः शब्दा. C बहिरसतप्यर्थे. B बुद्धिप्रभासिनम°. C °त्यवधारित°. C °व्रतिभाशितम°. M °गतभावाभावाः शब्दबुद्धिप्रति°. C निविशन्ते.

मपि शब्दाना नित्यमर्थैरवियोगात् संबन्धनित्यतासिद्धिः । [c]) सविदुपारोहे हि व्यवहार इति तन्मध्येवार्थस्य सत्ता न्याय्या । प्राक् तु संविदोऽप्रामाणिकत्वात् श्रद्धामात्रगम्या सा । तत्र च प्रहतः सत्ताभिमान इति तदनुरोधेनोपचारसत्तावाचोयुक्तिः । अत एव **व्यपदेश** इति शाब्दे व्यवहार इतीयमपि व्याख्या । तत्र चेयमेव शरणम्, अस्या एव हि अर्थानामात्मलाभ इव शब्दपरामर्शमन्तरेणैषां रूपसंस्पर्शस्याभावात् ॥ ३९ ॥

[d]) एवं चानयैव सत्तया पूरिते व्यवहारे यद्यर्थक्रियाकरणादिना काष्ठतुसप्रायेण केनचिन्निबन्धनेनान्यसत्ता कल्प्यते तद्धर्मिणां सा, न तत्र चिन्तास्माकं व्यवहारे तु तस्या नास्त्यनुप्रवेशः, यदि परमस्यामेव सा प्रतिविंबिता व्यवह्रियत इत्येतत् प्रतिपादयितुं निदर्शनोपक्रममाह—

**स्फटिकादि यथा द्रव्यं भिन्नरूपैरुपाश्रयैः ।**
**स्वशक्तियोगात् संबन्धं ताद्रूप्येणोपगच्छति ॥ ४० ॥**
**तद्वच्छब्दोऽपि सत्तायामस्यां पूर्वं व्यवस्थितः ।**
**धर्मैरुपैति संबन्धमविरोधिविरोधिभिः ॥ ४१ ॥**

(54) [a]) बाह्यस्य वस्तुनो नियतरूपत्वात् भावाभावसाधारण्यानुपपत्तेर्घट इत्युक्तेऽस्ति नास्तीति शब्दान्तरोपधीयमानरूपसंसर्गविरोधः स्यादित्युपचारसत्तासमाविष्टः शब्दार्थः । तथा हि— सर्वसाधारण्यात् पदान्तरोपधीयमानरूपविशेषसहः काचाभ्रस्फटिकादिवत् सोऽर्थ इति यथायथमस्ति नास्ति इति भावाभावसमन्वयवशेन नियतः

---

[c]) B संविदुपरोधे. C तन्मये चार्थस्य सता न्यायं AD तत्सवि° C प्रोक्तु स°. M संविदाप्रा°. C °माणिकः. D °माणिका AH सत्तामात्र°. D सहामा°. L °त्रशम्या. ADH प्रहतस°. C °भिधान. D °रोधोप° C °सत्ता तद्वा° AH सुतरा व्यवहार इति शब्देष्वव्यवहार. C सत एव व्यपदेश इति शब्द व्यव° D सत एवं व्यवहार इति शाब्देष्वव्यवहार. M शास्त्रे व्यव°. C व्याख्याः. M तत्रेयमेव AH °मस्यापि बाह्यार्थानामात्मनाम् C °मस्य एवं वास्वार्थां°. M अस्या एव. C °परमर्श°. D °पवशमर्शमत्रे°. [d]) M च तथैव. C पुरीति. C यद्यपिया. D यद्यक्रि°. ADH °याकार°. AD काष्ठतुसप्राष्ठणकेन. C काचतुस° ADH चिलिवन्धनेना न्यासत्व.त्. C केनाचिन्नवन्धनेन नान्या° AD तद्धिर्यता. C तद्वर्यता सा. A विनास्मा°. D विना स्ता. A तस्यात्रास्त्यनु° C तस्य ना°. D तत्रात्रामस्त्यनुप्रवेशोः न्यदि. C परचस्यामेव सा प्रतिविरचिता. M नीतिरचिता

का. ४०-४१. C भिन्नरूपेतुग°. AD ताद्रूप्यमुपग°. B ताद्रूप्येगेव. L ताद्रूप्येणेव. I एतच्छ°. C सतायाः मस्या. B °स्थितं. IM °स्थिता. DI °न्यो ह्यवि°.

(54) [a]) M वाह्यव°. D नियनरू°. M भावासाधा°. D घेठ इ°. C °क्तेऽति ना°. M °न्तरेपधी° B °मानससर्ग° H om रूप ... पदान्तरोपधीयमान. C सब्दार्थ. D °रोपधाय°. M °सहं. A कालाभ्र°. D काचाभसु. C कावाभ्र°. C °भावसमन्वयेन.

प्रतीयते । [b]) तथा हि— स्वच्छत्वात् स्फटिकादिद्रव्यं नीलादिसंसर्गेऽपरित्यक्तस्वरूपं तद्रूपमिवाभासते । तथा चोपचारसत्तापि स्फटिकमणिस्थानीया तद्रूपमत्यजन्ती प्रतिषेधादिभिरुपधानैरभिसंबध्यमाना ताद्रूप्यमिवायाति, प्रतिषेधाद्यात्मिकेवाभाति । स्वशक्तिरच्छत्वं स्फटिकादेर्नानाकारोपग्रहयोग्यत्वं सत्ताया अपि सर्वविशेषस्वीकारयोग्यत्वम् । सामान्यात्मकत्वात् । [c]) **शब्दोऽपीति,** शब्दार्थः, शब्द्यत इति कृत्वा । यद्वा शब्दोऽस्याः प्रत्यायकत्वेनावस्थितोऽर्थद्वारेण, शब्दान्तरवाच्यैर्धर्मैः सम्बध्यते । **विरोधि**वचनं साकल्यप्रतिपादनार्थम् । **सत्तायामस्याम्** इति, ज्ञानाकाररूपायाम् । **पूर्वम्** इत्याभासावस्थाया पदात् प्रतीत्यवसरे संबन्धं याति । व्यवहारकाले वाक्यावस्थायाम् । **आदि**ग्रहणात् कालाद्यवरोधः । [d]) अविरोधिनो धर्मा भावात्मकाः । ते चोपचारसत्तायामनुगुणाः यथा स्फटिकस्य मल्लिकाकुसुमादय इति न ते रूपतिरस्क्रियाहेतवः । अत एव तत्सन्निधाने तदात्मनोपचारसत्ताया विश्रान्तिः । अविरुद्धा हि बाह्या सत्ता तस्याः पूर्णरूपतया प्रत्यासन्ना । तथा चोच्यते—

"यत्रान्यत् क्रियापदं न श्रूयते तत्रास्तिर्भवन्तीपर ...."

(See Bhā. on P. II. 3.1)

इत्यादि । वर्तमानावस्था च पूर्णत्वोपकारिणीति भवन्तीपर इत्युक्तम् । सत्ता वा विरुद्धधर्मसामान्यमिति यथायथं विशेषैस्तस्या एव परिपूरणम् । [e]) विरोधिनस्तु धर्मा अभावात्मकाः ते हि प्रतिषेधात्मकाः रूपतिरोधानमुपचारसत्ताया जपाकुसुमादय इव स्फटिकस्य कुर्वन्ति । यद्यपि चोपचारसत्तायामुभयेषामपि समन्वयाद्विरोधाभावस्तथापि बाह्यापेक्षयैवैतदुक्तम् । बाह्यस्थ नीलोत्पलादेरभिन्नस्य विशिष्टत्वान्नीलमुत्पलमित्युपचारसत्तायामेव विवेकाद् द्रव्यात्मा गुणसंसर्गभेदादाश्रीयते पृथगित्यादिविशेषणविशेष्यभावे च वक्ष्यमाणा प्रक्रियोपपद्यते ।

---

[b]) C स्वच्छता स्फ°. A °त्यतो वाऽदिसंसर्गो. D नीनादिसंसर्गो. C °सर्गेण. H लीना°. D तद्रूयाम°. M °मितावभा°. ACH सद्रूपम°. D कद्रूपमत्व°. L स्वरूपम°. C °मत्यजाति. C °षेया. ADH °रुपादान°. C °सवन्ध°. ADH °षेधात्मिके°. AH °कारेण ग्रहणय।°. A om. सत्ताया अपि. ACDH सर्वविषये. C °त्मकं त्वाच्छब्दो. [c]) C सर्वार्थः. C षब्द्यत. H शब्दते. D कत्वा. D मद्वा. AC शाब्दो. D त्राब्दो. ACDH ins. स. (after °द्वारेण). C °वाच्यैः स्वधर्मैः. M °धिते प्रवसि. D सावख्याया. C प्रतीत्यनव°. M °हारकव्याच्याव°. A °दिग्रहणे कालाद्य°. C कानावरो°. [d]) C आवि.ोधिः ना. D चोपचार°. C न तै रूप°. AH तत्सनिधीयते. C तत्संवि°. D तत्सानिध्य°. A विश्रान्तिवत्तद्विस°. D °न्तिठअद्वि. M °न्ति। विरु°. ADH तस्य पूर्वरू°. M पूर्णातिकय°. D °त्यासत्रा. C °परं इति. M भवतिपर इति. AD °वस्या वर्णपूर्णत्वापकारिणीति. D rep. इत्यादि-भवन्तीपर. ADH °यथविशेषैस्तस्याः सत्वपरि°. AH कृतविरो°. D कृविरो°. [e]) D °धिनस्त ध°. C आभावा°. C °षेधात्म°. D रूपति°. L °षेधाद्यात्मिकाः. D °मुपत्वादसन्ता°. C °सत्ताया. C जापकु°. D repeats मल्लिकाकुसुमादय ... इव स्फटिकस्य. D °त्तायामुभयेप्या. C बाह्यवस्या नी°. M बाह्यस्य च. C °भिन्नव्य वशीष्ट°. ADH °मेकविवेका. C द्रव्यानुगुणसंसर्गि. D पृथगिभ्या°. ADH प्रतिक्रियो°. C प्रत्यय उप° C विरोधिनिविरो°. B °संबन्धः क्रमेण.

स्फटिकं विमलं द्रव्यैर्यथायुक्तं पृथक् पृथक् ।
नीललोहितपीताद्यैस्तद्वर्णमुपलभ्यते ॥

इत्यपरोऽत्रागमपाठः ॥ ४०–४१ ॥

तमेव विरोध्यविरोधिधर्मसंबन्धं क्रमेण व्याचष्टे ।

**एवं च प्रतिषेध्येषु प्रतिषेधप्रकॢप्तये ।**
**आश्रितेषूपचारेण प्रतिषेधः प्रवर्तते ॥ ४२ ॥**

(55) [a]) बुद्ध्याकारस्य नानाविधधर्मसमन्वययोग्यत्वेऽब्राह्मणादिषु नञर्थोपपत्तिः । तथा हि— सत्ताविरोधान्निषेधायोगान्न ब्राह्मणोऽत्र सन् । असत्त्वे तु कथं तत्र शब्दप्रवृत्तिर्बाह्यशब्दार्थवादिनाम् । तथा च पुनरपि निषेधोऽनुपपन्नः । तदुक्तम्—

सता च न निषेधोऽस्ति सोऽसत्सु च न विद्यते ।
जगत्यनेन न्यायेन नञर्थः प्रलयं गतः ॥

इति । [b]) यदा तूपचारसत्तासमाविष्टः शब्दार्थस्तदा सामान्येन भावाभावसाधारणतया ब्राह्मणशब्देन क्षत्रियादिषु सादृश्याध्यारोपितो ब्राह्मणार्थः समुल्लिखित इति प्रतिषेध्यविषये दर्शिते नेति निषेधः प्रवर्तते । निर्विषयस्य निषेधस्याप्रवृत्तेः । [c]) तत्रापि च बुद्ध्याकारस्य भावैकनियतत्वाद् बुद्धिसत्तयैव सत्त्वान्नास्ति साधारणत्वेन निषेधयोग इति तस्य येयं बहीरूपता व्यावहारिकैर्दृश्यविकल्प्यैकीकारादध्यसिता तत्रैव निषेधः फलति । तथा हि योऽयं ब्राह्मणार्थः स बहिरसन् केवलं भ्रान्त्या क्षत्रियेऽध्यवसित इति स्वाभाविकब्राह्मणार्थनिवृत्तिरत्र नञा द्योत्यते । [d]) तदुक्तं भाष्ये—

" यदि पुनरयं निवृत्तपदार्थको ब्राह्मणशब्दः किमर्थं प्रयुज्यते, एवं यथा विज्ञा-

---

का. ४२. DH °ध्येषु विशेषं च प्र°. D प्रतिव्योःधः प्रवर्तंतो.

(55) [a]) ब्रद्धयाका°. C आ °ब्रा°. ADH यथोपपत्तिः M सतो वि°. L नियोगात्. D om. सन् ... तदुक्तं न. D अथत्वे. AH न सता च नि°. D न तिद्यते. D जगन्यायेन. C न अर्थ. B प्रत्ययं गतः. H प्रनघं. D प्रनयं [b]) L भावान्येन. C ब्राह्मणशक्षे च. D ब्रीत्मण°. M साद्रश्याद्व्या°. B °व्या।ोपः अतो ब्रा°. ADH प्रतिषेधवि°. LM °र्विषयस्य प्रतिषे°. [c]) AH तस्यापि च बुद्ध्याकारभावस्य. D न स्यायिवषद्धया°. C °द्धयाकारेस्य. D °सत्रयैव. ADH सत्ता ना°. D लास्ति. ACDH °णत्वेन योग. BL वहीरूपतया. C बहिरूभता. A °कल्पैराकारा°. C °कल्पात्कारा°. DH °कल्पैकका°. C °रसत्. C भ्रात्या क्षत्रिय. A °विकं ब्रा°. CM °विकी ब्रा°. DH °विका ब्रा°. BCL °र्थस्य नि. D °र्थस्य मि°. A °वृत्तिरेव च द्योत्यते. C नजा द्यो°. D °तरेण च द्यो°. H °रनेन च द्यो. [d]) D मार्ष्ये. H om. भाष्ये ... नेति ह्युक्ते. C पुनरस्य. D पुन इयं. C निवृत्त. C विज्ञायते. D नेनिजह्युक्ते. B सन्देशस्य कस्य. D °क्षयत्त प्र°. AD °प्रकल्पना च प्र°. D दति. D अः वि°. D °धर्मसमूवमुपवासरत्ता. ACDHL °सत्ताविशिष्ट°. C मुखस°.

येत, नेति ह्युक्ते सन्देहः स्यात् कस्य पदार्थो निवर्तेत। ”

( Bhā. on P. II 2.6 )

इति। अत्र सर्वथा निवृत्तपदार्थकत्वे प्रयोग एव न स्यादिति बाह्यार्थापेक्षयैव निवृत्तपदार्थकत्वम्। उपचारसत्तापेक्षया तु प्रयोग इति स्फुटमुक्तं भवति। प्रतिषेधविषयप्रकल्पनार्थं च प्रयोग इति तदेवोपचारफलम्॥ ४२॥

अविरोधिधर्मसंबन्धमुपचारसत्तासमाविष्टस्यैव प्रतिपादयितुं मुख्यसत्ताया तावदसंभवमाह—

**आत्मलाभस्य जन्माख्या सत्ता लभ्यं च लभ्यते।**
**यदि सज्जायते कस्मादथासज्जायते कथम्॥ ४३॥**

( 56 ) [a]) आत्मलाभो वस्तुनः स्वरूपप्राप्तिः जन्म कथ्यते। तत्र च त्रितयमन्वयि, लब्धा कर्ता, लभ्यं कर्म, लाभश्च क्रिया। एतच्च त्रितयं सद्विषयम्। तथा च जन्मविरोधः सत् आत्मलाभायोगात्। लब्धात्मा हि सन्नुच्यते। कारणे शक्तिरूपतयावस्थानेऽपि सर्वथासतो जन्मायोगादवश्यमपूर्वस्य कस्यचिदंशस्य लाभोऽभ्युपगन्तव्य इति येन रूपेण सन्न तेन रूपेण जन्म येन च जन्म न तेन सन्निति जायतेऽङ्कुर इति प्रयोगानुपपत्तिः। [b]) जन्मानुरोधादसत्त्वाभ्युपगमे धात्वर्थे कर्तृत्वानुपपत्तेः प्रत्ययार्थविरोधः। तदनुरोधात्सत्त्वाभ्युपगमे जन्मलक्षणधात्वर्थविरोध इत्यर्थः॥ ४३॥

अत्रैवार्थे सदृशं दृष्टान्तमाह—

**सतो हि गन्तुर्गमनं सति गम्ये प्रवर्तते।**
**गन्तृवच्चेन्न जन्मार्थो न चेत्तद्वन्न जायते॥ ४४॥**

( 57 ) स्वरूपप्रसरणलक्षणा गमिक्रिया जनिक्रियासदृशी। तत्र च **सत** एव गमनं **गन्तुर्**दृश्यते व्यतिरिक्तसद्रूपकर्मविषयम्। एवमिहापि प्रादुर्भवितुः गन्तृवत् जन्मानुपपत्तिः। अथ जन्मानुरोधस्तदा सत्त्वाज्जायते क इति कर्तृत्वायोगः। गम्यवच्च लब्धव्योऽप्यत्र व्यतिरिक्तो नास्तीति बाह्यशब्दार्थाभ्युपगमेऽनुपपत्तिः॥ ४४॥

---

का. ४३. C आत्मल्या°. AH लभ्या च. D °द्यासज्जा°.

(56) [a]) ADH वस्तुनः स्व°. C ins. तल्लभ्येते यदि ( after कथ्यते ). C om. च. D ins. त्रि च ( before त्रितयं ). C लब्वा. D लद्धा. L लब्धं. C कर्त. D कर्ता. A om. सद्विषयम्. ADH स उच्यते. M कारणे हि. ADH सर्वथा जन्मनो C यन्मा. ADH om. अपूर्वस्य, °श्यपूर्वस्य. ACDH रूपेण सत्. ACDH न तेनासत्. D अङ्कुरित. [b]) जन्मवि°. D प्रत्ययाथे. C सताभ्युप°. L इत्यत्रार्थः.

का. ४४. C मध्ये प्र°. D प्रवर्तते. C गन्तुवच्चन्न. D गन्तृववेनं. D त चेन्नद्वन्न°.

(57) ACDH स्वरूपप्रसारणलक्षणा ग°. C व्यतिरिक्तं सद्रूपं. C °हामि. ADH भवितृ. गन्तृं°. B °वितुः शतृवत्. C °भवितृवत्. M सत्वेन B अद्य ज°. C रोधेस्त. D कर्मविषयेक. A °व्योऽप्यन्वयव्य°. D °व्याप्यन्वव्य.

उपचारसत्ताश्रयेण तूपपत्तिरित्याह—

**उपचर्य तु कर्तारमभिधानप्रवृत्तये ।**
**पुनश्च कर्मभावेन तां क्रियां च तदाश्रयाम् ॥ ४५ ॥**
**अथोपचारसत्तैवं विधेयास्तत्र लादयः ।**
**जन्मना तु विरोधित्वात् मुख्या सत्ता न विद्यते ॥ ४६ ॥**

(58) [a]) तुशब्दो बाह्यसत्ताया विशेषमुपचारसत्तायाः सर्वसहत्वेन द्योतयति । इह सर्वात्मना परिनिष्ठितं जायत इति न व्यपदिश्यते । नापि सर्वात्मनासद्रूपम्, अपि तु सदसद्रूपमाश्रितपूर्वापरावस्थं सत्तासादनोन्मुखं वस्तु जायतेशब्दविषयः । [b]) तथा च तत्रोत्तरमसद्रूपमवस्थाविशेषं पूर्वावस्थाया कारणानां कार्योन्मुख्यलक्षणायाम् **उपचर्य** अङ्कुर इत्यभिधानस्य प्रवृत्तौ जायत इति कर्तृत्वोपपत्तिः । आश्रितपूर्वावस्थत्वाच्च जन्मार्थोपपत्तिः । एवं च कृत्वाश्रितपूर्वावस्थ उपचरितोत्तरावस्थश्च संमूर्च्छितोऽर्थात्मा जायत इत्यभिधानस्य विषयः । [c]) पूर्वावस्थाश्रयणाच्च लभ्यत्वेन कर्तैवोपचरितः कर्म नान्यदिति बुद्ध्या विवेचनमिदमाश्रित्य **तदाश्रयाम्** तयोः साधनयोः कर्तृकर्मणोराश्रयमास्पदं क्रियापेक्षत्वात् साधनभावस्य तन्निबन्धनम्, ते वा कर्तृकर्मणी आश्रयो यस्याः साधनाधीनजन्मत्वादित्युभयथापि पाठः । **ताम्** जनिक्रिया पूर्वापरीभूतावयवसमाहारात्मिकामध्यारोप्य जायतेऽङ्कुर इति प्रयोगसमर्थनम् । [d]) अथ इत्यभ्युपगमद्योतनाय । एवं च सत्युपचारसत्तैवमाश्रिता भवति । तथा च तत्रैव कर्तर्ययं जायत इति लकारो जात इति च क्तः, जातवानिति च क्तवतुः, जन्माङ्कुरस्येति षष्ठी । यद्वा कर्तृकल्पनया लकारः कर्तरि

का. ४५. C तदाश्रयम्.

का. ४६. C °सत्तैव. C °यास्त्वतला°. D विधेयत्र ला°. D नु.

(58) [a]) C शब्दो ह्यसत्ताया. D त शब्दो. ADH बाह्यसत्ताद्यो. ADH सर्वसत्वेन. A ins. संबन्ध (before द्योत°). C ins. सजन्मन्यो. D ins. संबन्धे. C om. न (before व्यप°). D °दिश्यतो. D सर्वात्मना. ADH om. अपि तु सदसद्रूप-. C °धर्मपरावस्थं. AH °दनोन्मुखे. CM °विषय. HL °विषया. [b]) C शब्दोन्तर°. D °विशेषः. ADH पूर्वावस्थाकार°. C वस्थानका°. ADH कार्योन्मुख. C अश्रित° D °वस्थायाच्च. C जन्मर्थोपपत्तिः. B om. एव च कत्वा. H °त्तरावस्था च. ADH °च्छितार्थात्मा. [c]) D rep. त्वाच्च जन्मा° ...पूर्वावस्था. AH °श्रयणावलभ्य°. C °णात्वाल्ल°. D °णाचनभ्या°. ADH °चनमाश्रि°; A तदाश्रयतया साधन°. C °श्राय तयोः. M °श्रयतयोः सा°. L °श्रय तयोः M °राश्रयः पद. ADH तेनाकर्तृकर्मणी. M तत्र कर्तृ°. ACDH °थापि पाठे. D जनिक्रिणं. DH °ङ्कुरत इति. C °र्थने. D °र्थनं. [d]) D ins. अभ्यापि जनितां जनिकृत्य (before अभ्युपगम°). BLM om. च. C तथैव. M om. तत्रैव. D कर्तव्ययं. C लकारो. ADH जायत इति. A चोक्तम्. C इति कः. C जातवानीति D °वातीति. CM om. च (before °क्तवतुः). C क्रियाकल्पनाया. L धातु प्र°. BLM कर्मकर्तत्वस्या°. AH वाक्यमङ्कुर°. C °क्येकर°. D °कांकुर. B विभ्रदेऽस्ति. ACDH °त्तेति निबन्ध°. M °देवसदेन. ADH ins. पूर्वोक्तादिविधा. CM °दत्र न सं°.

प्रत्ययः, क्रियाकल्पनया धातुः प्रकृतिः, कर्मकल्पनया कर्मकर्तृव्याख्याने वाक्येऽङ्कुर आत्मानं लभत इति द्वितीया कर्मणि। एवमात्मानमात्मना बिभ्रदस्तीत्यादावपि वाच्यम्। एवंविधो वा सर्वः परिकर उपचारसत्तेति तन्निबन्धनत्वादेवमभेदेन व्यपदेशः। [e]) मुख्या तु सत्ता पूर्वोक्ताद्विरोधान्न संगच्छते। अतः

आत्मलाभस्य जन्माख्या

इति पूर्वपक्षोऽयम्। सिद्धान्त आत्मलाभोन्मुखता जन्म। तथा च वक्ष्यति—

पूर्वस्मात् प्रच्युता धर्मादप्राप्ता चोत्तरं पदम्।
तदन्तराले भेदानामाश्रयाज्जन्म कथ्यते॥

इति। तथा—

पूर्वामवस्थामजहत् संस्पृशन् धर्ममुत्तरम्।
सम्मूर्छित इवार्थात्मा जायमानोऽभिधीयते।

इति। पुनश्च कर्मभावेन 'तम्' इति क्वचित् पाठः। तत्र तं कर्तारमेव पुनः कर्मभावेनोपचर्येति योजना॥ ४५, ४६॥

इदानीं जन्मोत्तरकालभाविनमस्तित्वं भावविकारमङ्कुरोऽयमस्तीत्ययंशब्द उपचारसत्तासमाविष्टमेव प्रतिपादयति, अन्यथायोगादित्याह।

**आत्मानमात्मना बिभ्रदस्तीति व्यपदिश्यते।**
**अन्तर्भावाच्च तेनासौ कर्मणा न सकर्मकः॥ ४७॥**

(59) [a]) **आत्मनात्मानं** धारयतीत्यस्तेरर्थः। तथा च निरुक्तकारः।

"अस्तीत्युत्पन्नस्यात्मधारणमुच्यते"

इति। व्यतिरिक्तकर्तृप्रतिषेधार्थम् **आत्मना** इति वचनम्। तथा च वास्तवस्य कर्तृकर्मक्रियाभेदस्याभावो भिन्नरूपत्वाद्वस्तुन इत्यर्थः। आत्मना सकर्मकत्वात्तर्ह्यस्तेः प्रसिद्धमकर्म-

---

[e]) B अतश्चात्म°. AH °पूर्वपक्षीयसि°. D °पूर्वपत्तोप°. BC °स्त्वात्म°. C °त्मनामो°. BH °च्युताद्धर्मा°. C °राले धर्मासामामा. M °श्रय कथ्यते. AD यथा. C °स्थानविज°. DH °मविज°. M °स्थापिज°. AH °कालभावितय°. D °कालाराविनम°. M °भाविनाम°. AH भावविवशम°. D भावविभरम°. AH अङ्कुरोऽस्ती°. C °अङ्कुरेशा°. D अङ्कुगरिरो. C °गायोग्यावित्याह. D °गोगादित्याह.

का. ४७. D व्ययदि°. C अन्तर्भावच्च. D अन्तर्भावा च.

(59) [a]) M आत्मानं धा° D om. र्थः तथा च नि. C निरक्ताकारः D रुक्तक. L अस्त्युत्प°. C ins. ना ( before इति ). C °रेक्तत्र्तृ प्र°. D °कर्त. M °षेधर्मा°. C वास्तवव्यक°. M °स्याभावो. ADH प्रतिषिद्धकर्मत्व°. AH °पावृत्तमित्यत्राह°. M. °मवाचकते°.

कत्वमपावर्तेतेत्यत्राह—**अन्तर्भावाद्** इत्यादि। [b]) **असौ** इत्यसिधातुस्तदर्थो वा। धात्वर्थेन कर्मण उपसंग्रहादकर्मकोऽयं धात्वर्थ इति प्रसङ्गाद् व्युत्पादयति। जीवताविव प्राणानामप्यात्मलक्षणस्य कर्मणो धातुवाच्यत्वात्क्रियान्तरमेवेदमात्मनात्मानं धारयतीति व्याख्यायते, न त्वत्र भावत: कर्मयोग इत्यर्थ:। यथा वक्ष्यति "न तत्र धारिणे प्राणा जीवतिस्तु क्रियान्तरम्" इति। [c]) एवं जायत इत्यत्राप्यात्मानं लभत इत्यर्थनिर्वचनेऽन्तर्भूतकर्मत्वं द्रष्टव्यम्। यो हि धात्वर्थाद्बहिर्भूत: कर्मार्थ: स सकर्मकव्यपदेशहेतु:। [d]) धातोरर्थपूरणे हि संपन्ने तस्माद् बाह्यस्य तेनार्थेन संबन्धे भेदाधिष्ठाने सति या कर्मता गामानयेति शाब्दी प्रविश पिण्डीमित्यादौ च सामर्थ्यलब्धा सा सकर्मकव्यपदेशनिबन्धनम्। इह तु क्रियाकारकसंसर्गपर्यन्तो दीर्घो धात्वर्थ इति भेदाभाव: ॥ ४८ ॥ [e])

एवं भेदाभावान्नायं वस्तुतो व्यवहारो युज्यत इति प्रतिपाद्याधुना जायत इतिवत् कर्तृत्वायोगात् स्वरूपाभावादप्यसंभवमुक्तोपचारसत्तायामेवोपपत्तिं प्रतिपादयति—

**प्राक् च सत्ताभिसंबन्धान्मुख्या सत्ता कथं भवेत्।**
**असंश्च नास्तेः कर्ता स्यादुपचारस्तु पूर्ववत् ॥ ४८ ॥**

(60) [a]) अस्तीति पूर्वापरीभूता सत्ता साध्यमानावस्था प्रतीयते। अस्यां चावस्थायां निष्पन्नरूप: कर्ता नास्ति, साधनसंबन्धात्पूर्वमपि सद्भावो नास्ति। न चान्यस्तद्व्यतिरिक्तोऽर्थ: साधनमत्र प्रज्ञायते इति सैव सत्ता साध्यं च साधनं च मुख्यतो न संभवति। [b]) तथा हि सिद्धरूपेण साधनेन भवितव्यम्। न च सत्तामनु-

[b]) C °सिद्धात्तुस्त°. D °सिद्धर्थनु:. M om. धातुस्तदर्थो वा. ADH कर्मणा. C °ऽयं धात्वर्थ. AH जीवतावपि. C जीवतापि. D जीवतावि. M जीवता च. C प्राणंनाम°. M °मप्यत्रात्म. B °मप्यत्यात्म°. D °लक्षणस. D कर्मणा. M नियमान्तरमेवे° A °दमात्मानं धा°. AD तत्र भा°. C तथात्र. H ततोऽन्यत्र. M न तत्र. ADH धारिणि प्रा°. B जातिर्न प्रा°. C ध रिणी. M धारिण:. H जीवितिस्तु. [c]) ADH इत्यर्थः। निर्वचनेन. C °र्थवचनेन. AH भूतत्वकर्मत्वं. C °र्थाबहिर्भूतः ADH स कर्मव्य. M सत्वकव्य. [d]) D संयंने. ADH °न्नेऽस्माद्. ADH °स्य तेन सं. ADH संबन्धभे°. C °दाधिष्ठते. AH शब्दात्. D शब्दान्. M °लभ्या. ACDH om. च. C संबन्धा संसर्ग. D °र्गपर्वतो. D दीर्घी. [e]) AH भेदाभात् अयं. AH कर्तृयो°. C कर्तृत्वादभावादप्यसं. D कर्तयिगा°. A °भावादसमुक्तोप°. D °वादुथसंवमुत्कोप°. C °पपत्ति.

का. ४८. CD प्राक् सत्ता°. D दने कर्ता°. D कर्ता द्रव्या. D सर्ववंत्.

(60) [a]) ACDH om. सत्ता. M सत्त सा°. ADH अन्यस्या. D चावख्यापी. B °रूपं. C साधनं स°. D साद्धा°. C नास्ती. L °संबन्धार्यपू°. B सद्भावे. B चान्यकर्मस्तद्व्य. ADH साधनमात्र. AH °त्रतज्ञापन. ADH om. साधनं. CM साधनतया प्र°. M न साध्यते. C बुद्धा. AD °परीभूतये°. M °तयैवम°. D तत्रा. ADH अपरस्तु. C °रस्तुः. L तदवास्तु. BL °साध्यकर्म. AH °कर्मत्युभ°. C °र्मतनुभावाश्रायक्रियातरभूत°. D °मेतद्र भया. L °र्मतनुभया°. M °र्मतनुर्भया. AH °न्तर्भावपूर्व जा°. ADH °रसत्तायाः. C °न्नित्य प्र°. [b]) D rep. तदेवं. D नास्त. M प्रयोगत्रस्वरूपचार°. ACDH एते च. M एते त्रयो. CD

भवन्नेव सिद्धतया प्रज्ञायते, अनुभूतसत्तासंबन्धश्च न साध्य इति लब्धात्मलाभस्यात्मधारणलक्षणा सत्ता बुद्ध्या पूर्वापरीभूततयैवाभिधीयते। तत्र चोपचारसत्तारूढस्य पूर्वभागः कर्ता तदपरस्तु साध्यः कर्म, तदुभयाश्रयक्रियास्वरूपान्तर्भूतमिति पूर्वं जायत इतिवदुपचारसत्तया कर्तृत्वमाश्रित्यास्तीति प्रयोगोपपत्तिः। [c]) तदेवमस्ति, नास्ति, जायत इति प्रयोगमुपचारसत्तासमाश्रयणेन समर्थितम्। एत एव त्रयो भावविकाराः। एतेष्वेव चान्ये त्रयोऽन्तर्भवन्ति। तथा हि, जन्मनि वृद्धिरवयवोपचयात्मिकान्तर्भूतेति जायत इतिवद् वर्धत इत्ययमपि प्रयोगः समर्थनीयः। एवं परिणामो धर्मान्तराविर्भावलक्षणोऽत्रैवान्तर्भूत इति परिणमत इत्यनेनैव न्यायेनावगन्तव्यम्। [c]) परिक्षयस्तु नास्तीति विनाशेऽन्तर्भवति, तत्राप्युपचारसत्ताश्रयेण परिक्षीयत इति प्रयोगः समर्थनीय इति षड्भावविकारयोनित्वात्सर्वस्य क्रियाप्रपञ्चस्य बौद्धसत्ताश्रयेण प्रयोगः॥ ४८॥

क्रियाभिः साधनानामाक्षेपात्तद्वाचिनामपि तथैव प्रयोग इति सार्वत्रिकीमुपचारसत्तायाः शब्दार्थत्वे व्याप्तिं निगमयितुमाह—

तस्माद्भिन्नेषु धर्मेषु विरोधिष्वविरोधिनीम्।
विरोधिख्यापनायैव शब्दैस्तैस्तैरुपाश्रिताम्॥ ४९॥

अभिन्नकालामर्थेषु भिन्नकालेष्ववस्थिताम्।
प्रवृत्तिहेतुं सर्वेषां शब्दानामौपचारिकीम्॥ ५०॥

एतां सत्तां पदार्थो हि न कश्चिदतिवर्तते।
सा च सम्प्रतिसत्तायाः पृथग्भाष्ये निदर्शिता॥ ५१॥

(61) [a]) बाह्यो येषां विरोधो भावादीनां धर्माणां तैरुपचारसत्ताया अविरोधो यथोक्तेन न्यायेन। अत एवाह— '**विरोधिख्यापनायैव**' इति। विरोधिनां

°न्तर्भवति. D °यवोएचया°. ACH ins. पूर्वं before जायते. A वद्वर्धते. C °मथि. H om. वर्धते ... न्तर्भूत इति M विपरिणामो D °राविभाव. C °लक्षणोऽन्तर्भूत. M °त्रैभूत. CM विपरिणमते. D °णमत त्र्यनेनैव. M °त्यप्यने°. ADH ins. प्रयोग इति सार्वत्रिक (after न्यायेन. [c]) C °न्तर्भवंते. C समर्थननयिः. AH वस्तुसत्ताश्रयेण. D वधसत्ता°. D प्रयोगागः. D तद्वार्विनामपि. D न व्यैव प्र°. C सावित्रिक M °र्थत्वाच्च व्या°. D निरामनयितुमाह.

का. ४९. C ख्यायनायैव. C °पाश्रितम्. BH °रपाश्रि°.

का. ५०. °त्रंकालमर्थे°. D °नानौपचा°. C °चारीकिम्.

का. ५१. एता स°. D यना सभां. C पथौंदा. D आसवं च. D °याः ष्टत्ता°. C प्रदर्शिता.

(61) [a]) BM ह्येषां. ADH भावना. M नावादी°. ACDH यथोक्तन्या°. AH अन्तरङ्गाकाक्षा वि°. L °नायेवेपि. C °धिना. C प्रकाशिनाय. H om प्रकाशनाय. ADH °गृहीता, CL °दिश्यते. M °दशते. AH धर्मवा°. L om. धर्मा. D °नोभिन्ना.

प्रकाशनाय तैस्तैर्वाक्षणादिशब्दैरुपगृहीताम् । एतैर्हि शब्दैर्विनय उपदर्श्यन्ते धर्माणाम्। ते च धर्मा बाह्याद्वस्तुनो भिन्नाः, शब्देनैव भेदस्य परिकल्पनात् । b) नीलोत्पलादौ विरोधिनो वा भिन्नाद् वर्तमानाद्वस्तुनोऽतीतानागतादयः वीप्सया विशेषणविशेष्यभावविषयनीलोत्पलादिशब्दैरपि **उपाश्रिताम्** इत्याह । तत्रापि प्रविभज्य मेलनमुपचारसत्तायां युज्यते । अन्यथा संसृष्टे वस्तुनि नेयं कल्पना घटत इत्युक्तम् । अतीतानागतकालव्यापित्वाच्च नियतकालेष्वपि बाह्येष्वर्थेष्वियमभिन्नकाला सार्वत्रिकी । c) अत एव सर्वेषामपि शब्दानां प्रवृत्तिहेतुरियम् । चैत्रोऽभूद् भविष्यतीति बुद्ध्यार्थं निरूप्य तत्र शब्दप्रवृत्तेः, अनिरूपितेऽर्थे तदयोगात् । तथा हि विद्यमानोऽपि वर्तमानकालिकोऽर्थो यावद् बुद्ध्या नावधृतस्तावदविषयः शब्दानामिति सर्वत्रोपचारसत्तारूढ एव शब्दार्थ इत्युक्तं भवति । d) क्रियाकारकभावेनापि चार्थाना निरूपणं बौद्धमेव । तथा हि—भाव्यमानत्वादेव क्रिया सम्प्रति नास्ति, तदभावात्तदपेक्षं साधनत्वमपि कुत इति आख्यातशब्दस्य क्रियावाचिनः सुबन्तस्य च कारकवाचिनः सर्वस्यैव बुद्धिपरिगृहीत उपचारसत्तासमाविष्टो वाच्योऽर्थोऽवतिष्ठत इति सर्वेषा व्याप्तिसिद्धिः । e) अभावस्य च ज्ञायमानत्वेन सत्त्वादेतामुपचारसत्तां सर्व एव पदार्थो नातिक्रामतीति सर्वेषामेव तद्विषयत्वादभावादिशब्दानामप्यर्थेन नित्याविद्योगः सिद्धः । अस्याश्चोपचारसत्ताया न निर्मूलत्वमपि तु भाष्यकाराभ्युपगतत्वमेव । मतुब्वार्तिके न सत्तां पदार्थो व्यभिचरतीत्यस्तिशब्दार्थाक्षेपे तत्समर्थनाय सम्प्रतिसत्तायां यथा स्याद् भूतभविष्यत्सत्तायां मा भूत् गावोऽस्यासन्; गावोऽस्य भवितारः ।

इति भाष्यवचनादुपचारसत्तास्तीति गम्यते । f) प्रमाणभूतत्वादस्य वचनस्य । न हि भूता भविष्यन्ती वा काचित् सत्ता या अस्तीत्यनेन विचार्येत । भूतभविष्यतोर-

b) A ins. विरोधाधान (before विरोधिनो) B पा (for वा). ACDH भिन्ना. M ins. धर्मा (before वर्त°). C वस्तुमानात् वर्मतो M °नावस्तु°. D वस्तुनो. D नावानाग°. A om. वीप्सया. D न प्रापि. D मेनवमुप°. D °सत्वाया. AH संसक्तव°. D संसस्तव°. A °कालव्याप्त° C सार्वत्रीकि. c) A °तुरयं. C ins. मौप (before चैत्रो). C अद्भुत. D निनुद्धया°. AH °त्तरर्थेऽनिरूपितेऽर्थे. D om. ऽनिरूपितेर्थे. B तथापि ADH ins. वर्तमानोऽपि (before वर्तमानका)लि– ADH °नकालोऽपिलोऽर्थो. C नाधृत°. D नावधनस्ता. ACDH °दविषयः। शब्दा°. L °सत्तारूप एव° d) ADH क्रियाकारणभाव इत्यपि चार्थाना. D द्वौद्वयमेव D तदाभा°. D °नत्वमति कु°. H °त्वमिति D सवतस्य. C कारकेवा°. C °विष्टा वाच्यर्थो. D °विष्टौ वा° ACDHM सर्वेषामिति व्या°, e) BM अभावस्यापि च. ACDH ज्ञायमा°. ACDH सर्व एव. ACDH पदार्थो. ACDH °कामन्तीति. ADH °मप्यर्थं नित्यमपि (अ) वियोगसिद्धिः. C °गतत्वेनमेव AD मतुबा° AH °क्षिप्तमर्थनाय. D भावोऽस्य भ°. f) C भवोष्यातीति. D °विष्यत्री D क्याचित्. AH निवार्येत. C चार्येति. B निचार्यत. M °नानिवर्तत. AH °व्यदुपाल्यस्त्वान्न. D व्रतम°. D ह्यचि°. A प्रगुणकारकासांमुख्यात्. D °रभेसणुख्यने. AH °वर्तं व्यर्थे. C °दाशार्थ. ADH वाक्यसत्ताप°.

प्यनुपाख्यत्वान्न काचिन्मुख्या सता। अतीतस्यानुभूतत्वादनागतस्य प्रगुणकारणसांमुख्येन बुद्धया तु परामर्शे प्रत्ययपरिनिर्न्यिर्ये शब्दप्रयोग इत्युपचारसत्ता भूतभविष्यतोरुपपद्यते। तथा च तद्व्युदासाय बाह्यसत्तापरिग्रहार्थमस्तीति विशेषणं युक्तम्। [g]) बाह्या हि सत्ता सम्प्रति वर्तमाने काले भवतीत्यन्या, ततो भूतभविष्यतोः प्रत्ययात्मना सत्तेयम्। यद्यपि वर्तमानावस्थास्यापि बाह्यस्य प्रतीतिग्राह्यत्वेनैव व्यवहार्या सत्ता तथापि सैव बहिरपि भावादस्तीत्यनेन विशेषणेन विवक्षितवर्तमानकालेन गृह्यते। प्रतीतिमात्रशरणा त्वितरा व्युदस्यते। तदेवमुपचारसत्तायां समर्पितस्वभावानां बाह्यानामेवार्थानामतीतादिभावेन प्रत्यायनाद्यथार्थ एव शाब्दो व्यवहार इति संबन्धनित्यत्वमुपपादितम्॥ ४९,५०,५१॥

[h]) इदानीं सर्वस्यैव शाब्दस्य व्यवहारस्य यथातत्त्वमप्रवृत्तेर्विप्लुतत्वे गवादिशब्दानामविचारसिद्धार्थवत्ताभ्युपगन्तव्या। तथा च सत्यतीताद्यभावविषयाणामपि शब्दानां भावाभिमतवस्तुविषयैर्घटादिशब्दैः तुल्यतां प्रतिपादयितुमुपक्रमते—

**प्रदेशस्यैकदेशं वा परतो वा निरूपणम्।**
**विपर्ययमभावं वा व्यवहारोऽनुवर्तते॥ ५२॥**

(62) [a]) इह शाब्दो व्यवहारोऽयथातत्त्वं प्रवृत्तोऽर्वाग्दृशाम्। तथा हि पूर्णस्य तत्त्वस्य साक्षाच्छब्दैः स्प्रष्टुमशक्यत्वादविद्यापरिकल्पितप्रतिनियतघटादिप्रदेशगतः शाब्दो व्यवहारः। प्रदेशशब्देन घटादेर्ब्रह्मैकदेशत्वादभिधानं कृत्स्नार्थपरिग्रहासामर्थ्यं शब्दानां प्रतिपादयितुम्। [b]) तत्रापि च मात्राकलापात्मको न प्रदेशः समस्तः शब्देनाभिधीयते अपि तु तदेकदेशः। घटशब्देन हि घटत्वजातिरुच्यते। तत्रैव रक्तशब्देन गुणः। एवं शब्दान्तरैरपि प्रतिनियतभावाभिधानमुदाहार्यम्। परेण जात्यादिना च

---

[g]) ADH बाह्यादिस°. M बाह्यति°. M संगतिमानकाले. C °तोत्मना. D प्रत्ययोत्मना सत्रेयम्. M अप्यवर्त°. M °मानार्थस्यापि ADH °स्याद्यापि. C °ग्राह्यत्वेन. CM °हारसत्ता. L °हार्यसत्ता. ADH बहिरभा°. C बहिर्भा°. CM °क्षिता वर्त°. ADH °शरणान्वितं तद्व्यु°. C °चारसन्ताया. D °सत्राया. C °पिंतस्यभा°. ADH °यशाद्यर्थ एव. CD शब्दो व्य°. [h]) M °तत्त्व प्र°. M °नपिचार°. B °द्धार्थपत्त्या. ADH सत्तातीता. C °सुपक्रम्यते. D °क्रमहे.

का. ५२. D निरूपणाम्. C यभावो वा. M °र्ययमभाव वा.

(62) [a]) DM शब्दो व्य. ACDH यथातत्त्वमप्रवृत्तो. C °वृत्तौ प्रावृ°. M °वृत्तेर्वा°. L पूर्वस्य त°. AH °ब्दैर्द्रष्टु°. C शब्दस्प्रदेस्प्रष्टु°. D °च्छाब्दे. C °वृतिनि°. D °नियतः घटादिः. D °गता शा°. D कृत्स्नार्थ°. C प्रतिदेत°. [b]) AH °कालात्मनको. C °कालायात्मको. D °कलायात्मको. CD समँस्त. AH °देशघट°. B °शब्देन वि. C घत्वजा°. C प्रणः. C शब्दोन्तर°. B नियमाविधा°. M °तभावा°. D °दाहार्ये. AH °दिभावनिरू°. D जाह्यादिभावनि°.

**निरूपणम्** । [c]) संसर्गदर्शने स्वतो गौर्न गौः, गोत्वाभिसंबन्धाद्गौरिति ब्रह्मकल्पं साक्षाद्व्यवहार्यमेव द्रव्यं परोपधीयमानरूपविशेषं व्यवहारमनुपतति । तत्र विपर्ययोऽभिन्नस्य ब्रह्मणो नानोपाधिवशेन भेदः । [d]) विज्ञाननये वा बहीरूपस्य बहीरूपतया भानं विपरीतख्यातिः । **अभावः** शून्यवादिमते व्यावहारिकः, बाह्यस्य सर्वथैव निषेधात् विज्ञानमात्रस्याकारनानात्वायोगादसदेवेदं गन्धर्वनगरतुल्यमाभासत इत्यसत्ख्यातिः । ब्रह्मण एव वा सत्यस्य वाक्पथातीतत्वादविद्यायामसदेवेदं भेदजातं शब्दविषयम् । [e]) तदेषु चतुर्षु दर्शनेषु शब्दानामर्थसंबन्धो न भाविकः । तथा हि—आद्ये दर्शनेऽर्थोऽस्ति गवादिशब्दानाम्, तत्रोपपद्यते संबन्धो यदि सोऽर्थभागो ज्ञानस्य गोचरीभवेत् । न च भवति, विवेकेनानवधारणात् । अतीन्द्रिया अपि चान्ये धर्मा अभ्युपेयन्ते । अतोऽत्रापि न संपूर्णोऽर्थसंबन्धः । इतरेषु पक्षेष्वर्थाभावादेव संबन्धासिद्धिः । [f]) तथा हि **परतो निरूपणे**ऽऽधीयमानरूपमेव नीरूपं निरूप्यतेऽभिधीयते चेति न सत्यवस्तुविषयः संबन्धः । एवं विपर्ययाभावपक्षयोरपि वाच्यम् ॥ ५२ ॥

एतदेव दृष्टान्तेन साधयति—

**यथेन्द्रियस्य वैगुण्यात् सत्ताध्यारोपवानिव ।**
**जायते प्रत्ययोऽर्थेभ्यस्तथैवोद्देशजा मतिः ॥ ५३ ॥**

(63) [a]) तिमिरोपहतनयनश्चन्द्रमेकमप्यनेकं पश्यति । कामली च शुक्लमपि पीतं शङ्खमिति । इन्द्रियदोषादाकारान्तरारूपितार्थविभासी **प्रत्ययोऽर्थेभ्यो जायते ।** [b])

---

[c]) C गौरिति. C rep. रूपविशेष. D °पपवह्नीरमनयनविपयं गोत्वादिसंवन्धाद्गौरिति ब्रह्मकल्पं साक्ष्यदः व्यवहार्यमेव द्रव्यं परोपन (before अनुपतति). C °भवतीति वि°. M °भवति. AH विपययोर्भि°. D विपयय मोभिनस्य. [d]) A श्रवणीभूतस्य वहीरूपस्य व°. C अव्यवहार्यस्य. D अवर्गरूपस्य वहीरूपस्य व° C माने. AD भानविपरीताख्यात्तिभावः । शू°. C °शून्यावा°. ACDH °रिकवाह्यस्य स°. A °भावस्यमाकारन्यतात्वयो°. C °कारान्यतान्वययो°. D °मावश्यवाकारन्यतात्वयो°. ADH °दसवेद. H वासत्यस्य. L स तस्य. C °या अगतभेदं भे°. D अगदेतेदंमं° ADHM °विपयः. [e]) ADH नदेषु वपुर्षु. C तदेव. D सावाधो. C °विकं. L तथाप्यादो. C आद्ये C मंतत्रो. C om. सवन्धो (and has शब्दाना instead). ADH अर्थभावाद् (for अर्थभागो) ADH om. ज्ञानगोचरीभवेत् ... अर्थाभावाद्. C °कानवधा°. C °न्द्रियायपि. L अन्येऽअधर्मा. M rep अतीन्द्रिया. B °र्णोऽत्रस°. M °र्णार्थः संवन्धः. f) ADH °णे धीयमान°. ADH om नारूप. C निरूपनीरूप्यते अभो. ADH °ति असत्य व°. D °य सवन्ध. D °भावापतयो°. M °र्यवभाव°.

का. ५३. D तथे°. BL मात्राध्या°. D माशध्या°. DH °वानपि. M ध्यारोपवा. B °यार्थेभ्यः B मतिम् ।

(63) [a]) ACDH °कमनेक ADH कामिलो ADH °मपीतं शङ्खं पीतमिति ADH °न्तररूपितार्था° C °दोषातयोदाकाराभासी. C °येऽर्थे°. [b]) A अर्थाना तत्राभावकत्वात्. C °र्थान हित्रावलंवनत्वात्रि. D °त्राधावन L अत्रानन्तालंबनत्वात्. ADH वित्तीनां C भातिना.

अर्थानां तत्रालंबनत्वान्नियतविषयत्वाद्भ्रान्तीनां प्रत्ययधर्माध्यारोपो न वस्तु प्रचिनोतीति इव शब्दः। एवमुद्दिश्यते प्रतिपाद्यतेऽनेनेति **उद्देशः** शब्दः। तत उत्पन्ना बुद्धिरसदाकाराध्यारोपवती भवति ॥ ५३ ॥

इन्द्रियवत् किं शब्दे वैगुण्यमित्याह—

**अकृत्स्नविषयाभासं शब्दः प्रत्ययमाश्रितः।**
**अर्थमाहान्यरूपेण स्वरूपेणानिरूपितम् ॥ ५४ ॥**

(64) [a]) इह कारणानुरूपं कार्यं भवति। शब्दस्य च निरूपितार्थविषयत्वान्निरूपणाप्रत्ययः कारणम्। तदुक्तम्—

तथा च बुद्धिविषयादर्थाच्छब्दः प्रतीयते।

इति। निरूपणाप्रत्ययश्च विकल्पः। स चैकैकव्यावृत्तिनिष्ठत्वाद्विकल्पानाम् **अकृत्स्नविषयावभासः**। न हि विकल्पेन यथातत्त्वं वस्तु स्पृश्यते, प्रदेशैकदेशादिना संस्पर्शादित्युक्तम्। [b]) अतश्चाकृत्स्नमेवार्थमध्यारोपितरूपभेदं शब्दः प्रतिपादयति। कार्यकारणसंबन्धवशाद्विकल्पात्मको हि प्रत्ययः शब्दाज्जायते। तदुक्तम्—विकल्पयोनयः शब्दा विकल्पाः शब्दयोनयः।

इति। तथा

" कार्योपादानविकल्पपरिगृहीतः शब्दार्थः "

इति। [c]) एवमविद्यामान्द्याद्विकल्पानां यथातत्त्वमवसायपाटवाभावात् समारोपितरूपेणावसायस्य सर्ववादिभिरभ्युपगतत्वात्तदुपदर्शितविषयविषयाः शब्दाः सर्व एव बहिरसदर्थविषयाः प्रत्ययोपारूढरूपाभिधायिनः सिद्धा इत्यतीताद्यभावादिशब्दानामप्यर्थसंबन्धे न विप्रतिपत्तव्यमिति स्थितम् ॥ ५४ ॥

---

AH वस्तुप्रविमोपिति च शब्दः. D °र्मोनीतीति च. M प्रविनोतीतिव. ADH °पद्यतेयेने°. C तेन ह्युदे°. D वेने°. A तत्प्रत्यन्ता. C ततः ङ°. D नत्तप्रप्रत्य. H तत् प्रत्यपन्ता. D °कारोयचनी. C °रोपवति. L °वतीव. L om. भवति. ADH शब्दवै°.

का. ५४. D अकन्यवि°. M अकृत्स्नतेवि°. AH °माहात्म्यरू°. D rep. स्वरूपेण. C व्यवनि°. D °णावि°.

(64) [a]) D °णाः प्र°. CM °यका°. ADH यदा च बु°. C पदार्थ बु°. C °यर्थाच्छ°. D °र्थादर्थाच्छ. ADH विपर्यैकैक°. B °कल्यावृत्तिनिस्पष्टत्वात. L °त्तिनिस्पष्ट°. A विकल्पतामकृत्स्न°. D विकल्पनामक. ADH °याभासः. C °कदेशिना सं°. C °दिवत्युकम्. [b]) C °पादयमि. D °र्थमिति. [c]) ADH °द्याया विक°. C °मान्द्यं वि°. M °मान्द्या. ADH °पाटवात् समा°. AH त्वदुपदर्शितविपयिवि°. C तदुपविषयदर्शितवि°. ADH om. शब्दाः ... र्थविषयाः. M ins. सन् (before प्रत्ययो°). ADH °णख्यातानां. AH °त्वसादृश्य. D °त्वदृश्यं. CD शब्दो. B तथा चा°. D वाख्याक. D °देशर.

तत्रैतत् स्यात् निरावरणख्यातीनां भावतत्त्वदृशा यथार्थ एव शाब्दो व्यवहारः, ते चास्माकमुपदेष्टार इति नायथार्थः स इत्याशङ्क्याह—

**रूपणव्यपदेशाभ्यां लौकिके वर्त्मनि स्थितौ ।**
**ज्ञानं प्रत्यभिलापं च सदृशौ बालपण्डितौ ॥ ५५ ॥**

(65) [a]) प रपराभिप्रायमेलनात्मकत्वाद्व्यवहारस्याविदाततदर्शना भावतत्त्वदृशोऽपि व्यवहरन्तो लोकपथवर्तिनः सदृशोऽन्यैरर्वाग्दर्शनैः । **रूपणम्** आलोचनम् । आलोच्य शब्देन प्रापणं **व्यपदेशः** । आभ्यां व्यवहरन्तो लौकिके मार्गे तुल्याः । [b]) क विषय इत्याह **ज्ञानं प्रति** इत्यादि । बालस्य विपर्यासितमतेर्यज्ज्ञानमर्थसंविकल्पम्, अभिलापो व्यपदेशरूपश्च ते **प्रति** तद्विषये । यथा बालो विकल्पयत्यर्थमभिधत्ते च, एवं परमार्थदर्शना विद्वासोऽपि । तथा हि तेऽपि निरूप्य विवक्षित्वा विषयं यथाविवक्षमेव व्यपदिशन्तः पराभिप्रायमेलनमारभन्त इति । [c]) यथा पराभिप्रायमेव पूर्वं निरूपयन्ति तथा च तेषामपि निरूपणाज्ञानं विकल्पः तत्पूर्वकश्चाभिलापः शब्दो लौकिकसदृशः । या तु तेषां व्यवहारातीता दशा तस्या शुद्धं ज्ञानं पारमार्थिकमनिरूपकम् ॥ ५५ ॥

प्रतिनियतविषयग्राहकमेव ज्ञानं सदैवेति कास्य शुद्धिरित्याह—

**सर्वार्थरूपता शुद्धिर्ज्ञानस्य निरुपाश्रया ।**
**ततोऽप्यस्य परां शुद्धिमेके प्राहुररूपिकाम् ॥ ५६ ॥**

(66) [a]) द्वे दशे शुद्धेरुपक्रमपरिसमाप्तिरूपे । इन्द्रियसन्निकर्षादिरूपोपाश्रय-

---

का. ५५. CLM रूपेण. C लौकेके. C वत्मनी. D ष्टितौ. A °लापं च. C °लाशश्च. D °धाचण्य. D °शौ ज्ञानपण्डितौ.

(65) [a]) AH °स्याविदितद°. C °दातत्वद°. D °वेदीनद°. C °तत्त्वदेशे. CL om. अपि. ADH °हरन्ति. ADH लोके यथा वन. AH °शैरन्यैरतादृग्दर्शनं. C °न्यैर्वागदर्शनं. D °रनाग्दर्शने. AH रूपणम् । वनमालोत्पलशब्दे. C °रूपेणमालो°. D रूपेणमानोवनमालोन्य. AH यद्रूपण स व्य°. C अव्या व्यवहरि M आभ्णं व्यवहारन्तो. ADH लौकिकमार्गे. C तुल्यं. M तुल्यः [b]) M क्वपिद्वि°. AH °तेरर्थज्ञा°. M °सिततेर्थ°. M °नमर्थे सति विकल्प्य. ADH °लापो. C °ग्येयौ. B °लामो. ACHM °रूपं च. D °देदारूपं चात प्र°. ACH तं प्रति C ins. च (before यथा). M पिकल्प°. BH °दर्शनाद वि°. A विद्वासो (for हि ते). D द्विरोपि. H विरोधि (for तेऽपि) C अव्यारोपित निरुपि. A क्षितत्वा वि°. C °क्षितवि°. D °विहक्ष°. [c]) C पराभिमेव. ACDH ins. विनिरूप्य (after तथा) ADH रूपणा°. L विकल्पं. AH °कश्चाभिधायाः. B °लापकः D प्रायः. M °लापः. C °कनयेन. C om. यातु. M यत्तु. C दर्शना L °तं दर्शनं. M दर्शात्त°. ADH शुद्धज्ञा°. ADH पारमार्थमनि°. C मनिरूपि. C °यग्राहिकमे°. M सदेवेता. C काश्य. M कस्य शु°.

का. ५६. D ज्ञानन नि°. C तथाप्यस्य. D त्नोऽप्य°.

(66) [a]) C द्विदेशे. M °रुपपरिस°. M °रूपरि. C रूपोचाश्रय°. D निरुपेततया. A °पेक्षतायामशे°. C °मर्थोव°. C सर्वज्ञा°. ADH सर्वजज्ञा°. ADH अविषयग्र°. C स्वविषये ग्र°. ADH °ग्रहणे शुद्धेरवग°.

[b]) एवमन्योन्यापेक्षित्वे भावाभावयोर्व्यवहारे साम्यं भेदमभ्युपगम्य प्रतिपादितम् । इदानीं भावव्यतिरिक्तमभावं निरसितुमाह—

**नाभावो जायते भावो नैति भावोऽनुपाख्यताम् ।**
**एकस्मादात्मनोऽनन्यौ भावाभावौ विकल्पितौ ॥ ६१ ॥**

(71) [a]) द्वैतनये प्रागभावोपमर्देन भावनिष्पत्तिः । भावोपमर्देन प्रध्वंससंभवः । द्वयमपि चैनदयुक्तम्, भावाभावयोरन्योन्यस्वभावोपगमसंभवात्, स्वभावस्यानपायात् । अतश्चात्यन्तविवेके भावोपाधितयाभावस्याभावोपाधितया भावस्य प्रतीतिर्न स्यात् । [b]) तस्मादेकमेवाद्वयं तत्त्वमात्मशब्दवाच्यं व्यवहारे विकल्पदशाया भावाभावोपाधिरूपप्रविभक्तं चकास्ति । प्रकाशरूपस्य हि परस्य तत्त्वस्य सर्वथाविभिन्नस्वभावस्य महासत्तात्मनोऽभावप्रतियोगिनोऽविद्यावशात्सावृतलोकयात्रानिर्वर्तनसमर्थस्य बहिरिदन्तया प्रतिभाने वर्तमानकालोपाधितयार्थक्रियाकारिणो भावरूपता, अतीतानागतकालोपाधितया चान्तरेव संस्काररूपतयानुवर्तनाद्बाह्येन्द्रियविषयतानुपगमात् सर्वप्रमातृसाधारणार्थक्रियाकरणादभावरूपतया व्यवहारः । [c]) न च सर्वथा तदानीमसत्ता स्मर्यमाणत्वादुत्प्रेक्ष्यमाणत्वाच्च । तथा च यस्य संस्काररूपास्ते भावास्तस्य स्मृत्युत्प्रेक्षागताः कल्पयन्त्येव काममप्यर्थक्रियाम् । अत एव च मध्यावस्थस्य भावस्वभावस्यैव प्रागभावः स्फुटेन रूपेणेन्द्रियापरिच्छेद्यावस्था, प्रध्वंसश्चोत्तरकालमभावो व्यवह्रियते, न तु सर्वथा भावसंस्कारनिवृत्तावभावः कश्चित् सर्वशक्तिविरहलक्षणश्चकास्ति चेतसि । अत एव त्र्यध्विकाः पदार्थाः समुद्घोष्यन्त इति नाभावो नाम कश्चित् ॥ ६१ ॥

---

[b]) A °न्यापेक्षि°. C °न्योन्यापेक्षिव. D °न्यान्यापे'. M गम्यं. ADH भेदाभ्यु°. A निगमयितु°. D निरामितु°.

का. ६१. D भावो जा. D ins. नैति भालो (before अनु°). B नैकीभावो. C नान्यां. C व्यवास्थितौ.

(71) [a]) C द्वैत°. D द्वैनये. C °मर्देनेन. BL om. भावनि ... ष्पत्तिः भावोपमर्देन. M om. पमर्देन ... °विवेके भावो. D नावोपम°. D प्रद्रुससं°. D चैनंतूदद्यक्त्रं. L °पगमासंभवात्. C °त्यन्ते वि°. C °तयाः. B om. °धितया भावस्य ... न स्यात्. [b]) C °वद्वायं. C °हारो वि°. L °क्तश्चका°. M कि परस्य. C परतत्त्व सर्वस्याहिभि°. ADH सर्वत्रावि°. D °भिन्नस्य भावस्य. ACDH °त्मनो भावप्र°. ACDH सावृत°. CL साम्प्रत°. M °त्रानिदर्शनस°. C °हिरिन्द्रत°. AH °कालोपपादितनिवर्तनसमर्थनान्तरे च सं°. D °कालोकयाचिजनिवर्तनसमर्थनान्तरे. AD °र्तनात्वना°. C °र्तमानाद्वा°. ADH सर्वत्र मातृसा°. [c]) C स च स°. D सर्द्वयो. AH °नीमसन्. C °नीं सता. D °नीयसत्रा. D om. उत्प्रेक्ष्यमाणत्वाच्च. ADH यदास्य सं°. C यदा सं°. M यत् स. AH इत्यस्मदु श्रे°. D स्तुं भावः तस्य स्मत् प्रे°. A काममर्थे°. M कामथर्थ°. C °वस्थास्य. C °वस्थस्यैव. C °त्तराका°. ABCDH ननु. C °क्तिविलक्ष°. AH त्रैय्यधिकाः. C अत एवात्राप्यधिकार. D त्रैप्यधिकाः. M त्रेशब्दिकाः. C पदार्थः. AH वाभावो नाम. D वाभावो नास.

[d]) तत्रैतत् स्यात्—कथं **भावाभावौ विकल्पितौ** इत्युच्यते, कारणभेदात् सत्यभूतौ यथावभासं कस्मान्न भवत इत्याशङ्क्य सदसत्पक्षभेदेन कार्यकारणभावानुपपत्तिप्रतिपादनपूर्वकं द्वैतदर्शनमपोह्य विवर्ताश्रयेणाद्वैतनयं स्वमतेन सिद्धान्तयितुमुपक्रमते—

**अभावस्यानुपाख्यत्वात् कारणं न प्रसाधकम् ।**
**सोपाख्यस्य तु भावस्य कारणं किं करिष्यति ॥ ६२ ॥**

(72) [a]) इह कार्यस्यात्मलाभमुद्दिश्य कारणं प्रवर्तते । तत्र निःस्वभावस्योद्देशत्वायोगात् किमवलंब्य कारणस्य पदबन्धः स्यात् । जात्यात्मना सत्त्वे तस्या नित्यत्वात्कार्यतानुपपत्तेः पुनरपि कारणं क्व वर्तेत । कथंचिद्भेदो जातिव्यक्त्योरिति चेद् व्यक्त्यात्मना तर्हि कार्यतेति तदवस्थो दोषः । [b]) नियतकारणपरिग्रहश्च न स्यात् । असत्त्वस्याविशेषात् सिकताभ्योऽपि तैलं स्रवेत् । नियतशक्ति कारणमिति चेत् कुतोऽत्रसिनमेतत् । तस्मिन् सति सद्भावादिति चेत् तदेवेदं पर्यनुयुज्यते 'कथमत्यन्तासतस्तस्मिन् सति भाव इति । [c]) प्रतीतत्वाददोष इति चेत् प्रतीतिमात्रमस्तु किमयुक्तिकेन कार्यकारणभावोपवर्णनेन । तथा च सिद्धान्तयिष्यति—

"भावानां प्रागभूतानामात्मतत्त्वं प्रकाशते"

इति । अथ सत् कार्यं कारण इति नैते दोषाः, अत्रापि कृतस्य करणायोगादकिंचित्करं कारणम् । न ह्येतद्युज्यते कारणं चात्रोपयुज्यते, न चापूर्वं किंचित् प्राप्यत इति । [d]) अथाभिव्यक्तिः कारणेन कार्यस्य क्रियते साऽपि ततोऽन्याऽनन्या वा । अन्यत्वे सती वा स्यादसती वा । सत्त्वे प्रागिव कारणानुपपत्तिः । अभिव्यक्त्यन्तरकरणे त्वेतदेव पुनरावर्ततेऽनवस्था च । असत्त्वे प्राप्तमसतो जन्म । तथा च कार्ये को

---

[d]) ADH °त्युच्येते. CD °भूतो. C °वस्थानं भासं. M संस्कस्यन्न. C भवति. C °भेदेन कारणभावा°. AH °नमर्थापनिवर्ताश्रयेणा°. C °मपोह्यनिवर्ता°. D °नमयोद्यनिवर्ता°. D °मर्तेन.

का. ६२. C °नु पाक्ष. B करणं. C om. °त्वात् का ... पाख्यस्य. DH लोपाख्य.

(72) [a]) ACDHM आह. AH °णानि प्रवर्तन्ते. C om. तत्रनिः स्व ... क्व वर्तेत. D तत्रासतः स्व°. L °स्योद्देश्य°. M om. उद्देशत्वायोगात्. D °वलंध्य. ADH सत्वेनास्य नि°. ADH °तानुपपत्तेः। पुनरपि. B त्व वर्तेत. M °चिद् भेदो जा°. C °व्यक्तोरि°. CD व्यक्तात्मना. [b]) C °कारणाय°. M न सत्वस्या°. C अस्यतत्व°. D आसत्व°. ADH सिताभ्यो°. M विताभ्यो. M स्त्नियत°. ADH °क्षितमेतस्मिन्. AH तदवेदं. D तदेवंदर्ययनु°. M °नुगुप्यते. D कन्य नास°. M °त्यन्तसस्तस्मि°. ADH om. भाव इति. [c]) AH °क्तिजनककार्य°. D °क्ति तनक°. C °पवर्तनेन. M °पवर्तृनोत. C प्रागभूना°. AH प्रकाशयेत. D प्रकाशयति. C करण कार्य इति. D ज्हारण इति. M निते. C दोषः. C °पि तस्य क°. ACDH कारणायो°. C °करं कारणां. ADH न स्वेतद्यु. M युष्टते. ACDH om. कारणं चोपयुज्यते. C प्रोप्यते. M प्रोप्वत. [d]) ADH अथारि व्य°. C सत्यपि ततो. M तथापि. C ins. अन्या वा (before अन्यत्वे). L असति वा. ACDH करणानुप°.

विद्वेषः । [e]) अभिव्यक्तौ च कारणव्यापारात् कार्यस्य कार्यता न स्यात् । वस्त्वन्तरोत्पत्तौ च किं तस्य येनासाववशङ्किनमेवोद्भवेत् । तत्संबन्धाभिव्यक्तिकारणादिति चेत्, कोऽयं जन्यजनकयोः संबन्धः । तत्त्वेऽप्यभिव्यक्तौ तज्जन्याया तद्विषयः कारणव्यापारो न स्यात्, कार्येणैव तस्या जननात् । तथा कार्यस्य जनने तद्विषयोऽपि कारणव्यापारो न स्यात् । तथा च तस्यासतो जननेऽसत्कार्यप्रसङ्गः । [f]) सतोऽप्यभिव्यक्तौ पुनरप्येतदावर्तते । उपकार्योपकारकभावः संबन्धोऽभिव्यक्तिकार्ययोरिति चेत्, केन कस्योपकारः । स च किं व्यतिरिक्त उताव्यतिरिक्तः । व्यतिरेके तस्येति कः षष्ठ्यर्थः । उपकारान्तरकल्पनेऽप्येतदेव चोदनीयमनवस्था च । अव्यतिरेके तु जन्यजनकभाव एव पर्यवस्यति । तत्र चोक्तो दोषः । अनन्यत्वेऽभिव्यक्तेः कार्यात्तदेव कृतं स्यादित्यसत्कार्यनयाश्रयः । तत्र चानुपपत्तिरावेदितेति सङ्कटोऽयं पन्थाः ॥ ६२ ॥

[g]) इत्थं च कार्यतानिषेधात् प्रागभावप्रध्वंसाभावावपि कृतकवस्तुविषयौ न स्त इति पूर्वोक्तमेवावस्थाभेदेन विकल्पितत्वं भावाभावयोर्निगमयति—

**तस्मात्सर्वमभावो वा भावो वा सर्वमिष्यते ।**
**न त्ववस्थान्तरं किंचिदेकस्मात् सत्यतः स्थितम् ॥ ६३ ॥**

(73) [a]) कार्यकारणभावाभावान्मध्ये जातोऽभिव्यक्तो वासन् पूर्वोत्तरयोरवस्थयोरजातोऽनभिव्यक्तो विनाशकारणयोगाद्विनष्टश्च भावो नोपपद्यत इति भावाभावौ नैकस्यावस्थातुः परिणामदर्शनाश्रयेण सत्यभूतावस्थात्मकौ, अपि तु व्यवहारदशायामविद्याप्रवृत्तिरूपाया सत्यस्याभिन्नसंविन्मात्रस्य तत्त्वस्य यथार्थमनवभासात् परमार्थतः सर्वं प्रपंचजातमभाव एवापरमार्थ एव । [b]) स च नीरूपो न कश्चिदिति भावव्यतिरेकं न

---

[e]) C अविव्य°. AH °वोद्भवो भवेत्. ADH सत्संवन्धाभि°. L वोऽयमजन्यं जनयेत् संबन्धम्. C को ये जन्य. AD कोयमजन्यज°. ADH कारणेनैवास्य जननात्. D rep. कारणेनैव ... न स्यात्. M तस्य ज°. M कार्यस्य व्यजनते. A °तो भवने. D जवने. ADH °प्रसङ्गात्. [f]) AH सतो ह्यभि°. C ततो प्यविभ्य°. D सतो ह्य. AH °तदेव चावर्तते. D °रप्येतदेव वचा. °देव वावर्तात्. M °रिति शकेन°. C तेन कस्यो°. C तस्यति वः°. M °येतच्चोदनी°. ADH °स्था च । व्यति°. C °त्वेऽव्यविभ°. M °वृतं स्यादि°. ADH °त्कार्यतयाश्रयः. C °टोऽयं पथः. D °टोऽयं यथा. M °टेयमवस्था. [g]) M इत्सं. ADH कार्यता निवन्धात्. C कार्यतोनि°. M °प्रागभातप्रध्वसाभाव्द्वपि. ADH कृतवस्तु°. D °तत्वे. D निगमयति.

का. ६३. C सर्वो ममा°, C सर्वतः. D सर्वत छिताम्.

(73) [a]) C °भिव्यक्तौ. D °भिव्यक्ता. C वा स पूर्वो°. CD °रजातौ. M °योरभावो. CD °व्यक्तौ. ADH °शकारणायो°. C न कस्याव° M निकस्याव°. L नैकवस्यावस्था°. ACDH °भिन्नसच्चिन्मा°. ADH यथायथम°. C सप्रपंच°. D °मभाद्वे एव.

सहते। किंचिद्रूपं हि कुतश्चिद् व्यतिरिच्यते। भेदमात्रस्य चाभिन्नतत्त्वाग्रहणरूपस्य शून्यत्वात्। सांवृतेन तु रूपेण सर्वं भावात्मकम्, प्रथमानस्य वस्तुत्वात्, अवस्तुनः प्रथनायोगात्। [c]) भावानां हि ज्ञायमानत्वेन ज्ञानोपारूढतया सत्त्वमेव, बहिरध्यवसानाच्चापि सत्त्वम्। केवलं योऽयं भेदोऽवच्छेदो ग्रहणमसौ न किंचिदविद्या। तत्र च भिन्नः प्रकाशोऽनुगत इति विद्यावस्थितैव। तथा च

" विद्याविद्याप्रविभागमप्रविभागं ब्रह्म "

इति ब्रह्मकाण्ड उक्तम्॥ ६३ ॥

[d]) यतश्चैवं सर्वं संवृतिसत् ततः प्रवादिना दर्शनविकल्पास्तत्राभिमानमात्रमित्याह—

**तस्मान्नाभावमिच्छन्ति ये लोके भाववादिनः।**
**अभाववादिनो वापि न भावं तत्त्वलक्षणम्॥ ६४ ॥**

(74) [a]) आविर्भावतिरोभावमात्रं जन्मनाशौ सत एवेति वदन्तो भाववादिनः परमर्षयः। तेषामभावो नाम भावपृथग्भूतो न कश्चिद्भावस्यैव पूर्वोत्तरयोरवस्थयोरभावव्यवहारात्। तथा हि–मृदवस्था घटस्य प्रागभावः, कपालावस्था च प्रध्वंसाभाव इति वाच्यम्। सर्वं शून्यमिदं जगदित्यभाववादिनामप्यभावः पारमार्थिको न कश्चित् इति न भावं तत्त्वलक्षणं परमार्थरूपमिच्छन्ति। [b]) एवमपि ब्रुवन्तो व्यवहारे भावाभावभेदमर्थक्रियाकरणाकरणनिमित्तं नापह्नुवते। ततश्च संवृत्या सर्वमुपपद्यते साम्येनेत्यभिनिवेशोऽत्र त्याज्यः॥ ६४ ॥

---

[b]) DL निरूपो. M सहोत. ADH किं चायं हि न कुत°. L °रिच्येत. C °मात्रस्याभिन्नत°. C °रूपशून्य°. AH भावत्वेन तु. CM साम्प्रतेन. D सावतेन. ADH सर्वभावा°. AH °भावात्मकत्वम्. M प्रथमं प्रथमा°. M °दवस्तुनेः. ADH प्रथायोगात्. C प्रथमानायोगात्. M प्रथनयो°. [c]) A °परूप्यतया. C ° परूपतया. D °रूटयतया. L स्वत्व°, AH भावादिरध्य°. C हिरध्य°. D मवदिरध्य° C °ल्यो यो. D °ले योप. M योया. M °च्छेदौ. M °ण मयौ. AH तत्र वा मनः प्रकाशो. D तत्र वा भन्नः प्र°. CD °नगत. L विद्याप्रविभा°. C om. अप्रविभागं. M विद्यविद्यप्रविभागाप्रवि°. [d]) AH संवृतित्ततः प्रचारिता. C संयुवृत्ति सतातः प्र°. D °ति सत्ततः प्रचारिताः. C विकल्पस्त°.

का. ६४. C अभाववा°.

(74) [a]) C अविर्भा°. M जुन्मनाशे. D °नाश्ये सते. C पराचर्पमात्रः. DH पारमर्पाः. M °मिच्छन्दिनः परमाथाक. M °पृथग्रतो. M भावस्थौ व. D मृदुनस्था. CM ins. च (before घटस्य). D न प्रध्व°. D प्रधूंसभा°. M प्रध्वस इति. ADH शून्यं ज°. C शुन्यमिदं. ADH न भावः कश्चित्. A ते (for न). CDH om. न. A नेच्छन्ति. [b]) AH व्रजन्तो. D ब्रुवन्ता. AH भावोच्चावचभे°. D भावाच्छावभे°. C °मनर्थ क्रि°. A °याकरणमार्थिकोरव नि°. C °याकारणकारण. M °करणकरणनि°. AH °न्हुवन्ति. C °तहुयते. D °न्हुवतो. M पश्नवते. A साम्येत्पभि°. D °म्येनत्य°. ADH न त्याज्यः. C ज्यायः. ADH भावावभेद. M भावभेद. D दन्यत अर्हि.

अभावप्रतिक्षेपे तर्हि निर्निबन्धनो भावाभावभेद इत्यत आह ।

**अद्वये चैव सर्वस्मिन् स्वभावादेकलक्षणे ।**
**परिकल्पेषु मर्यादा विचित्रैवोपलभ्यते ॥ ६५ ॥**

(75) [a]) **सर्वस्मिन्** परिदृश्यमानभेदजाते **स्वभावात्** परमार्थरूपात्, न सामान्यसमावेशवशादेकस्वभावे ब्रह्ममये विचित्रेषु विकल्पेषु भावाभाववादिनानात्वेनानादिनियतिशक्तिनियमितेयमविद्यावशान् **मर्यादा** व्यवस्था नानारूपा दृश्यते । [b]) असत्यपि वास्तवे भेदेऽविद्यानिमित्तोऽयं भेदो व्यवहारे रूढ इत्यविचारितसिद्धोऽवगन्तव्य इत्यर्थः ॥ ६५ ॥

न तु सत्यतोऽयं भावाभावभेद इति निदर्शनेन व्युत्पादयति—

**चतस्रो हि यथावस्था निरुपाख्ये प्रकल्पिताः ।**
**एवं द्वैविध्यमप्येतद् भावाभावव्यपाश्रयम् ॥ ६६ ॥**

(76) [a]) प्राक्प्रध्वंसात्यन्तेतरेतरलक्षणोपाधिवशेन नीरूपस्य रूपभेदायोगाद्यथाऽभावस्य चतुर्धा भेदः काल्पनिकः तथैव भावाभावलक्षणोऽपि भेदः काल्पनिक एवावगन्तव्यः इत्यर्थः । [b]) बहिरिन्द्रियगोचरार्थक्रियोपाधिर्ब्रह्मभागः कल्पितो भावः, बहिरर्थक्रियाशून्यस्स्वभाव इति सङ्केतः ॥ ६६ ॥

वस्तुतस्तु सर्वव्यवहारातीतौ न पृथग् भावाभावावात्मतत्त्वमुद्दर्शयत इत्याह—

**अविरोधी विरोधी वा सन्नसन् वापि शुक्तितः ।**
**क्रमवानक्रमो वापि नाभाव उपपद्यते ॥ ६७ ॥**

---

(75) [a]) C °जातेः. M परमात्मरूपात. ACDH om. न. C °वेशाव°. ADH चित्रेपु. M विनिर्दिष्टेषु. ADH भाववादिना°. C °वादिनः नाना°. C °नादिशक्ति°. C न व्यवस्था. [b]) °स्य वा°. D °मित्तोऽयं. M °निर्मितोऽयं. M °रित्यसि°. D इत्यर्थेः. AH ननु सत्यथोत्पन्नो भावाभेद. C भावाभावे. D सत्ययोऽय भावाभावभेद.

का. ६६. AH °स्रोऽपि. D वसनोऽपि. M चत् स्रो हि याथा. AH नीरूपा. C नीरूपाख्याः. C °मप्यवित°. D मथेतद्.

(76) [a]) C °सात्येतेत°. C निरू°. C °भेदाभावात. C °भावश्चतु°. D चतुर्थ. C om. अपि भेद. C कल्पिनीक. C °व्यरित्यर्थः. [b]) AH ब्रह्मण एव. D °धिह्यभागः. B ब्रह्मभावः. AD वस्तुतः स°. D वस्तुस°. D °मुद्दशेय.

का. ६७. D वीसन्नसनावयि ADH तत्वतः.

(77) [a]) नीरूपत्वादभावस्य भावेन सह विरोधाविरोधौ युक्त्या न सङ्गच्छेते। न हि भावमभावः समुच्छिनत्ति अनुगृह्णाति वा येन तद्विरोधी अविरोधी वा यथासंख्यं भवेत् सतोऽसत्वायोगाल्लब्धरूपस्यातिशयायोगाच्च सत्त्वमभावस्यात्मविरुद्धम्। असत्त्वमप्यस्य तद्रूपत्वादेव व्यतिरिक्तं भाववन्नोपपद्यते। एवं हि भावताप्रसङ्गः [b]) क्रमोऽपि भावधर्मो नाभावस्य युज्यते, भावस्योच्छेत्तुमशक्यत्वाद् हि तदपेक्षो भावस्य क्रमः, नाप्यभावान्तरापेक्षः, तस्यैवासिद्धत्वात्, नीरूपस्य भेदाभावात्। एवमक्रमोऽपि, यौगपद्यमर्थान्तरापेक्षत्वादस्य नास्ति, अन्येन सहासमानकालत्वादिति युक्तितो नोपपद्यते॥ ६७॥

अभावो नामैवंधर्मो यतः एवम्

**अविरोधी विरोधी वा सन्नसन्नपि तत्त्वतः।**
**क्रमवानक्रमो वापि तेन भावो न विद्यते॥ ६८॥**

(78) [a]) यतोऽभावस्येत्थमनुपपद्यमानता तेन **भावः** अप्येवं परमार्थतो नोपपद्यते। तथा हि—भावस्यानुच्छेद्यत्वान्निरतिशयत्वाच्चाभावेन सह विरोधिता अविरोधिता च न युक्ता। एवं क्रमाक्रमावपि। अथ भावान्तरेण सह भावस्य विरोधित्वादिति चिन्त्यते तत्रापि स्वतोऽनुच्छेद्यस्य निरतिशयस्य च केनचिदुच्छेत्तुमनुगृहीतुं वाशक्तेस्तदनुपपत्तिरेव। [b]) क्रमाक्रमावपि भेदाभावान्न पारमार्थिकौ। सत्त्वमपि नियतार्थक्रियानिमित्तमर्थक्रियान्तराकरणान्न तत्त्वतो व्यवतिष्ठते। सत्तासंबन्धस्य चानुपलब्धेर्न तन्निमित्तं प्रतिभासनाच्चासत्त्वमप्यपारमार्थिकम्। इत्थं सर्वव्यवहारा विकल्पपरिघटिता एवेति भावाभावावपि तथा विज्ञेयौ। कल्पना चाविद्याशक्तिः। सा च तत्त्वान्यत्वाभ्यामनिर्वाच्येति ब्रह्मकाण्डे निर्णीतम्॥ ६८॥

---

(77) [a]) D निरू°. D प्रत्मा न°. D °च्छेत. C °म भाव. D तद्विरोवीना यथा°. M व्यथास°. M इवेत्. CD सतो स°. C °शययो°. M °रुद्धा. ADH °मस्यातद्रू°. C °देवा व्यति°. ADH °रिक्ताभाववन्न°. C °रिक्तो भी°. C °पथ्यते. D °न्नो ा: पद्यतो. AH तावन्नाप्र°. D नावनाप्तसडाः. [b]) D न भावस्य. M भावयस्य. ACDH अभावस्यो°. AH °त्वात् भिन्न-तदपेक्षो. C धीनतद°. D विनतदपे. AH °प्यभावनिरपेक्षः. D °नरपेक्षः. ADH एवाक्र°. M °एमक्रमो. ADH °दस्य अस्ति. AH °धर्मो यत् एवं. D °वेधर्मोयत्. L एवधर्मा. B om. the whole of the commentary on this Kārıkā.

का. ६८. A prints this Kārıkā as part of Helārāja's commentary. L सन्नसन् वापि. AD om. भावो न विद्यते. C:भावो न द्यते. BM om. the whole Kārıkā.

(78) [a]) ADH om. यतोऽभावस्य ... °शयत्वाच्चा. B om. यतोऽभावस्य ... त्वाच्च. C ins. एनाभावक्रमो सत्वमप्यस्य विरोधाभावादशक्यत्वादविरोधी तत्त्वतः। क्रमवाचाक्रमावपि भाववन्नो ापद्यते येन (before अभावस्य). L यतो भावस्ये°. M om. यतोऽभावास्य ... नोपपद्यते. M °विता च तियुक्ता. ADH अथाभावान्त°. ADH om. भावस्य ( before विरो° ). ADH °वितादि विचि°. CM °वित्वादि चि°. D °वितादवि°. C °च्छेद्यस्यातिशयं केन. C असक्ते. A °पपत्तिरेव. [b]) DM क्रमावपि. D °भावां न. ADH °र्थिकासत्वमपि. C °तार्थक्रियान्तराक°. M °ता व्यव°. D मंत्रासंब°. ADH °मित्र प्रति°. ADH °समाद्य सत्व°. C ins. विकरणान्न तत्त्वतो च्यवति. ADH वाविद्या°. M om. वाविद्या. ADH विद्यातरवा°. C °न्तो द्रव्य°.

कालनिमित्तोऽप्यत्र भेदो न पारमार्थिक इत्याह—

**अभावे त्रिषु कालेषु न भेदस्यास्ति सम्भवः ।**
**तस्मिन्नसति भावेऽपि त्रैकाल्यं नावतिष्ठते ॥ ६९ ॥**

(79) [a]) **त्रिषु कालेषु** इति । कालत्रयनिमित्तको भेदोऽभावविषयो नास्ति । तथा हि नीरूपत्वादभावस्य वर्तमानकृतस्तावत् परिच्छेदो नास्ति । तदभावात्तदपेक्षोऽतीतानागतकालयोगोऽपि न भाविकः । एवं च भावस्याप्यभावापेक्षं त्रैकाल्यं नास्ति । तथा हि प्रागभावाश्रयं भविष्यत्त्वं प्रध्वंसापेक्षं च भूतत्वमिति प्रागभावप्रध्वंसयोर्भेदाभावादयुक्तं तत् । तदभावाद्वर्तमानत्वमपि नास्ति । [b]) नापि स्वापेक्षं पूर्वापरकोट्योरभावात्, भावस्य कालत्रययुक्तत्वम्, भावे तु सांख्यानां पूर्वापरकोट्योर्भावस्यैकत्वमेवाभिन्नरसमिति पुनरपि कालत्रयायोगः । अवस्थास्ततो न व्यतिरिच्यन्त इति तासामपि तदभावः । व्यतिरेकेऽपि वा तद्वतः कालभेदो न भावस्य शक्यते कल्पयितुमित्यसत्यो भेदः ॥ ६९ ॥

भवतीति भावो न भावोऽभाव इति लक्षणमनयोर्नोपपद्यत इत्याह—

**आत्मतत्त्वपरित्यागः परतो नोपपद्यते ।**
**आत्मतत्त्वन्तु परतः स्वतो वा नोपकल्पते ॥ ७० ॥**

(80) [a]) कारणाद् भावस्य सतो विनाशो नोपपद्यते । नीरूपस्य कारणसामर्थ्येन जन्यमानतायां नाशस्य रूपवत्त्वप्राप्तेर्भावेन सम्बन्धे प्रागिव तरयोपलब्धिः स्यात् । तेन तस्य विनाशे तत्रापि तथैवेत्यनवस्थापातात्, भवनस्वभावस्याभवनविरोधाच्च स्वतोऽपि विनाशाभाव इत्यभावशब्दार्थो न कश्चिदवतिष्ठते । [b]) भवनमपि भावसद्भावपरिनिष्ठितस्य कारणान्नोपपद्यते । स्वतोऽपि भवतो भवनायोगः, अभवनशीलस्य भावता विरुद्धेति भावशब्दार्थोऽपि न कश्चित् ॥ ७० ॥

---

का ६९. C कालेनपु. D तेदस्या°. D संभवाः. C तस्मिन् सति.

(79) [a]) ACDH °कोऽप्यभेदो. C om. नीरूप ... भावस्याप्यभावापेक्षं ... तदभावात्. ACDH om. °पेक्ष त्रैकाल्यं ... तदभावात्. [b]) M साषि स्वा°. M °परयोरभा°. ADH °त्रयमुक्तम्. ADH सख्याना. D rep. पूर्वापरकोट्योरभावात् भावस्य कालत्रययुक्त भावे तु संख्याना. C आवस्थाः C °च्यन्तीति. C °तदभावं. AH तद् बहुलः. C °तीति विच. C इत्यपि.

का. ७०. D आत्मनस्व. D आत्मनेत्वेतु. C °पपद्यते. D °पपद्यतो. B om. this Kārikā.

(80) [a]) C विनाशे. M नीरूपतस्य. D °मानतोया. M °मानतया. ADH °वत्वं प्राप्तेः. M °प्राप्तो. B संबन्धेन. L संबन्धेन्ध°. D प्रागिवं. C om. तस्य. C °स्थापनीत्. M °स्थाणतो. AH भावनस्वभावस्य भावनावरो°. CM °नाशोभा°. C °श्रितसव°. [b]) M भवनी भवामे°. AH अभवे न खल्वस्य भावना. D अभवे न स्वीलस्य भावना. M °स्यानि भवती. AH भाववाच्योऽपि. D °वास्येऽपि. L तावशब्दा°. M भवनशब्दार्थोऽपि. C भावाभावायादकं. D तत्वं इ°. M °वेकां तत् इ°.

न चैवमपि भावाभावावेकं तत्त्वत इत्याह—

**तत्त्वे विरोधे नानात्व उपकारो न कश्चन ।**
**तत्त्वान्यत्वपरित्यागे व्यवहारो निवर्तते ॥ ७१ ॥**

(81) [a] ) विधिप्रतिषेधयोरेकत्वं विरुद्धम् । नानात्वे तु भावाभावयोः परस्परापेक्षया निरुपकारिणोर्व्यवहारो न स्यात् [b] ) तदतद्व्यतिरेकेण विकल्पासंभवो राश्यन्तराभावादिति सर्वव्यवहारातीतत्वं भावाभावादिरूपतया प्रतिभासमानं जगत् सावृतेन रूपेणाविचारितसिद्धमिति स्थितम् ॥ ७१ ॥

परमार्थस्त्वयमत्रेत्याह—

**यत्र द्रष्टा च दृश्यं च दर्शनं वा विकल्पितम् ।**
**तस्यैवार्थस्य सत्यत्वं श्रितास्त्रय्यन्तवेदिनः ॥ ७२ ॥**

(82) [a] ) ग्राह्यग्राहकादिप्रपञ्चस्य विकल्पपरिघटितस्यासत्यत्वात्सर्वप्रपञ्चसमतिक्रान्तं वाङ्मनसातीततत्त्वमविकल्पं परं ब्रह्मानादिनिधनं सत्यमिति ब्रह्मविदः प्राहुः । ऋग्यजुःसामात्मको वेदस्त्रयी, तस्या अन्तः सारभूतार्थनिर्णयमय उपनिषद्भागः । [b] ) तत्र हि समासो संक्षिप्य शास्त्रार्थसतत्त्वमाख्यायते, तं जानते तच्छीला ये त एवमभेदं परमार्थरूपमाहुः, न कर्मानुष्ठानाक्षिप्तं भेदम् । अविद्यापरिकल्पितो हि भेदो वितथो वैकल्पिकः । अविद्यापि च तत्त्वान्यत्वाभ्या परस्मादनिर्वाच्यानादिसिद्धजीवात्मगतभेदप्रतिभासकारिणीत्युपपादितं ब्रह्मकाण्डे विस्तरत इति तत एवावधार्यम् ॥ ७२ ॥

[c] ) तदेवं यथावभासमसत्यार्थनिष्ठः शाब्दो व्यवहार इत्यलब्धाभिन्नतत्त्वविश्रान्तिभेदेष्वत्रोपप्लवत इत्याह—

---

का ७१ ADH विरोधनाना°. C विरोधो ना°. D नानातु. L तयान्यत्व पराकारो. D कश्चनां

(81) [a] ) C °प्रतिपिद्ध°. C नान.त्वै तु. [b] ) ADH तदैतद् व्य°. M तद् व्यतिरे° C राद्यन्तरा°. D सेवव्यवहारा°. AH जडात्. C जागन्. D इनेन रूपेणाव. C पारमार्थिक तु त्रयमात्रे°.

का. ७२. C द्रष्टां. D दृष्टा. D विकल्पि. L चापि कल्पितं. D तचैवार्थसत्वं. C स्रितार्ये यंत्र. D अतास्त्रि.

(82) [a] ) C विकल्पत्वपरि°. C °स्यानित्य°. D सार्व°. M °च सम°. C वामनः सा°. ADH °तीत तत्त्वम°. C °निधनं. D ऋरजु°. D °स्त्रचो. M अन्तरः भूतार्थ°. [b] ) AH हि भागे. C °प्यशार्थं. M °र्थसत्वं. ADH °माख्याय तज्जायने. M ते ज्ञानते. AH तच्छीलायते. CD °लायेत. C एवभेद. M एव भेदं. ADH नाकर्मा°. HA °क्षिप्तो भेदो. C तदयमवि°. A °तोक्षिभेदावित°. C °ल्पितोऽपि तयो वै°. D °प्तम् । भेदम° M °प्तम् । भेदम°. M °दो पितथ वै. A °पि सतत्वान्यताभ्या. ADH परस्यानि°. C °भ्या मनिनीर्वचनीया पर°. M °स्यादनिर्वानादिसिद्धमोवा°. [c] ) ADH तत्तदेव. C तत एव. AH °न्वाभिधान°. D °व्याभिन त्व. M °व्यादिनतत्व. C °देष्वेत्रोा प्लु°. D °देषु चोा°. M °भेदिष्ववो

**सामान्यं वा विशेषं वा यस्मादाहुर्विशेषवत् ।**
**शब्दास्तस्मादसत्येषु भेदेष्वेव व्यवस्थिताः ॥ ७३ ॥**

(83) [a]) सामान्यमपि सामान्यान्तराद् व्यावृत्तं शब्दैरुच्यते। तथा विशेषो विशेषान्तराद् व्यावृत्त इत्यसत्येषु भेदेष्वेव शब्दाः कृतपदवन्धा नाभिन्नमद्वयं तत्त्वं संस्प्रष्टुं शक्ता इति वितथ एव शाब्दो व्यवहारः। सन्नित्यपि व्यवहारोऽभावप्रतियोगी। [b]) एवं ज्ञेयं प्रमेयमित्यादयोऽपि शब्दाः परिकल्पिताः ज्ञेयादिव्यावृत्तविषया इति सर्वं भेदोपनिपाति शब्दजातम्। तदुक्तं भाष्ये—

" सामान्यमपि यथा विशेषस्तद्वद् "

इति। विशेषवदित्यर्हार्थे वतिः। विशेषमर्हति यदभिधानं तद्विशेषवद्, विशेषो वा यत्रास्तीति मत्वर्थीयः। [c]) सामान्योपहितस्य विशेषस्याभिधानं संभाव्येतेति तन्निवृत्तये विशेषणमेतदिति विशेषेणापि संबध्यते ॥ ७३ ॥

एवं तावन्नीरूपमवस्त्वभावमाश्रित्य भावाभावयोर्विरोधाद्युक्तम्। इदानीं वैशेषिकनयेन सप्तमं पदार्थमभावमाश्रित्याह—

**न ह्यभावस्य सद्भावे भावस्यात्मा प्रहीयते ।**
**न चाभावस्य नास्तित्वे भावस्यात्मा प्रसूयते ॥ ७४ ॥**

(84) भावादर्थान्तरमभाव इति प्रध्वंसस्योपजने किमिति भावो विनश्यति। प्रागभावस्य च व्यावृत्तौ किमिति भावो जायते ॥ ७४ ॥

एतदेव दृष्टान्तेन द्रढयति—

**न शाबलेयस्यास्तित्वं बाहुलेयस्य बाधकम् ।**
**न शाबलेयो नास्तीति बाहुलेयः प्रकल्पते ॥ ७५ ॥**

---

का. ७३. C विनोपवत्. D भेदेष्टं च. C स्थितः.

(83) [a]) CD तया. L om. शब्दैः ... व्यावृत्त इ. ADH कृतसवन्धा. B °पदवद्धा. C °पदवन्धना. AH °न्नमसद्रूप. D °नमङयं. ADH स्पष्टुम. B शक्यत. D शका. C चिंतय. D शक्तो. ADH सदित्यपि. C तैः यदि सन्नापि. B °हरि अ°. [b]) C om. एवं. AH ज्ञेयः. D क्षयः. D rep. (तस्योभ)ऽपि नः स्यात् ... [in the comm. on Kā. 70] ... विधि (प्रतिषेधयोः) in the comm. on Kā. 71. ADH प्रमेय इत्या°. ADH शब्दाः सम्परि°. B ज्ञेयादिप्रवृत्त वि°. B सार्वभेदो°. L सर्वमभेदो°. C अत उक्त. B °र्हार्थो. M °र्हार्थेस्तिः. D तिशेषम°. ADH तद्विशेषो वा. [c]) ADH rep. तद्वदिति विशेषवदित्यर्हार्थे. D ननिवृतये. M वृतवित्तिवृत्तये. C विशेषणमपि. C एव ता°. D ताव निरु°. M तवाभाव°. C वैशिपक°.

का. ७४. ADH न वाभावस्य.

(84) C °दर्थोत्तर°. M °जनने. C विनस्पति. L ins. प्रागभावस्य चावृत्तौ किमिति भावो विनश्यति।

का. ७५. C न शावयो ना°.

(85) [a]) पृथग्भूतयोर्भावयोरसंबन्धयोर्यथा परस्परस्य सत्तासत्ते न प्रयोजिके तथा भावाभावयोरपि तथाभूतयोः स्यादित्यर्थः ।। ७५ ।।

तदेतद्भावादर्थान्तरस्याभावस्य वस्तुत्वेऽभ्युपगम्यमाने दोषजातमित्युपसंहरति—

**अभावो यदि वस्तु स्यात्तत्रेयं स्याद्विचारणा ।**
**ततश्च तदभावेऽपि स्याद्विचार्यमिदं पुनः ।। ७६ ।।**

(86) [a]) सप्तमपदार्थरूपेऽभावस्य वस्तुत्वेऽभ्युपगम्यमाने तत्सन्निधानासन्निधानाभ्यां भावस्यासन्निधानसन्निधाने न युज्येते इतीयं चिन्ता युज्यते । [b]) तथा च वस्तुत्वेऽभावस्य तत्राप्यभावान्तरस्य व्यतिरिक्तस्योदयास्तमययोरभावस्य यथायोगं तौ न स्याताम्, तत्राप्यभावान्तरमित्यनवस्था च स्यादित्यपि वाच्यम् ।। ७६ ।।

यदा पुनर्भावप्रच्युतिर्नीरूप एवाभावो बौद्धदृष्ट्याभ्युपगम्यते तदा—

**अवस्तुत्वादतीतं यद् व्यवहारस्य गोचरम् ।**
**तत्र वस्तुगतो भेदो न निर्वचनमर्हति ।। ७७ ।।**

(87) [a]) तिरोभवति भावो न त्वभावो नाम कश्चिद् व्यतिरिक्तो ज्ञायत इति नये नेदं विचारणीयं न ह्यभावस्य सद्भाव इत्यादि । भावप्रच्युतिरूपत्वादभावस्य कथमवतिष्ठेत । भाव इति नेदं दूषणमवतरति । [b]) प्रागभावव्यावृत्तौ च न भावो जायते अपि तु भवितृरूपत्वादिति तुच्छरूपोऽभावो वास्तवं नानात्वं नार्हति । इत्थं च सर्वव्यवहारातीतोऽसत्त्वान्नीरूपत्वादभावो वास्तवभेदादिनिरूपणासह इति प्रागेवोक्तमुपसंहृतम् ।। ७६ ।।

इदानीं कार्यकारणभावानुपपत्तिं पूर्वोक्तामनूद्य स्वदर्शने विवर्त्तं सिद्धान्तयितुमाह—

**अपदेऽर्थे पदन्यासः कारणस्य न विद्यते ।**
**अथ च प्रागसद्भावः कारणे सति दृश्यते ।। ७८ ।।**

---

(85) [a]) ADH पृथक्भूत°. C ins. एव (before पृथक्°). C om. भावयोः. C °त्तासत्ये. B om. भूतयोर्भावयोर. L तथाभूतयोरपि. ACDH °स्यावस्तुत्वे.

का. ७६. C आभो यदि. B तदभावोऽपि.

(86) [a]) M वस्तुत्वे भावस्य. D भावस्यासन्निधानास°. M °स्यासनिधानस° ADH चिन्ता युज्यते दू°. M तिता. [b]) ADH °त्वे भावस्य. M °त्वाच्चे भावस्य. C यथायोग्यं. C तस्य तत्रा°. ADH °प्रच्युतीनां रू°. C विपयप्रच्युतिनीरूपोभावो. C वुद्धया दृष्टया.

का. ७७. C अवस्तु स्या°. H गोचरः. D वस्तुगमो.

(87) [a]) BL तिरोभावतिरोभावो. D गत्वाभावो. L जायते. M अतिनये. ADH न भावत इति भेदो. M द्भाव इति चेदू°. [b]) °भाववृत्तौ. L कृच्छ्ररू°. A °रूपाभावो. M तत्स्वरूपो भावो. L °स्तवभेदाभेदादि°. D कार्यकारेण°. D मर्वोक्तानूद्य. D स्वदर्शचे.

का. ७८. C अपदार्थे. D कारणास्य. C °सद्भावा. C कारणे स्या.... D दृश्यतो.

**सामान्यं वा विशेषं वा यस्मादाहुर्विशेषवत् ।**
**शब्दास्तस्मादसत्येषु भेदेष्वेव व्यवस्थिताः ॥ ७३ ॥**

(83) [a]) सामान्यमपि सामान्यान्तराद् व्यावृत्तं शब्दैरुच्यते। तथा विशेषो विशेषान्तराद् व्यावृत्त इत्यसत्येषु भेदेष्वेव शब्दाः कृतपदबन्धा नाभिन्नमद्वयं तत्त्वं संस्प्रष्टुं शक्ता इति वितथ एव शाब्दो व्यवहारः। सन्नित्यपि व्यवहारोऽभावप्रतियोगी। [b]) एवं ज्ञेयं प्रमेयमित्यादयोऽपि शब्दाः परिकल्पिताः ज्ञेयादिव्यावृत्तविषया इति सर्वं भेदोपनिपाति शब्दजातम्। तदुक्तं भाष्ये—

" सामान्यमपि यथा विशेषस्तद्वद् "

इति। विशेषवदित्यर्हार्थे वतिः। विशेषमर्हति यदभिधानं तद्विशेषवद्, विशेषो वा यत्रास्तीति मत्वर्थीयः। [c]) सामान्योपहितस्य विशेषस्याभिधानं संभाव्येतेति तन्निवृत्तये विशेषणमेतदिति विशेषेणापि संबध्यते ॥ ७३ ॥

एवं तावन्नीरूपमवस्त्वभावमाश्रित्य भावाभावयोर्विरोधाद्युक्तम्। इदानीं वैशेषिकनयेन सप्तमं पदार्थमभावमाश्रित्याह—

**न ह्यभावस्य सद्भावे भावस्यात्मा प्रहीयते ।**
**न चाभावस्य नास्तित्वे भावस्यात्मा प्रसूयते ॥ ७४ ॥**

(84) भावादर्थान्तरमभाव इति प्रध्वंसस्योपजने किमिति भावो विनश्यति। प्रागभावस्य च व्यावृत्तौ किमिति भावो जायते ॥ ७४ ॥

एतदेव दृष्टान्तेन द्रढयति—

**न शावलेयस्यास्तित्वं वाहुलेयस्य वाधकम् ।**
**न शावलेयो नास्तीति वाहुलेयः प्रकल्पते ॥ ७५ ॥**

---

का. ७३. C विनोपवत्. D भेदेष्टं च. C स्थितः.

(83) [a]) CD तया. L om. शब्दैः ... व्यावृत्त इ. ADH कृतसबन्धा. B °पदवद्धा. C °पदवन्धना. AH °न्नमसद्रूप. D °नमडयं. ADH स्प्रष्टुम. B शक्यतं. D शका. C चितय. D शक्तो. ADH सदित्यपि. C तैः यदि सन्नापि. B °हरि अ°. [b]) C om. एव. AH ज्ञेयः. D क्षयः. D rep. (तस्योग)भिन्नः स्यात् ... [in the comm. on Kā. 70] ... विधि (प्रतिषेधयोः) in the comm. on Kā. 71. ADH प्रमेय इत्या°. ADH शब्दाः सम्परि°. B ज्ञेयादिप्रवृत्त वि°. B सार्वभेदो°. L सर्वमभेदो°. C अत उक्त. B °र्हार्थो. M °र्हार्थेभिः. D तिशेषम°. ADH तद्विशेषो वा. [c]) ADH rep. तद्वदिति विशेषवदित्यर्हार्थे. D ननिवृतये. M वृतवित्तिवृत्तये. C विशेषणमपि. C एव ता°. D ताव निरु°. M तवाभाव°. C वैशिषक°.

का. ७४. ADH न वाभावस्य.

(84) C °दर्थोत्तर°. M °जनने. C विनस्पति. L ins. प्रागभावस्य चावृत्तौ किमिति भावो विनश्यति।

का. ७५. C न शावयो ना°.

जन्मायोगादवस्थातृरूपाभावः। केनचिद्रूपेण जनने तदपेक्षया प्राप्तमसतो जन्म। तथा च तत्राप्यपदोऽर्थः ॥ ७९ ॥

विनाशेऽप्यसत्त्वमेव नीरूपमगोचरो वाचो भावस्येत्याह—

**न चोर्ध्वमस्ति नास्तीति वचनायानिबन्धनम्।**
**अलं स्यादपदस्थानमेतद्वाचः प्रचक्षते ॥ ८० ॥**

(90) [a]) प्रच्युतेःऊर्ध्वं निरन्वयध्वंसादसति भावभागेऽस्ति नास्तीत्यभिधानाय न समर्थं वस्तु। साख्या हि तदानीमप्यस्तीति व्यवहरन्ति। तच्च न युक्तम्। कुतः। **अनिबन्धनं** यतः। [b]) वचने निबन्धनमुपलभ्यमानता। सा च ध्वस्तस्य नास्तीति शब्दागोचरमनिबन्धनमसत्त्वमिति पूर्वापरावस्थयोरव्यवहार्यो भावः ॥ ८० ॥

मध्यावस्थायामेव केवलं दृश्यत इत्याह—

**अत्यद्भुता त्वियं वृत्तिर्यदभागं यदक्रमं।**
**भावानां प्रागभूतानामात्मतत्त्वं प्रकाशते ॥ ८१ ॥**

(91) [a]) सदसत्पक्षभेदेन वास्तवस्य कार्यकारणभावस्य निराकृतत्वादुपपत्तिशून्ययाऽऽश्चर्यभूतया वृत्त्या व्यापारेण कार्यं प्रागदृष्टं निरंशं झटित्येवाक्रमं कस्मिंश्चिन्नियते सति दृश्यत इति प्रतिभासमात्रसारः कार्यकारणभावो वितथो वैकल्पिकोऽविद्यानैर्यगायं विकल्पनात्। [b]) एकस्य तत्त्वादप्रच्युतस्य भेदानुकारेणासत्यविभक्तान्यरूपोपग्राहितारूपविवर्तः परमार्थ इत्यर्थः। **अत्यद्भुतेयं वृत्तिः**। कासावित्याह **यदभागम्** इत्यादि। इत्येवं पदसमन्वयः। यद्वा यस्या वृत्तौ सत्याम् **अभागं** निरंशमत एव **अक्रमं** तत्त्वं भावाना प्रकाशत इति संबन्धः। [c]) सांशत्वे सति क्रमेणोपजने विलंव्य वृत्तेः कारणसामर्थ्यावधारणान्नाश्चर्यमिदं भवेत्। यतस्तु झटित्यपदमक्रममेव सर्वत्रादिमतेऽपि कार्यमाजायतेऽतः कारणव्यापारस्य विचार्यतानुपपत्तेः तथा प्रकाशोऽविद्यावशादाश्चर्यभूतो रूढः ॥ ८१ ॥

---

[c]) C तव च ज°. M जन्मयोमाद. ADH °रूपो भावः. M °पाभावनकश्चिद्. ADH °ननापेक्षया प्राप्तप्रभवो जन्म. D प्राप्तामसवो. AH तथा चात्रा°. C व्यपदार्थः. DM °त्रापदोऽर्थः.

का. ८०. C मस्ती. C वचनानां. C जल स्या°. D अल्पं स्या°. H अलं. L वार्च प्र°.

(90) [a]) C °तिरूर्ध्वं. C निरवयवसारसमिति. AH भावमार्गे. D °मार्गोऽस्ति. M नस्ति. D °धाराय. AD संख्यादि. [b]) D °मुपलभ्दामा°. ADH सा च तस्य. BLM शब्दगोच°. D श दागो°. C °मतिवन्ध°. ADH °मसत्यमिति. AH °हार्यम। D °हार्याम्. M दृश्यते.

का. ८१. C यदभार्व. D °भाव पद क्रमे. B पदक्रमात्.

(91) [a]) D सदृशक्षात्रमे°. AH वासुतस्य. D वासतस्य. M वास्त्ववस्य. D दन्या. C कार्यदृष्टं प्रागदृष्टं. D कार्यप्रागदृष्टं. M °दृष्टि. AH सदित्येवा°. C घटित्ये°. D हुडित्ये°. ADH नियमे सति. C °सारः कारणभा°. ACDH °भावोऽपि तथा वै. M °पितथोवै. B विद्यमानतैर्थ°. [b]) M °कारे सत्यविभक्ता°. C °भक्त्यानि°. AH °हितोरूप. C इत्येव सम°. D प्रत्या वृ° M सत्यान्यभागं. AH °शमत् एवा°. D °मन एवा°. C भाना प्र°. [c]) AH °जनो C °जनने. AH विवर्तव्यावृत्तः. D विलं अ°. C °व्यविगमाना°. ADH तदित्यप°. C द्वटिति. D °त्यदक्रमेव. C जाकार्यायते. C °स्य व्यापा°. C °र्यमाणतानुप°. D विवार्थ°. ADH तथापि.

तथा हि—

विकल्पोत्थापितेनैव सर्वो भावेन लौकिकः ।
मुख्येनेव पदार्थेन व्यवहारो विधीयते ॥ ८२ ॥

(92) [a]) मध्यावस्थाभावि दृश्यमानं रूपमपेक्ष्य पूर्वापरावस्थापरिकल्पनया क्रमिकत्वे सति कार्यकारणभावेन भावाभावरूपतया वाविचारितसिद्धो लोकव्यवहारो रूढः । [b]) एवमन्योऽपि यः कश्चिद् व्यवहारः स सर्वस्तत्त्वतो वहिर्विद्यमानस्य वस्तुनो भिन्नस्याभावादनादिमिथ्याभ्यासवासनावशोपजात एव सावृतस्तत्त्वाध्यवसायादसावृत इवाविद्याप्रवृत्तिरूपे जगति प्ररूढः ॥ [c]) परमार्थतस्तु न भेदो नाम परिदृश्यमानः सत्यः, अपि तु अद्वयमेव तत्त्वम् ॥ ८२ ॥

अविद्यानेत्रैरेवमविद्याख्यतच्छक्तिवशादवधार्यत इत्याह—

भावशक्तिमतश्चैनां मन्यन्ते नित्यवादिनः ।
भावमेव क्रमं प्राहुः न भावादपरः क्रमः ॥ ८३ ॥

(93) [a]) नित्यमद्वयं ब्रह्मतत्त्वं ये वदन्ति ते भावस्य परस्याद्वयस्य ब्रह्मण एवैवंविधामनादिजीवात्मगतां शक्तिं मन्यन्ते । यद्वशात्तिरोधाय तत्त्वमतत्त्वेन भेदेन व्यवहारः क्रमिकः । अक्रमेऽपि ब्रह्मणि भेदावभासनमविद्याकृतम् । तत्रैव क्रमाभासनं कालाख्यस्वातन्त्र्यशक्तिकृतम् । [b]) ते च शक्ती न ब्रह्मणो भावात् परमार्थतो भिन्ने इति स एव तत्त्वत एवं चकास्ति । अन्यस्य तदतिरेकिणो भासमानतानुपपत्तेः । भासमानस्य प्रकाशाव्यतिरेकादप्रकाशस्य तदयोगादित्यन्यत्र निर्णीतम् । [c]) तथा च ब्रह्ममयभावोपधानेन क्रमस्यावभासनाद् व्यवहारे भावव्यतिरिक्तं तस्य न किंचिद्रूपमिति हेतुहेतुमद्भावेन योजनादपौनरुक्त्यम् ॥ ८३ ॥

---

का. ८२. C विकल्पार्थाहितेनैव. D विकल्पोऽर्थो°. C सर्वभा°. L भावो न. ADH मुख्येनैव.

(92) [a]) C मध्यवस्थाभिवि. D °मानरू°. ADH क्रमिकत्वम् । सति. ADH °भावेन भा°. C °सिद्धौ, D °सिद्धां, CD लौकिकव्य°. [b]) AH सर्वो वास्तवतो. D सर्वस्तवतो. AH भिन्नस्य तावदना°, D °न्नस्याः नावाद, C °भ्यासवावानाव°. D °सवासाना°. ADH वृतस्तत्राध्य°, C °दसांप्रत, C °द्यारूपे, C जगदिति, [c]) C अपि तत्वमेव त°, C om. अविद्यानेत्रैरेव, B अविद्याख्यातः श°.

का. ८३. D सैधना. D °वादिनैः.

(93) [a]) ADH भावस्याद्व°. ADH °विधाना°. AD तत्त्वमभे°. L °धायकत्वमभे. A क्रमिकः । क्रमो. ADH ब्रह्मणा. D तत्रेव. L क्रमभा°. [b]) AH °कृतमेव शक्तिः न. D °तजेव श°. AH °न्नेति सैव. ADH तदुत एव वा. ADH जन्यस्य. C °किणे. D °किनो. B °रेकेण. M तासमा°. C तयोगा°. [c]) D °मथभावोयः धानेन. L °दानेन. C °धाने च क्रम्यस्य. C न तस्य किं°. A किं क्रममिति. C °पमस्ति. D हृयमिति. C °दयौनरुक्तम्. D °नरूअं. ADH °द्यमिति. C °द्यतिमि. C प्रतिमानमा°.

अत्र क्रमप्रतियोगि यौगपद्यमपि तथा प्रतिभानमात्रमित्याह—

**क्रमान्न यौगपद्यस्य कश्चिद्भेदोऽस्ति तत्त्वतः ।**
**यथैव भावान्नाभावः कश्चिदन्योऽवसीयते ॥ ८४ ॥**

(94) [a]) एकमेव तत्त्वमविद्यानेत्राणामपारमनवच्छिन्नमशक्यप्रतिभासमिति स्वगतदेशकालपौर्वापर्याध्यारोपेण सक्रममाभाति । पदार्थान्तरसाचिव्येन चाक्रममिति भावतः क्रमाक्रमौ न स्तः । यथा भावाभावावित्युक्तम् । [b]) क्रमाभावो यौगपद्यम् । क्रमश्चोक्तदशा नान्यो भावादित्यभावस्य पूर्वं भावाद् भेदस्य वस्तुत्वस्य च निषेधाद्यौगपद्यमपि तदात्मकं न किंचिदित्यभावदृष्टान्तेन ध्वनति । भावोपधानेन च प्रतीयमानत्वात भावान्तरसाहित्यं भावस्यात्मैव । [c]) तन्न्याय्यम्, न हि साहित्यं नाम सहितादन्यद् विवेकेनावधार्यते ॥ ८४ ॥

ननु क्रमेण कृतं युगपत् कृतमिति भेदेन प्रतीयेते क्रमाक्रमावित्याशङ्क्याह—

**कालस्याप्यपरं कालं निर्दिशन्त्येव लौकिकाः ।**
**न च निर्देशमात्रेण व्यतिरेकोऽनुगम्यते ॥ ८५ ॥**

(95) [a]) अद्य भवोऽद्यतनः कालः श्वो भवः श्वस्तनः काल इति लोके व्यपदेशादविद्यमानोऽद्यतनोऽनद्यतनोऽद्यतनेऽप्यद्यतनोऽस्तीति लड्विधौ भाष्ये वचनादित्येवं समुदायावयवभेदपरिकल्पनया कालतत्त्वस्यैकस्यैवाधाराधेयभेदेन निर्देशो दृष्टः । [b]) न चैतावता वस्तुतः कालो भिद्यते, वैकल्पिकत्वाद् भेदस्य । एवं क्रमाक्रमयोर्व्यतिरेकेण निर्देशेऽपि न तत्त्वतो भावात् परस्परतश्च भेद इत्यर्थः ॥ ८५ ॥

एतदेव पोषयति—

---

का. ८४. C क्रमात द्योग°. D क्रमान्न यो°. D भावात्रा°. D °सीयतो.

(94) [a]) C °त्त्र वि°. L °माभाति. M °ममति. AH °साहित्येन. C सान्निध्येन. D साचित्र्येण. C °दित्यु°. [b]) AH °क्तदशा. ACDH नान्याभा°. ADH वस्तुतत्त्वस्य: AH ध्वनयति. C ध्वनि. L भावान्तरं सा°. [c]) D तं न्या°. C om. हि. C ins. साहितं नाम (before सहिताद्), DH विवेकेन; M °ताद्व्यमद्. BL °दन्यवि°. C °येते क्रमावित्याह. H rep. विवेकेनावधार्यते.

का. ८५. B निर्विशन्त्येव. C लौकिकः.

(95) [a]) CD भावो. C श्वः भवो श्व°. D स्वस्तनः. ADH भेदव्यय° BCL °मानाद्यत°. C om. अनद्यतनो. M घतनप्यद्यतनो. ADH om. अद्यतनेऽप्यद्यतनो. ADH तद्विधौ भावो व°. BL लड्विधौ. C जपिधौ. ADH °भेदे परि°. [b]) C om. चैतावता. C ins. व्यतिरेकेण (after एव). D व्येति°. AH निर्देशेऽपि. C परतश्चारतश्च C ins. भेदाभावे दुःखमरातिवर्गस्य रागादिक्लेशराशेरस्माहः अतद्भाते (after भेदः). ADH योजयति.

**आधारं कल्पयन् बुद्ध्या नाभावे व्यवतिष्ठते ।**
**अवस्तुष्वपि नोत्प्रेक्षा कस्यचित् प्रतिबध्यते ॥ ८६ ॥**

(96) [a]) शत्रोरभावे सुखं सुहृदभावे दुःखमरातिवर्गस्य रागादिक्लेशराशेरनुत्पत्तावभावे निर्वाणं मोक्ष इत्येवमादौ व्यवहारे सप्तम्यन्यथानुपपत्त्या अभावे परिकल्प्याधारशक्तिं सुखाद्याधेयं न कश्चिदवतिष्ठते । [b]) अन्तर्भाविणण्यर्थत्वान्न कश्चिदवस्थापयितुमुत्सहत इत्यर्थः । कल्पयन्नपि वाधारभावं न कश्चिदभावेऽधिकरणभूते स्थितिमाधेयत्वं लभते । न तत्रास्य पदबन्धो वस्तुत', अथ च कल्पयन्तीत्यर्थः । नीरूपस्य सर्वसामर्थ्यविरहलक्षणस्याभावस्याधेयं प्रति स्थित्याधारभावायोगात् । [c]) उत्प्रेक्ष्य त्वाधारभावमेवं व्यपदेशः प्रवर्तते । एवमङ्गुल्यग्रे करियूथशतमास्त इत्यादि चोत्प्रेक्षयाभिधीयमानं दृश्यत इति नास्ति विकल्पानामभूमिः ॥ ८६ ॥

यत एवम्—

**तस्माच्छक्तिविभागेन नित्यः सदसदात्मकः ।**
**एकोऽर्थः शब्दवाच्यत्वे बहुरूपः प्रकाशते ॥ ८७ ॥**

(97) [a]) सर्वपरिकल्पातीतं तत्त्वं समाविष्टं सर्वाभिः शक्तिभिर्वस्तु यथायथं व्यवहारे भावाभावरूपतया तत्तदुपाधिखचितं शब्दाः प्रतिपादयन्तीत्यभावाभिधायिनामपि भावशब्दैस्तुल्यः संबन्धोऽविशेषाच्छब्दानामिति प्रकरणतात्पर्यमुपसंहृतम् । **एक** इति । भेदस्याभावनिरासेन प्रतिषिद्धत्वात् । [b]) अत एव **नित्यः**, अभावाभावत् कार्यकारणभावस्य च निषेधात् । **शब्दवाच्यत्वे** इति । शब्दव्यवहारार्थं निमित्तसप्तम्या प्रयोजनकथनात् । **बहुरूपः** इति क्रमाक्रमादिरूपतया प्रागुक्तयाद्वयस्यैव तत्त्वस्य प्रकाशनात् ॥८७॥

---

का ८६. DH साधारं क°. C एपां नां. D अवस्तु अपि. D कस्य चि व्यति.

(96) [a]) A °राशावुत्साहः आत्मभावे. C °राशेदत्साहः अन्तर्भावे. L °शेदजसत्तावमा°. M क्लेशपरि उत्पत्तावभावे. L निर्यणं. AH सुखाद्यपयेम्. C सुख्याध्यये. M न किंचि°. [b]) L व्याधारभा°. ADH °तिमानाधेय°. C °तिमाधेयं. BL om. न. C तस्यात्र. ADH पदबन्धं. C °संबन्धो. ADH अवकल्पयतीत्यर्थः. BL अधि च कल्प°. [c]) ADH °भावं व्यय. B °क्षया त्वा°. D उत्सःभ्य. L उत्प्रेक्षिताधा°. C rep. त्वाधारभावो. BCLM °र्तते एव. D केरियू°. ADH नोत्प्रेक्षयाभिधानं. ADH °भिरित्यत एवं सामर्थ्यम्.

का. ८७. तिस्मा°. C नित्यं. D मब्दवा°. D बहुः रूपः. C °रूप प्र°.

(97) [a]) CH °तीनसत्वं. D °तीतिं ततत्त्वं. M °तीतं ससमा°. D यथायशं. D तथात्तदुपा°. ADH °धिमविवशब्दाः. C °विचितशब्दार्थ. D °संहृतम. C ins. शब्दव्यवहारर्थनिमि (before भेदस्य). ADH भेदस्य भा°. C °निराशेन. D °द्धत्वानादत. [b]) ADH °त्यो भेदा°. ADH om. च (before निषे°). ADH शब्दवाच्य इति. BL क्रमादिरू°. AH °क्रश्चाद्व°. C °क्तमायस्यैव. D माद्वय°.

[c]) इत्थं च सांवृतोऽयं लोकयात्रासु पदार्थप्रयोगो निरूढ इति तथैवास्मिन् शास्त्रेऽनुगम्यत इत्यविषयास्तार्किकविकल्पा इत्याह—

**व्यवहारश्च लोकस्य पदार्थैः परिकल्पितैः ।**
**शास्त्रे पदार्थः कार्यार्थं लौकिकः प्रविभज्यते ॥ ८८ ॥**

(98) [a]) विचारितमपि तर्कविकल्पैर्भावतत्त्वं न यथाविचारं लोके व्यवहारमवतरति । न हि दर्शनान्तरव्यवस्थितविरुद्धभावरूपानुगमो व्यवहारे । न चाविचारेण यथातत्त्वं पार्यते निश्चयः कर्तुम् । [b]) "रूपणव्यपदेशाभ्या सदृशौ वालपण्डितौ" परस्पराभिप्रायमेलने प्रवर्त्तेते इति गजनिमीलितेनावधार्य पदार्थयाथातथ्यं व्यवहरन्तो लौकिका दृश्यंते । इदं च लौकिकानामेव शब्दानामनुशासनं शास्त्रम् । [c]) तदत्र लोकप्रसिद्धैव पदार्थप्रक्रिया समाश्रयणीयेत्यखण्डाद् वाक्यार्थात् क्रियावचनो धातुः सत्त्वप्रधानानि नामानि, प्रत्यायकः प्रत्यय इत्यादिः शास्त्रीयकार्यप्रसिद्धयर्थं लौकिक एव क्रियाद्रव्यगुणादिलक्षणोऽपोद्धारपदार्थः प्रविभज्यत इति लोकयात्रायामेकयोगक्षेमाः सर्वे शब्दा भावाभावाभिमतार्थविषया इत्यर्थस्य प्रवाहनित्यत्वाच्छब्दोदाहारमात्रत्वाच्च प्रतीतेर्नित्यः शब्दार्थसंवन्ध इति सिद्धम् ॥ ८८ ॥

इति भूतिराजतनयहेलाराजकृते प्रकीर्णप्रकाशे
संबन्धसमुदेशस्तृतीयः ।

---

[c]) C लोकत्रयेपु. D लोकत्रयासु. AH पदार्थो योगरूढ. °र्थो याग इति. D यागरूच्छ. M °र्थप्रविभाग. C °च्छस्त्रेपु गम्य त. D om. नुगम्यत ... °विकल्पाः. AH इत्यविषयाम्रानेन किम् । को विकल्प इत्याह.

का. ८८. D om. व्यवहारश्च ... शास्त्रे. H व्यवहाराश्च. C सास्त्रे. D पुदार्थः. C कायार्थं. CD लौकिक.

(98) [a]) L त्वथावि°. D °विचाधाश्वं. C °तरन्ति. D सवत इति. ADH तर्हि. ADH °रूपतानुग°. ADH व्यवहारः. AH यद्वा वि°. D तद्वा वि°. C न वि°. C न यथाततत्वं. AH पार्थक्यं नि°. [b]) CM रूपेणव्य°. D प्रवर्तते. C जगतिमीलितेन. BL °वश्चीर्य. D om. याथातथ्यं ... तदत्र. L °तथ्यं. C व्यवहारतो लौ°. [c]) AH तदर्थं. C om. वाक्यार्थात्. C °वचने. CDL नामानीति. AH प्रत्याययतीति प्र° D प्रत्यापना प्र°. ADH शासकार्यप्रतिसि°. C एवेति यावद् द्र°. C °णोऽयोद्धा°. D °पोस्वार. C लौकिकया°. C °क्षेमः. M °मात्यमूर्तते. C °वावतिमात्र°. ACDH °दाहरणमा°. C नियः. C °ब्दार्थः स.

# अथ भूयोद्रव्यसमुद्देशः ।

(1) [a]) तदेवं शब्दार्थयोः संबन्धमुक्त्वान्वाख्यानोपयोगी पदार्थः शास्त्रे कार्यार्थं लौकिकः प्रविभज्यत इत्युपक्षिप्तः । [b]) जातिद्रव्ये हि सर्वशब्दानामर्थ इति

" सिद्धे शब्दार्थसंबन्धे "

इत्यत्रार्थनित्यत्वासमर्थनार्थं पूर्वमुक्ते । [c]) इदानीमन्वाख्यानाङ्गमपोद्धारपदार्थो द्रव्यगुणादिकः समुद्देष्टव्य इति प्रविभज्यत इत्युक्ते तस्य कुतः प्रविभाग इत्याह—

**संसर्गरूपात् सम्भूताः संविद्रूपादपोद्धृताः ।**
**शास्त्रे विभक्ता वाक्यार्थात् प्रकृतिप्रत्ययार्थवत् ॥ १ ॥**
**निमित्तभूताः साधुत्वे शास्त्रादनुमितात्मकाः ।**
**केचित् पदार्था वक्ष्यन्ते संक्षेपेण यथागमम् ॥ २ ॥**

(2) [a]) निरंशस्य वाक्यस्यैव वाचकत्वात् तदर्थात् पृथक्त्वेन पदार्था व्यवस्थाप्यन्ते । [b]) स च वाक्यार्थः **संसर्ग** एव **रूपम्** आत्मा यस्य स तथा । [c]) क्रियाकारकतद्विशेषणसंसर्गो वाक्यार्थः । [d]) एतेन च प्रविभागबीजमाह । सर्वथा निरंशे वाक्यार्थे प्रविभजनीयरूपाभावात् । [e]) संसर्गे तु युक्तं संसृष्टार्थप्रविभजनम् । अत एव **सम्भूता** इत्याह । [f]) संसर्गावस्थायां सम्भवन्तो विद्यमाना इत्यर्थः । तेन संसृष्टा विद्यमाना अपोद्धर्तुं शक्यन्ते । [g]) असतामयःशलाकाकल्पानां च परस्परानन्वयेनापोद्धाराभावात् ।

---

(1) [a]) C begins with श्रीमद्वेदर्भिजाति विजयते; H begins with हरिः ओम्; I with हरिश्रीगणपतये नमः। अविघ्नमस्तु. BDHIN om. ब्रह्म. ACDHM व्याख्यानो (for अन्वाख्यानो). D repeats पयोगी. BCIMN ins. पदार्थः after शास्त्र. C लौकिकं. All Mss and A have उपक्षिप्तः but उपक्षिप्तम् would be prefeiable. [b]) C °द्रव्य. C °मर्था° (for मर्थ). D सिद्धि. C ° नियता°. A °मुक्तः. [c]) BN °नी त्व°; H °नीं वा. C °पोधार°. M °दार्थोत्रद्र°. D रति (for इति). I °भज्य इ°.

का. १. C विभक्त्याः. D विभक्तां. D वाक्याथा. C पतिपत्याश्रयार्थवत्. D rep. प्रकृतिप्रत्ययार्थ.

का. २. C °भूता सा°. D साकृत्वे. D °स्त्रावनु°. C °तात्मिकाः. C पदार्थत्.

(2) [a]) C °त्वा त°. C °र्थसपृथक्त्वेन. N °र्था पृ°. C पदार्थ. C °प्यते. [b]) ACH वाक्यार्थसं°. D °क्यार्थसस°. ABDH om. स (before तथा). [c]) C ins. संबन्ध (after कारक). ACHMN °षण (for पण). C °विशेषणं सवन्धो. [d]) DA °भावसंस°. C °रूपताभावात्. DH भावा सं°; I °रूपत्वाभावात्; MN °रूपवात् सस°. [e]) M °संसर्गोति. H युक्त. C °ष्टार्थवि°. B संभूता. C ins. अत एव (after इत्याह). [f]) C संसर्ग° (for संसर्गा). AC संभवतो I स त भवन्तो. C शक्यते. [g]) C अशता°. A असतामिय श°; M असता यः श. B om. कल्पा. C om. च (after °कल्पाना). ABCDHMN परस्परान्वये°. C °न्वयेपोद्धा°. B °न्वये आवापो°.

(3) [a]) **संवित्** संवेदनम्, अपोद्धारबुद्धिस्त्वस्या **रूपम्** आत्मा। [b]) ततो हेतोः **अपोद्धृताः** पृथक्कृताः।

(4) [a]) एतदुक्तं भवति। यद्यपि वाक्यार्थे पदार्थाः कदाचिदपि विवेकेन नावधार्यन्ते तथा च कीदृशः संसर्गः, तस्य भेदपूर्वकत्वादिति, तथापि प्रतिपत्तृभिरनंशस्य युगपत् प्रत्येतुमशक्यत्वात् क्रमेणांशांशिकया संवेदने भेदपूर्वकसंसर्गव्यवहारात् तदभिप्रायेण तथैवापोद्धारबुद्ध्या हि विविच्यन्तेऽर्थाः। [b]) तद्यथा पानकद्रव्ये गुडादिमात्रा विवेकशून्या अप्यास्वादयितृभी रासनविज्ञानविवेकेन पृथक्कृत्य व्यवह्रियन्ते।

(5) [a]) यदा तु रूपशब्द आकारपर्यायस्तदेयं ल्यब्लोपे पञ्चमी। [b]) **संविदः** कल्पनाबुद्धे **रूपम्** आकारमाश्रित्येत्यर्थः।

(6) [a]) वाक्यार्थस्यानंशस्य झटिति प्रत्येतुमशक्तेरन्तरा पदार्थाकारबुद्ध्यो विभ्रमास्तत्तदंशाच्छुरिता इति तद्बुद्धिनिविष्ट एव त्वाकारो वस्त्वित्यध्यवसायात् पदार्थत्वेन परिकल्प्यते पूर्वकक्ष्यायामुपायभूतायाम्। [d]) प्रतिपन्ने तु समस्ते वाक्यार्थे सामान्यमात्रस्य भिन्नस्याभिन्नेन तेन सत्यभूतेन बाधः।

(7) [a]) किमपोद्धारे प्रयोजनमित्याह—**शास्त्रे विभक्ता** इति। प्रत्यासत्त्या व्याकरणशास्त्र इत्यवगन्तव्यम्। [b]) अत्र हि लक्षणवाक्यानामुपायभावेन द्रव्यगुणादयोऽर्था

---

(3) [a]) C सविस°. BHI °बुद्धिस्तस्या°. D मतो (for ततो). C °पोद्धृत्य; D °पोतंघृताः. M °पोद्धार. CD पृथ कृता; M पृथक्तता.

(4) [c]) D त्रवति. D °क्यार्थं; BIN °क्यार्थेऽर्था. H °क्यार्थपदार्था; M om. पदार्थ. M °चिदचि. CDM °र्थते. C किदृशः. D ससर्ग (for संसर्गः). DH °पद्भिरनं. N °रनाशस्य. C °पप्रत्ये°. B °शि तया. A °पूर्वकं; M °पूर्वकः. C °संसर्गे व्य°. M °संसर्गस्य. BIMN त यैव. BM om. हि. [b]) ABDHIN गुणादि°. C शुन्या. ACDHMN अथा° (for अप्या°). CDM °तृभि. ACDH रसन°; M °रासन्न°. ADH °विज्ञानं. D पृथकत्य. M पृथक्कृत्य. ADHIM व्यवह्रियते; C व्याम्रियते.

(5) [a]) ADHM यदा नु. ACDH °शब्दाः. AH °पर्यायाः. M तदेवं. A लब्धोपेया लब्धोपेया च सा; C ल्यब्धोपेयं च मीं; D °यं लद्धोपेयं लब्धोपेया च मा; H लब्धोपेयं च मा. [b]) AM संविद्. C °रुद्धेप (for बुद्धे रूप). A °श्रयतीत्यर्थः; C °श्रित्यतेर्थः; M °श्रित्यत्यर्थः.

(6) [a]) D कटिति. D °र्थकार; C र्थकरा. B °बुद्धयोः; C °घुवयोः. ADH भ्रमाः; BN विभ्रम. A तत्र दशाच्छतरीतिः; C तव दशाच्छुरिता; D तत्र दशाच्छरिति रीतिः, H तत्र दशाच्छरिती; N तदं शाच्छुरिता. C om. तत्. CI om. तु. C om. आकारो. A द्वारं (for वस्तु); D द्वरित्वत्य (for वस्त्वित्य). B °कल्प्यन्ते; C °कल्पते. B तत्पूर्व°. A °कक्षा°; D °कन्सा. C °भूतायाः. [b]) C °पते तत् (for पन्ने तु). A भिन्नेन सत्यभूतेन. D भिनेन सत्य°. D बाध.

(7) [a]) B °द्धार प्र°; D °धारे प्र°. D शस्त्रे. M °सत्त्या. C °त्येवगन्तव्य; DH इत्यवमन्तव्य. I om. हि. C °वाक्यना°. B °मुपायेन. C om. द्रव्य. A °गुणादेर्येऽर्थाः; D °गुणा-

विषयविभागेनोपात्ता इति वाक्यार्थादपोद्धार एतत् प्रयोजनं लक्षणं यथाविभागं नियतविषयमवतिष्ठतामिति ।

(8) तथा हि–उपलक्षणत्वेनार्थानामङ्गभावः शास्त्रे समाम्नातो न विधेयत्वेन, "अर्थानादेशनात्" (M. Bhā. on P 2.1.1.) इति लोकप्रसिद्धमर्थमनूद्य स्वरादिसंस्कारायोपदेशः ।

(9) [a]) **प्रकृतिप्रत्ययार्थवत्** इति । प्रकृतिप्रत्यययोर्नामाख्यातपदविषययोः स्वार्थोऽत्र काल्पनिकः । [b]) तेन यथा निरंशात् पदार्थात् प्रकृत्यर्थः प्रत्ययार्थश्चापोद्धारबुद्धयान्वयव्यतिरेकाभ्या पदवादिभिरपोद्ध्रियते तथा वाक्यवादिभिरखण्डाद् वाक्यार्थात् पदार्थ इत्युभयत्राप्यपोद्धारः समान इत्यर्थः ।

(10) [a]) **निमित्तभूता** इति । यतस्तेषां निमित्तभावः शब्दसाधुत्वविषयोऽतो **विभक्ता** इत्यर्थः । [b]) ते चार्था द्विविधाः । लोकप्रसिद्धाः वैशेषिकादिशास्त्रपरिभाषिताश्च । [c]) तत्र लोकप्रसिद्धाः पशुरपत्यं देवतेत्यादयः । ते चेह प्रसिद्धत्वादेव न परिभाष्यन्ते । [d]) ये तु शास्त्रान्तरे परिभाषितास्ते स्वनिकायव्यवस्थया लक्ष्यन्त इत्याह ।

(11) [a]) **केचित् एव शास्त्रादनुमितात्मका** इति । शास्त्रादस्मादेव प्रत्यासत्तेः व्याकरणाख्यान्न वैशेषिकादेः । अनुमानेनाधिगत **आत्मा** स्वभावो लक्षणं येषामित्यर्थः । [b]) तथा ह्येकशेषारम्भाद् भेद्यत्वं द्रव्यलक्षणमनुमितम् । द्रव्याणां प्राधान्येन वाच्यत्वे शब्दभेदप्रसक्तेस्तदारंभस्यार्थवत्त्वात् ।

---

देर्यथा. ABHIN °भागेनो ; C °भाभोनोपाता. D °भागेनापात्रा. C °र्थादपोद्धार; D थोदपोद्धार; M °र्थदपोद्धारण. B एकप्र° ; I एतं प्र ; M तत् प्र°. C °योजन. C लक्षण. BC om. विषय (after नियत ). C °माव° ( for °मव° ).

(8) M अङ्गाङ्गिभावः. D °स्नातो ( for म्नातो ). D °अनूप. D खारादि. BD °पदेश.

(9) [a]) ADH om. °पद° ( before विषय ). C °विपयोः. B स्वार्थेऽत्र. [b]) D पदार्थाः. C प्रकृत्यर्थ°. ADH प्रत्ययश्च. C om. प्रत्यय. ACDH om. अपोद्धारबुद्धया. M °पोरबुद्धयः. M पदयादि°. A °उभयाशय्य. D °उभयात्राप्य. D °उभयत्राप्य. M इतत्याह ( for इत्यर्थः ).

(10) [a]) ADHMN यस्तेषा. CH विपयतो; M विपयोनो. B इति ( for इत्यर्थः ) [b]) D परिभापि°. M °एभिरिभापिताश्च. [c]) C °तार्थ ( for °ताश्च ). B ins. इति ( after परिभापिताश्च ). D पशुरपत्य. C देवृते°. N om. इह ( after च ) . C परिभापन्ते. [d]) C एत्तु ; D येन ( for ये तु ). A तेऽपि ( for ते स्व° ) AD कार्य ( for स्वनिकाय° ) B नियत ( for निकाय ). C °व्यवस्थाया. B लक्ष्यत.

(11) [a]) C केच्चिदेय ; IM केच्चिदेवे. D मिताका ; M °तार्थका. C °दस्व्यापनादेव ; D °दस्व्यादेव. B प्रत्यासत्त्या. M प्रसत्तेः. M वेशे°. ADH °नाभिगत. C आत्म स्व°. [b]) C तथाप्ये° ; D तथो ह्ये°. C °द्भैद्यत ( for भेद्यत्व ). D °वेद ( for भेद ). C °प्रशक्तेः. ACDH °स्यार्थत्वात.

[c]) "यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ" (Vā. P. 5.1.119)

इति वाक्यकारवचनाद् आश्रितत्वं गुणलक्षणमनुमितम् ।

(12) [a]) जातिरपि भावप्रत्ययाभिधेयेति गुणोऽसावेवमुपपद्यते । [b]) तथा

"वोतो गुणवचनात्" (P. 4.1.44)

इति गुणमुक्तवान् गुणवचन इति गुणस्य भूतपूर्वत्वेन द्रव्ये प्रत्याय्येऽभिधानं विशेषणत्वे सति कल्पते ।

(13) कालस्यापि क्रियात्मकत्वलक्षणं भूते वर्तमाने भविष्यतीति चैषा धात्वर्थोपाधित्वेन विज्ञायते ।

(14) [a]) संख्यायाश्च भेदगणनात्मकत्वं

"जात्याख्यायामेकस्मिन्" (P. 1.2.58)

इति वचनादवसीयते । [b]) वैशेषिकप्रसिद्धाया गुणत्वेन द्रव्यप्रतिनियमात् स्त्रिया पुंसि नपुंसक इति सामान्येन शब्दान्वाख्यानेऽर्थस्याङ्गभावापादनात् संस्त्यानप्रसवस्थितयो लिङ्गलक्षणमनुमीयते । [c]) न हि खट्वादीनां लौकिकं स्त्रीत्वं शण्डकादीनां च पुंस्त्वं कुण्डादीनां च नपुंसकत्वं सम्भवति ।

(15) [a]) शक्तिः साधनं न द्रव्यमिति शेषव्यवहारात्, कर्मकर्तृत्वोपगमात्, विभक्त्यर्थेऽव्ययीभाववचनाच्चानुमीयते । [b]) द्रव्यस्य ह्येकस्वभावत्वात् साधनत्वे शेषभावः

---

[c]) N गुणस्या द्रव्यं°; I गुण भावा. B om. हि. N om. हि भावात्. H भावा द्रव्ये. D °वेशक्रुद°. D त्वत् ल°. C वाक्यकारकव.

(12) [a]) CM गुणेऽसा; M गुणवेव°. [b]) ACDHIM गुणयुक्तवान्. I repeats भूत. D °पूर्वत्वन. A प्रत्यार्था°. C प्रत्ययोभि°. C °धानवि°. I विशेषणत्वेन. C कल्प्यते.

(13) C कालस्यावि; D कोलस्यापि. BCN °त्मकत्वं लक्षण; B °यात्मत्वं ल°. C चैपा त्वर्थो°. D र्थायाधि°.

(14) [a]) A भेदानात्मकत्वं; B °नात्मत्वं. C °गुणनात्मकं. D °मणनात्म°. [b]) C °प्रसिद्धया वा. D गुणचेन. ADH द्रव्यं प्रति°; C द्रव्येण. N °नियमाः. A स्त्रियाः. A पूर्वं. DH पूर्वे. ADHN ins. स (before नपुंसक). ADI नपुसकमिति. C °सक इमिति च. D °सकं दः नि. C सामान्ये च. N सामान्य. ABHI शब्दाख्याने. D °च्छब्दाख्यो. C °र्थस्यागभाव°. ACDHN °भावोपादान°; M °भावोत्पादन°. A सज्ञाविशेषणयोः. D सस्माप्रविस्थि°. H संस्मात् प्रविस्थित°. I °सर्वाश्रितयो. D लक्षण नतु°. DI °मीयन्ते; M °मेयन्ते. [c]) AH स्वाद्वादीना. C खड्ड द्वादीना. D स्वद्वा°. C लौकिकत्व. AH गण्डदीना; B पाण्डतादीना; C खण्डकाक्षिना. D डाण्डाक्षिनां; I शण्डिकाक्षिना; M शण्डकादाना. CD मंस्त्वं. D कुण्डदीनी. D च पुसकत्व.

(15) [a]) B साधनात्. ADHM om. न. C कर्तृकर्मकर्तृत्वो. C विकल्पार्थे. D °वचना वा. [b]) D ह्यैक°. BN विशेष (for शेष). ABDH om. कर्म. D नैप°.

कर्मकर्तृभावश्च नोपपद्यते । [c]) विभक्त्यर्थे च द्रव्यस्यैव वृत्तेरधिस्त्रीति स्त्रीशब्दप्रयोगाभावात् कस्य केन समासः ।

(16) [a]) उपसर्गाच्छन्दसि धात्वर्थ इति चार्थग्रहणं लिङ्गसंख्यावतो द्रव्यस्य प्रतिपत्त्यर्थं तस्यासाधनत्वमावेदयते । [b]) अन्यथा साधन इत्येवोच्येत किमनेन धातुकृतोऽर्थो धात्वर्थ इति ।

(17) पुरुषोपग्रहयोस्तु पूर्वाचार्यव्यवहारादेव लक्षणप्रसिद्धिः ।

(18) दिक्क्रिये तु लोकप्रसिद्धे एव वा शास्त्रेऽपि पूर्वादीनां व्यवस्थायामिति विशेषणात्पदार्थोपाधित्वं तल्लक्षणमनुमीयते ।

(19) क्रियापि भूवादिवार्तिके भाष्ये पूर्वापरीभूता साध्यस्वभावानुमानगम्या लक्षिता ।

(20) [a]) **पदार्था** इति । यद्यपि संसृष्टानामेव सर्वथा भावस्तथाप्यपोद्धृताः । अथैकैकस्य पदस्य गुणप्रधानभूता बहवोऽर्थाः । [b]) तद्यथाख्यातस्य क्रियाकालसाधनसंख्यापुरुषोपग्रहाः, नामपदस्यापि द्रव्यलिङ्गसंख्यासाधनानि क्रिया काल इत्यादि ।

(21) पदवाच्यत्वेन वा पदार्थतोपपत्तिः । केवलानां पचत्यादिपदवाच्यत्वाभावात् ।

(22) '**यथागमम्**' इति । यादृशो वैयाकरणानामागमस्तमनुल्लंघ्य । व्याख्यातृणामुपदेशपारम्पर्यानतिक्रमेण यस्य पदार्थस्य यस्मिन्नन्वाख्यानेऽङ्गभावः स कथ्यत इत्यर्थः ॥ १.२॥

---

[c]) D विभक्त्यर्थे व. M द्रव्यवस्यैव. N द्रव्येऽव्ययस्यैव. C अतिस्त्री स्त्री. D अधिस्त्री शब्द. C °प्रयोगात् मा°. D °भावात्कास्य.

(16) [a]) C उपसगा. D उपसर्गा°: च्छ°. A इत्यत्रार्थ°. C इति यार्थ. D इति चार्थग°; M इति वार्थ°. A तस्यावेदने तत्त्वमावेद्यते; C °धनत्वे मावेदयते. D °धनमावेदयते. H °स्यावेदनत्वमावेहयते. [b]) AD सधन. BN इत्येवोच्यते. C इत्येतद्वाच्ये; D इत्येवाच्येन.

(17) B पूर्वाचार°. D पूर्वाचार्ये°. ADI. °प्रसिद्धिश्च. M °सिद्धि.

(18) ACDI om. दिक्. C क्रि ते. C om. शास्त्रेऽपि. D om. ऽपि. C °पाधिरूपं; IM °पाधिरूपत्वं.

(19) A क्रियाभिर्भू; D क्रियाभिभू°; M क्रियाविभूता°. C °नुगम्यमानम्या ल°.

(20) [a]) B om. पदार्थाः; D repeats पदार्था इति. D भाव तथा. M भावव्यपो°. BN °पोद्धृत्य. B अप्ये कस्य; CI √ अप्ये कैकस्य. D यदश्या गु°. M गुणाप्र°. A °भूता एवार्थाः. D °भूता एवो°. M बहवो स्य. [b]) C °पग्रहः. C °स्योपाधिलिङ्ग°. ADI °संख्याः सा°.

(21) C °पतिः (for °पत्तिः). C °पंचत्या.

(22) H तथाग°. M °निति (for °म् इति). C °मनुल°. H तमुल्लंघ्य. ACDH पारम्पर्याति°. M °पारम्पर्यमिति°. A यस्मिन् व्या°; C यस्मिन्नेव व्याख्यानेंग°. D यस्मिन्न व्या°.

(23) तत्र गुणादीनां द्रव्यपरतन्त्रत्वात् प्रथमं तदाश्रयं द्रव्यं लक्षयति ।

**वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते ।**
**द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः ॥ ३ ॥**

(24) इह सर्वनाम्नां द्वयी गतिः । वस्तुमात्राभिधायिनः केचिद् यथा सर्वादयः । विशिष्टवस्तुवाचकाश्चान्ये यथान्यतरादयः ।

(25) [a]) तत्र पूर्वैर्द्रव्यं लक्ष्यते । तथा हि—इदं तदिति सर्वनामप्रत्यवमर्शयोग्यं द्रव्यम् । [b]) इदमिति प्रत्यक्षार्थवाचकम्, तदिति प्रमाणान्तरावगतपरोक्षार्थाभिधानम्, तेन प्रत्यक्षपरोक्षार्थाकारपरामर्शेन वस्तुमात्रवाचित्वमिदंतदोरुपादानेन सर्वनाम्नामुक्तं भवति । [c]) तथा च प्रत्यक्षपरोक्षाकारभेदावधीरणेन वस्तुमात्रं तद्वाच्यं द्रव्यं लक्षितं भवति ।

(26) [a]) प्रतिपिण्डं ह्यपरिमितस्वभावो द्रव्याणामशक्यो लक्षयितुमिति सर्वद्रव्यसाधारणलक्षणमेवमुच्यते, वस्तुरूपतायाः सर्वत्र भावात् । [b]) एतदेवं निरुक्तकारेणायुक्तम् ।

"अद इति यत् प्रतीयते तद् द्रव्यम्"

इति ।

(27) [a]) द्वितीयमपि विशेषलक्षणमाह—**भेद्यत्वेन विवक्षित** इति । सामान्यादिभिरुपाधिभिरवच्छेद्यत्वेन विशेष्यत्वेन वक्तुमभिप्रेतमित्यर्थः । [b]) विवक्षितग्रहणेन

---

(23) C तदाश्रयद्रव्य. M तदय द्रव्यं.

का. ३. C भद्त्वेन. D भोद्यत्वेन.

(24) D इवं (for इह). C °नाम्नामिय. M °नाम्नामिती. I °भिधाविनः. D °काश्चान्दो.

(25) [a]) D पूर्वं द्र°. D तथासद. D सार्वनोम. D om. प्रत्यवमर्श ... द्रव्यम्. C ins. यत द्रव्यं द्रव्यं तत् (after द्रव्यम्). [b]) C परोक्षार्थभि°. C °मात्रावा°. M °वाचित्वे. C °रुपादानं. M °न्तदोकपादात. D °मुक्त भ°. M °युक्तं भ°. [c]) ACD °वधारणेन. B °वीरणमेव. C वस्तुमात्र; B वस्तुवाच्यं (for तद्वाच्यं); H यद्वाच्यं. BN om. द्रव्यं. I om. लक्षितं.

(26) [a]) A प्रतिपिण्डस्वभावरूपतया स्वभावो; B प्रतिपिण्ड हि अपरिमित°. C प्रतिपिण्ड ह्यपरिमित°. D प्रतिपिण्ड ह्यमरूपनस्व°. H प्रतिपिण्ड ह्यमरूपतया स्व°. M प्रतिपिण्डं ह्यपरिमितः स्व°. DIM °साधारणं ल°. C लक्षणमेव. N वस्तुतायाः. [b]) भावा एतरेव. ADHI अंत. C त द्रव्यम्.

(27) [a]) BI विशेपमाह. B विवक्ष्यत. DH °न्याधिनिरु. C °मिरवच्छद्यश्वे तद्वि°. A वस्तु°. BCIMN °भिप्रेतः. D °भिप्रातं.

न वस्त्वर्थस्येदं लक्षणमपि तु शब्दार्थस्येत्याह । [c]) तथा च जात्यादिरपि विशेष्यत्वेन चेद् विवक्षितस्तदा द्रव्यमिति तीर्थान्तरीयद्रव्यलक्षणानादरात् व्याडिदर्शनेन सार्वत्रिकी द्रव्यपदार्थव्यवस्था सिद्ध्यति ।

(28) [a]) यथा वाजप्यायनदर्शने जातिरन्वितप्रत्ययनिमित्तं सर्वशब्दानामर्थः । क्रियास्वप्यन्विताव‌भासप्रत्ययान्यथानुपपत्त्या जातिसिद्धिः । [b]) कथमन्यथा प्रत्यवस्थं पचतीत्यभिन्नः प्रत्ययः स्यात् । [c]) विक्लेदस्यैव पचत्यर्थत्वेऽधिश्रयणादीनां सामर्थ्यगम्यत्वे शब्दार्थत्वाभावात् देवदत्तस्य कर्तृत्वं न स्यात् । न हि तद्व्यापारोऽधिश्रयणादिर्धातुवाच्यः ।

(29) [a]) सामर्थ्यगम्ये च लकारवाच्यस्य कर्तुर्व्यापारे समन्वयाभावः । [b]) इत्थं च विक्लित्तेरेव धातुवाच्यत्वात्तत्रौदनः कर्मकर्तृवत् कर्ता स्यात्, न कदाचिदपि कर्म । [c]) स चापि विक्लेदोऽन्त्यक्षणरूपोऽक्रमो न पचिः, आश्रितपौर्वापर्यस्यैवार्थस्य क्रियात्वात् । [d]) इत्थमधिश्रयणादिरपि तत्रानुप्रविशत्येव । तावन्मात्रेऽपि च पचतीति प्रत्ययोत्पत्तेरिति प्रतिक्षणमभिन्नप्रत्ययावसेया क्रियाजातिरङ्गीकार्या ।

(30) [a]) एवं भ्रम्यादिक्रियाक्षणव्यङ्ग्या भ्रमणत्वादिजातिरपि ग्राह्या । [b]) तत्राप्युपक्रम एव विशिष्टेच्छादिकारणजन्यकर्मक्षणवैलक्षण्यात् सादृश्याद् दुरवधारान्नि-

---

[b]) A °णेन च नार्थस्येद. C वस्त्वर्थस्येन; D वस्वर्थ°. B °त्याशङ्कयाह. [c]) C °रवि शेष्य°. C °क्षित. BD °नादरः. H °व्यादेशे. A व्याप्तदर्श°. BN °ःयाळि°. D ध्यानि..H ष्यानि.

(28) [a]) C °दर्शनेन. D वोजप्या°. C °न्वत प्र°. A अपशब्दाना°. C °मित्रा सर्व°. DHN °मित्तसर्व. B क्रियास्वन्वित°. C °न्ययिताव°; M °व्यभाव. D °पन्या जा°. C जाप्तसि°. IM °सिद्धेः. [b]) C °मन्यवथा. A प्राप्त्यवस्थाया; D प्रायवस्थ. I °वस्था. A पचत्यर्थमिन्न. H °वचनात् प्र°. C °भिन्न. I भिन्ना प्र°. C °त्ययनिमित्त स्या°. D °प्रत्यय स्या. [c]) IMN विक्लेदनस्यैव. D om. विक्लेद ... न स्यात्. C °श्रयणा दी. AHM °मर्थ्य गम्यते. C शब्दात्वर्था. C °भावादेव कर्तृत्वं. AH °भावाद् देवदत्तकर्तृत्वं. C °व्यापाराधिश्र°. D अयणादि.

(29) [a]) A °गमे च. C °गम्यै. C °वाचस्य. ABDHIN कर्तृव्यापारे. M °व्यापारै. C समन्वयाः भा°. [b]) A विक्ल°. C तिक्लित्ते°. D विक्लित्ति°. C वाज्यधातुत्वं. C °त्रोदनाः. [c]) C °क्लित्तेर्नात्यैत°. D °क्लेदाशोन्त्य°. M °क्लेदोनोत्य°. ABCDH °न्त्यलक्षण°. A नापि निरा°. B न परिचिरा°. C अविचारा°. D न पिविरा°. M न व चिरा°. B °स्यैव क्रि; C °पर्यर्थस्यैवार्थस्य. M °पर्यास्यैवार्थ°. [d]) BN om. इत्थं. C इत्थ. M इत्थं च. BCI om. च (before पचेतोति). C प्रचती°. BM °योत्पत्तिरिति. A °लक्षणं भि°. B °क्षणप्रत्य°. DH प्रतिक्षणभिन्न°. C °वशया. D °वशेया; M om. वसेया. C om. क्रिया.

(30) [a]) ABCDHI °लक्षण°. C भ्रम्यादि°. D °क्रिपी°. M ग्राम्यादि°. C °भित्यङ्गा. IM °भिवङ्गया. M °त्रमणा°. [b]) C °प्यति (for प्युप°). C विशिष्टशादि°; M °शिष्टेच्छादि°. B °दिकरण°. B °कर्मादिलक्षण°. N °कमादिक्ष°. C om. सादृश्यात्. DN °सादृश्या. M सादृवदु°. A °धारमिति तत्सा°. C दुवधारा. D दुरवधारणानि. H °धारणा नितत्सा; N °दुराधारा. A °व्याक्तिः; D °व्यक्ते.

यतसामान्याभिव्यक्तेः। [c]) तथा हि—क्रमवतामपि क्षणानां स्पष्टास्पष्टत्वेन जातेरभिव्यंजकत्वम्। [d]) व्यक्तिद्वारकश्च साधनसंबन्धः, तस्याः साध्यत्वाज्जातेर्नित्यत्वेऽपि, यथा जातेर्दोहाभावे व्यक्तिद्वारकः क्रियासंबन्धो गौर्दुह्यतामिति।

(31) [a]) अस्तिक्रियायाश्च साधनभेदात् कालभेदाच्च भेदेऽभिन्नप्रत्ययनिमित्तमपरं सामान्यं न विरुध्यते। [b]) नित्यत्वेऽपि च सामान्यस्य व्यक्तिनिष्पत्तौ फलदानसामर्थ्यमिति यजेतेति व्यक्तिनिष्पादनार्था चोदनार्थवती। [c]) विनश्यत्यपक्षीयत इत्यत्र तिरोधानमपक्षयश्च क्रियाजातेराश्रयोऽस्तु, तथैव शब्देनावसीयमानत्वात्। [d]) शब्दार्थस्य चेहार्थत्वात्। शिष्टं क्रियाजातिसमर्थनं पूर्वमेव विहितमित्येवं द्रव्यपदार्थस्यापि सार्वत्रिकी व्यवस्थास्मिन् द्रव्यलक्षणे सत्युपपद्यते।

(32) [a]) तथा ह्याख्यातस्यापि द्रव्यमेव साधनस्वभावं वाच्यम्। क्रियाप्राधान्येऽपि गुणभूतस्य तस्य वाच्यत्वोपगमात्। अन्यथा किमपेक्षं प्राधान्यं स्यात्। [b]) तथा च व्यापाराविष्टं तदेव प्राधान्येन वाच्यमस्तु। [c]) दर्शनान्तरेऽपि हि न सर्वथा गुणभूतत्वेन तिरोभावोऽस्य वृत्ताविवोपसर्जनपदार्थस्य, देवदत्तः पचतीति सामानाधिकरण्याभावप्रसङ्गादिति परं प्राधान्यमेव सामानाधिकरण्यान्यथानुपपत्त्यास्तु। [d]) सर्वनामप्रत्यवमर्शयोग्यत्वं त्वयं पचतीति एवं दृश्यत एव। भेद्यत्वमपि साधुत्वादिस्वविशेषणापेक्षया समस्त्येव। [e]) लक्षणानां च साम्प्रतिकव्यापारानपेक्षणात् भेदयोग्यता भेद्यत्वमत्र।

---

[c]) C तथापि. D क्रमयता°. ACDH लक्षणाना. B स्पष्टत्वेन. C स्पष्टास्पष्टात्वेन. ADI °भिपजकत्वं. D °जकत्वां. [d]) AI क्रिया (for यथा). C °ज्जातेः. ACDH देहाभा°. M °भावेऽपि. ADH °द्वारः. N om. गौः.

(31) [a]) ACDH भेदभिन्न°. M भेदोभिन्न°. C अपरसामान्यं. B °मान्याञ्च. C सामान्ये न. D सामान्य न. M °मान्य गवि°. DH विरुध्येत. [b]) H सामान्य (for सामान्यस्य). ACDH ins. प्रति (before व्यक्ति). M वक्ति°. I व्यति°. H ins. इति (after अर्थवती). [c]) B विनश्यपक्षीय इ°. D इत्ययत (for इत्यत्र). M त्रचर (for इत्यत्र). B ins. च (after इत्यत्र). D विरो° (for तिरो°). N °श्रयास्तु. A शब्दनात् (for शब्देन). C शब्दर्ण. [d]) ADH om. शब्दार्थस्य ... उपपद्यते. B चेत् नार्थत्वा. C °स्या यागार्थत्वात्. N चोर्थत्वा. C शिष्ट (for शिष्ट). C °र्थमर्गं (for °र्थनं). C °विहिति° (for विहित°). C om. °स्मिन्.

(32) [a]) ADH om. तथा हि ... गुणभू°. BN तर्हि (for तथा हि). C तथा (for तथा हि). I तथाह. M तथा च. C ध्यानस्यापि. C ins. साध्य (after द्रव्य). C साधनार्थभाव (for साधनस्वभाव). M साधनत्वं. C व्यापत्वो°. [b]) AD om. प्राधान्येन. [c]) C दर्शया°. D दर्शनानन्तरे. C °भावो स्यो. ACDHN वृत्तावपि चो°. D °पदार्थस्या. ADHM भवतीति. M °ण्यभाव. N पारं. [d]) C सर्वथानाम°. A °योगत्वे च संशयः; A °योग्य च संशयः; D °योग्यत्व च संशयः. I °ग्यत्वे च य प°. M °ग्यत्वं तु यः प°. C एवममेद्यत्व°. D एवे भेद्य°. ADH साकत्वादिष्वविशेषणाये°. C साकर्यत्वादिति लक्षणापे°.
[e]) B om. लक्षणाना ... पेक्षणात्. D सनिकव्या° M °तिकव्यवहारा°. C °क्षणाभेदयो. D °णाद्भदयो°.

[f]) एवमास्यते स्थीयते इति किमादिभिः परामर्शात् सुखमित्येवमादिभिश्च विशेष्यत्वाद् द्रव्यत्वमित्याख्यातार्थोऽपि व्याडिदर्शने द्रव्यम् ।

(33) [a]) ननु च क्रियारूपस्यैव भाव्यमानस्य प्रतीतेर्निष्पन्नानिष्पन्नयोश्च विरोधाद्भावनावचनास्तिङः, अर्थसामर्थ्याद् द्रव्यप्रतिपत्तिः सामर्थ्यलभ्या, न शब्दार्थ इति मीमांसकाः । [b]) असदेतत् । अन्वयव्यतिरेकाभ्यां धातोरेव भावनावचनत्वात् । प्रत्ययस्य च साधनाभिधायित्वात्, साध्यसाधनभावेन सिद्धासिद्धयोरप्यस्ति समन्वयः । [c]) तथा च प्रकृतिप्रत्यययोः समभिव्याहारः । अन्यथा सामर्थ्यलभ्येन कः समन्वयः । [d]) प्रतीयते च क्रियाविशिष्टः कर्तेति कथं सामर्थ्यलभ्य इति वैयाकरणानां साधनाभिधानं पर्यवसितविवादमेव । [e]) साधनं च शक्तं द्रव्यं न केवला शक्तिरिति द्रव्यार्थता सिद्धा ।

(34) [a]) चादयोऽपि द्रव्यक्रियात्मभूतसमुच्चयादिद्योतनाद् द्रव्यवचनाः क्रियावचना वा । [b]) तेन तदर्थस्यापि तथैव व्यक्त्याकृतिविकल्पः । गुणा अपि सामान्यविशिष्टा उच्यमाना द्रव्यं पदार्थ इत्येकशेषं रूपादयो भजन्ते । [c]) तथा समानाधिकरणेन समानेन द्रव्येणेति व्याख्यायमाने गुणेनापि समासो भवति सर्वगन्ध एकरस इति ।

(35) [a]) नन्वेवं

'विप्रतिषिद्धं चानधिकरणवाचि ।' (P. 2.4.13.)

इत्यत्राप्यधिकरणं द्रव्यमिति शीतोष्णं सुखदुःखमित्येकवद्भावः कथमुदाहृतः । [b]) शीतादीनामनेन लक्षणेन द्रव्यवचनत्वादनधिकरणवाचीति पर्युदासप्राप्तेः ।

---

[f]) BN °मस्यते. D °मास्येत ; BN om. स्थीयते. C स्थियत. B क्रियादिभिः. ADH मुखभि°. IM °नित्यादिभिश्च. D विशेष्ये त्वा. ADH द्रव्यमि°. C °मित्वाख्या°. DH व्याणि°. M व्यालि°. N व्याळि°.

(33) [a]) M °रूपस्यव. M भामानस्य. ADHN °वचनात्. ADH तिव्. C °चनाच्चनास्त्यर्थ°. M द्रव्यवृत्तिः. B °लभ्याह. CM °नभ्यो. D तति मी°. [b]) C °रेकोभ्यां. DH धातुरेव. C भाववचन°. H °वचना प्र°. [c]) C यथा ( for तथा ). D प्रकनि°. B °व्यवहारः, AH सामर्थ्येन लभ्ये. D सामर्थ्येन लभ्य का. [d]) C कथेति. BIM °लभ्यतेति, C °र्थ्यं लभ्येतेति, DN °लभ्येति. M °विवादम् । सा°. [e]) D शक्तं. AD सिद्धौ.

(34) [a]) ADH चाक्ष्यो. B °क्रियात्मसमु°. B °द्योतका. AD °द्योतना. M °यावच वा. [b]) ADH पदार्थस्यापि. A व्यक्त्याव्यक्तिर्विकल्पः. C व्यक्त्या तथैव व्यवस्याकृ°. M व्यक्तिवि°. A गुणोऽपि. A °विशिष्ट°. A °मानो. ADH द्रव्यपदा°. ACH °त्येकशषरूपा. ACH लक्ष्यन्ते. D लक्षतौ. [c]) M सामानाधिकरण्येन. C सामानान. D द्रव्येगेति. A व्याख्यातम् । समानेन. D गुणेनीपि.

(35) [a]) C °प्यधिद्रव्यकरणमिति. D om. द्रव्यमिनि ... दाहृतः. M °त्येतत् कथ°. M °हृतम्. [b]) D om शीता° ... णेन. ADH पर्युदासो न प्राप्नोति. BN प्रतिषेधप्राप्तेः.

(36) [a]) अत्रोच्यते । सुवन्तावयवस्य द्वन्द्वस्यैकवद्भावविधानात् सुवन्तस्य च सर्वस्य जात्युपहितद्रव्यवचनत्वेनानधिकरणवाचीति प्रतिषेधः सार्वत्रिकः स्यादिति विधेर्निर्विषयत्वमायातमिति विधिसामर्थ्यात् प्रतिषेधः प्रसिद्धद्रव्यविषयो विज्ञायते शीतोष्णे उदके इति । [b]) प्रसिद्धं हि लोके क्रियावद् गुणवद् समवायिकारणं द्रव्यमिति तद्वाच्येव पर्युदस्यते । [c]) तथा च शीतोष्णादेरुदकादिद्रव्यवाचित्वे न भवत्येकवद्भावः । शैत्यादिगुणवाचित्व एव भवति ।

(37) एवं समर्थवार्तिके

'अथ हि गुणः पदार्थः भवति तदा सामर्थ्यम् ।
'अन्यो हि वीरत्वं गुणः अन्यो हि पुरुषत्वम् ॥'
(M. Bh. on Vā on P. 2.1.1.)

इति वीरशब्दस्यानेन लक्षणेन द्रव्याभिधायित्वेऽपि द्रव्योपसर्जनभूतस्य परतन्त्रस्य स्वार्थस्य सामर्थ्यविषयस्याभिधानात् संसर्ग्यादिलक्षणलक्षितगुणाश्रयेणाभिधानम् ।

(38) [a]) तथा हि पुरुषत्वमप्येवमेव । तत्र गुणमाह । लौकिकप्रक्रियया जातिरूपमपि तस्य भाव इत्यत्राभिप्रायादावतिप्रसङ्गपरिहारार्थं

'यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेशः'

इत्युक्ते द्रव्यगुणयोरव्यतिरेकं मन्यमानः प्रकृतिप्रत्ययार्थयोर्भेदं नावगच्छेदित्यन्यच्छब्दादिभ्यो द्रव्यमित्युक्तमिति नास्माद्भाष्यादेतल्लक्षणेन शब्दादयो द्रव्यं न भवतीति भ्रमितव्यम् । [b]) तथा ह्यस्मिन् द्रव्यलक्षणे रूपादीनामपि द्रव्यत्वादद्रव्यप्रकर्ष इत्यामुप्रत्ययाभावः समयातरं शीतम्, उपांशुतरः शब्दः, उच्चैस्तरो ध्वनिरिति ।

इति भूतिराजतनयहेलाराजकृतौ
प्रकीर्णकप्रकाशे भूयोद्रव्यसमुद्देशश्चतुर्थः ॥

---

(36) [a]) C सुमन्ता° ADH द्वन्द्वस्यैव विधा°. C द्वन्द्वस्यैकशेषवि°. M द्रव्यस्य°. C सर्वजात्यु°. B °वचनकरणत्वेऽन°. N °वचनकरणत्वेनानधि°. C °त्वेन आनधि°. D °पेधा, D °त्रिकारणवाचीति प्रतिषेध सार्वत्रिक स्या°. C विधोर्नि°. C सिद्ध द्रव्य°. D °द्ध द्रव्यविव्ययो. M प्रसिधः प्रसि°, CD शीतोष्णं. A ins. स्त (before इति). [b]) BC गुणसमवायि°. AD तद्वाच्ये च प°. C वाच्ये प°, D पर्युदस्येतिः. [c]) C °ष्णादिद°. C °स्येकशेषः भावः, D °गुणवाभित्व, BIM एव तु भ°.

(37) ABCDHIMN भवति सामर्थ्यम् । ACDH om. अन्यो (before हि), ACDH om. हि (before पुरुषत्वम्), C सामर्थ्यविधानात्. ACDHI संसर्गादि°. AD °क्षणाभिधा. H °भिधानः.

(38) [a]) A °मप्येवम् । तत्र. D °मप्येव तत्र. C °प्राय इत्यप्रसङ्ग°. M °प्राय इति प्र°. C भावा द्र°. M ins. तदभिधाने (before इत्युक्ते). C इत्युक्तं. C °रव्याति°. C °प्रत्यययोर्भे°. M °दित्यन्ये श°. A om. द्रव्यमित्यु ... शब्दादयो द्रव्य. CD °मिति चास्माद्भा°. H °मिति वास्माद्भा°. DH °लक्षणशब्दा°. M °व्यभिक्षुकमितिना°. D भवंनीति. M भवर्त्तीति. M भ्रमितव्यश्च. [b]) ADH °प्रत्ययभावः. C इति अमु प्र°. C समयातर. DH समयार्यातर. M समप्रयातप. M उपाशुताह. B °रोचध्वनि. D नवैस्तरो. M उच्चैःस्वरो. C धनि°.

# अथ गुणसमुद्देशः ।

(1) [a]) इदानीं गुणस्य शास्त्रीयलिङ्गानुमितं लक्षणमाह—

**संसर्गि भेदकं यद् यत् सव्यापारं प्रतीयते ।**
**गुणत्वं परतन्त्रत्वात्तस्य शास्त्र उदाहृतम् ॥ १ ॥**

[b]) **संसर्गि** आधारेण संसृष्टम्, रूपसम्भेदेन वर्तमानम्, न संबन्धमात्रेण । अत एवाश्रयान्तरावच्छेदमाधारस्य करोति शुक्लोऽयं (न) नील इति । [c]) एवं गौरयं नाश्व इत्यत्राश्रयान्तराद्यवच्छदे गोत्वमपि गुणो भवति । तथा **यद्यद्** इति वीप्सापदेन सर्वस्यैवंप्रकारस्य सामान्यादेरपि गुणत्वमिति परिभाषां कथयन्, नेदं वस्तुरूपात्रस्थितमिति सूचयति । [d]) अनेन चावच्छेद्याद् द्रव्यादवच्छेदकत्वेन गुणस्य विशेषमाह । **सव्यापारम्**, अवच्छेदकरूपेण प्रतीयमानं गुणव्यपदेश्यं न रूपान्तरेणेत्यर्थः । यदेवंविधं तस्य गुणत्वमिति संबन्धः ।

(2) [a]) ननु किमयं परिभाषैव गुण इति, अथ निबन्धनमत्रास्तीत्याह '**परतन्त्रत्वात्**' इति । लोके हि परतन्त्रो गुण इत्युच्यते इति प्रतीतिरियं न परिभाषामात्रमित्यर्थः । तथा च लौकिकस्यैवायं लक्षणस्य वैशेषिकप्रसिद्ध्यपाकरणायानुवाद इत्युक्तं भवति । इत्थं च वीप्सा सफला । [b]) '**शास्त्र उदाहृतम्**' इति । व्याकरणेऽन्वाख्यानवाक्याङ्गं लौकिक एव गुणो गृहीत इत्यर्थः । तथाहि समर्थवार्तिके ।

---

(1) [a]) C शास्त्रीयं लि°. B °लिङ्गमनुमतं. D °मितां भक्षण°. N °मतं.

का. १. D भेदक. D °पार. C °तन्त्राणां. D त्रत्वात्रस्य. D उदाध.

[b]) C संसर्गिकतया. ACDH ससृष्टरूप°. I संसृष्टं भे°. ADH संबन्धिमा°. B एतदेवाश्र°. C °वच्छेमाधा°. D एवाश्रयानएवच्छे°. The sense requires a न before नील but no manuscript has it. [c]) D गौरव. C नाशय. D नास्व. B °द्यवच्छिन्दन् गो°. C °वच्छेन गो. D °च्छिदं क्ष्ये. N °च्छिन्दन्. I °राद् व्यवच्छिन्नं. I वीप्साया भेदेन. C °भाषान्तरं. C नेवं. [d]) A चावच्छेदकस्य गुणस्य; BN °च्छेद्यत्वादवच्छेदकत्वेन गु°. CDH °च्छेद्याद्रव्यावच्छे°. AD प्रतीयमानगुण°. AH यदेवंगुणं तस्य. C परेयंगुणस्य गु°. D परेवंगुणं तस्य. D गुणमिति सं°. C °गुणत्वमित्यर्थः ।

(2) [a]) D नानु. I किमियं. ADH °न्धनमात्रा°. C परतन्त्रे. N °तन्त्रो गुण उच्यते. ABCDHN °च्यते । प्रती°. D प्रतीतिरय. ACDH °प्रसिद्ध्यपक°. C वीप्सया. CD सकला. CD शास्त्रादुदाहृतम्.. [b]) C व्याकरणो. A व्याख्यानवाक्यानां लौ°. C व्याख्यानाङ्गवाक्याङ्गलौकिकं. D व्याख्यानवाक्याङ्ग. N अन्वाख्यानाङ्गं. D गृहीतं. C समानाधिकरणयुक्तेषु. A °ख्यानम् । समर्थत्वात; C °सनप्रसमर्थत्वात्. D प्रसंख्यानः. A पदार्थ इति वदन्ति. C चेत् वीर°. D °पुरुपा द्रव्यायोर°. C °पुरुपो अत्यन्त°. C सामर्थ्याभावात्. AH °भावश्चोदितः. C °भावे चोदितं. C कथं हि. D पदार्थे भिवति. All mss. and A om. हि (before पुरुषत्वम्) which is found in the printed edition of the Bhāsya.

" समानाधिकरणेषूपसंख्यानमसमर्थत्वात् " ( Vā on P. 2.1.1. ).

" द्रव्यं पदार्थ इति चेत् । " ( Vā. on P. 2.1.1 )

इति वीरपुरुष:,द्रव्ययोरत्यन्तभेदात् सामर्थ्याभावे द्रव्यपदार्थपक्षे समासाभावे चोदिते। अथ हि गुणः पदार्थोः भवति ( तदा ) सामर्थ्यम् । अन्यो हि वीरत्वं गुणः, अन्यो हि पुरुषत्वम् । ( M. Bhā. on Vā. above ) इति जातेरपि पारतन्त्र्यात् द्रव्ये समवायाद् गुणत्वमुक्तम् । [c]) तथा च गुणभेदात् प्रतीयमानं द्रव्यैकत्वाश्रयं सामर्थ्यमिति सिद्धः समासः । तथा

" यस्य गुणस्य भावाद् द्रव्ये शब्दनिवेशः । " ( Vā. on P. 5.1.119 )

इति भेदको गुणो भेद्यं द्रव्यमित्येतदेव लक्षणमनुसृतम् । [d]) तथा हि—विशेष्यमात्रवचनाद् विशेषणमात्रवचने गुणे भावप्रत्ययः ।

( 3 ) [a]) गोशब्दस्य जात्यवच्छिन्नद्रव्यवाचित्वे जातौ गोत्वमिति जातिमात्रवचनत्वे तु शब्दस्वरूपेऽव्यभिचारिणि प्रवृत्तिनिमित्ते, तस्य च वाच्यत्वं भिन्नत्वं च पूर्वमेवोपपादितम् । स्वरूपेण हि परमुपरञ्जयद्विशेषणम् । यथा जात्यादिगुणः । तथा स्वरूपावेशेनार्थं प्रत्याययतः शब्दस्य भवति स्वरूपमुपरञ्जकत्वाद्गुणः प्रवृत्तिनिमित्तमर्थे तद्रूपाध्यासेन चार्थप्रतीतिः । [b]) अभिधाव्यापाराविष्टस्यैव न वाच्यत्वमपि तु साधारणस्य प्रयोगगतस्य । यथा रक्ते गुणे तत्त्वमित्यादिना च संबन्ध उपपादितः । शुक्लादीनां गुणावच्छिन्नद्रव्यवाचित्वे शुक्लत्वमिति गुणे भावप्रत्ययः । गुणाभिधायित्वे जातौ तद्वाचित्वे पूर्ववत् स्वरूपे । [c]) एवं चाद्याया शब्दप्रवृत्तौ डित्थादीनामपि स्वरूप एव भावप्रत्ययः । स्वरूपाध्यासेन संज्ञायाः संज्ञिप्रत्यायनात् तदेव तत्र प्रवृत्तिनिमित्तम् । तदेतदस्य डित्थत्वमिति तु क्रियागुणाध्यासादन्यत्र प्रवृत्तौ डित्थत्वसहचरितयोः क्रियागुणयोर्भावप्रत्ययः । [d]) तथा क्रियागुणयोरभेदाध्यासाभिप्रायं

---

[c]) ADH °प्रतीयमानद्रव्ये°. B सिद्धः समवायः. D गुणस्य गुणस्य. A द्रव्ये निवेश. D निवेशव्दनिवेशव्दनिवेश. D द्रव्यमन्यतदेव. D °मनुशतम्. [d]) C विशेषमात्र°. I विशेषणमात्रे गु°. C °मात्रवचना विशेषष्यमात्रे. C भावः प्रत्ययः ।

( 3 ) [a]) D °छिन्नं द्रव्यं वा°. D जाता गो°. N om. गोत्वमिति जातः. BC व्यभिचारिणी. A वाच्यत्वं च सर्व°. ADHI om. भिन्नत्वम्. C °रञ्जयति वि°. N om. मात्रवचनत्वे ... प्रत्याययतः. ACDH om. भवति ( before स्वरूपं ). ADH °मर्थे तत्र रूपाध्या°. [b]) ADH °व्यापारविशिष्टस्यैव. BC वचनवाच्यत्वं. B प्रयोगः तस्य. CD गुण भा°. C तद्वाचित्वं. [c]) C वाच्याया. D दिव्यादिनामपि. C स्वरूपे भा°. D स भाव°. AH संज्ञया. C om. तत्र. AH तदेतत् स्याड्डि°. D तदेतस्मादिच्छ°. C सिद्धत्वसह°. [d]) ACDHI डित्यत्वं तदेतन. N तदिति भा°. D यदा ह्यतिप्रभृ°. D पिण्डस्यावस्थस्यावस्थान्तरेऽपि D जातिरेव प्रत्यय°. C आद्यायं. ACDH °मौ पगत्व° C om. तु. C स्वरूपोपरं°. N °रञ्जक. N संबन्धे. AD तन्त्रेति. H om. अत्रेति ... गुणत्वे. C संवन्धोवो°. D °न्धस्यैवेप. I °न्धस्योप°. D गुणः.

'डित्थत्वं त एतत्' (M. Bhā. on P. 5.1.119)

इति भाष्यम्। यद्वोत्पत्तिप्रभृत्याविनाशात् पिण्डस्यावस्थान्तरेऽपि प्रत्यभिज्ञाप्रत्ययनिमित्तं जातिरेव भावप्रत्ययवाच्या आद्यायां शब्दप्रवृत्तौ। राजपुरुषत्वं पाचकत्वमौपगवत्वमित्यादौ तु संबन्धो यथायथं स्वरूपेणोपरञ्जकं प्रवृत्तिनिमित्तं भावप्रत्ययाभिधेयम्। विशिष्टसंबन्धावच्छिन्नो हि संबन्धी प्रतीयतेऽत्रेति संबन्धस्यैवोपरञ्जकत्वाद् गुणत्वे भावप्रत्ययवाच्यता। [e]) न हि राजादिसंबन्ध्यवच्छिन्नः पुरुषादिः प्रतीयते अपि तु तत्संबन्धावच्छिन्नः। भेदस्य चोद्भूतत्वाद्भेदाधिष्ठानः संबन्ध एव प्रवृत्तिनिमित्तमभिहितोऽन्तर्भूतः।

(4) [a]) यत्र तु संबन्ध्यनुरक्ता प्रतीतिः भेदस्य च तिरोधानं तत्र संबन्ध्येव जात्यादि प्रवृत्तिनिमित्तं गुणो गोत्वं शुक्लत्वमित्यादौ भावप्रत्ययवाच्यः। अत्र हि न समवायोपरक्ता प्रतीतिः अपि तु जातिगुणोच्छुरिता द्रव्ये समवायवशात्तिरोहितभेदे। संबन्धस्तु जातिगुणयोराधारावच्छेदकः। [b]) हस्तित्वमित्यादौ रूढिविषये जातिरेव वाच्या। एवं कुम्भकारत्वमित्यादौ। अत्र हि शब्दव्युत्पत्तिनिबन्धनं संबन्धो जातिरेव शब्दवाच्या। सत्तेत्यत्रापि सत्तासतोः संबन्धस्याव्यभिचारादनवच्छेदकत्वे जातिरेव भावप्रत्ययवाच्या। [c]) तदुक्तम्

"समासकृत्तद्धितेषु संबन्धाभिधानमन्यत्र रूढ्यभिन्नयोगाव्यभिचरितसंबन्धेभ्यः"

इति। इत्थमत्र विशेषणं स्वरूपेण परमुपरञ्जयत्सूत्रे भावशब्देन प्रतिपादितम्, भवत्यस्मात्तेनाकारेण द्रव्यमिति भावः। [d]) तथा हि गोत्वाद्गवाकारेण द्रव्यं प्रतीयते, शुक्लादिगुणात्तदाकारेणेति, परोपाधिमन्तरेणार्थानामव्यवहार्यत्वेनासत्कल्पत्वात्। ततश्च विशेषणेनाभेदमापादितं शब्दोऽभिधत्त इति शब्दप्रवृत्तिकारणमपि भवत्यर्थरूपसंबन्धि। [e]) तेन

'यस्य गुणस्य भावात्' (Vā. on P. 5 1.119)

इत्यत्र पक्षेऽर्थवाचिनी प्रकृतिः, गोर्भावो गोत्वमिति।

"यद्वा सर्वे भावाः स्वेन भावेन भवन्ति स तेषां भावः"

(Vā. on P. 5.1.119)

---

[e]) C ही. AD °संबन्धानवच्छिन्नः. C °संबन्धाः वच्छि°. H °संबन्धाव°. C आपे. C भेदतिष्टानः. I एवात्र प्र°. C निवृत्तिनि°.

(4) [a]) ADH संबन्धानु°. D भदस्य. AH संबन्ध एव. C संबन्धो जा°. D संबन्धो व जा°. N जात्यादयः. D दगो गो°. H om. अपि तु जाति. I °गुणाच्छुरिता. [b]) CI जातिरेव तु श°. C सतेनत्रापि सतोः. D सत्ते त्ये. C °चारावच्छे°. [c]) कृत्तद्धितसमासेषु. C भावप्रत्ययेन (before अन्यत्र). C °भिन्नरूपाव्य°. D ins. स्वभाइ (before इत्थमत्र). C इत्यमत्र. C भवति तस्मा°. [d]) ADH यित्वङ्गवा°. C विशेषणना°. I °प्रवृत्तकार°. C °रूपसंबन्धेः. I °त्यर्थसंबन्धि. [e]) D पक्षेऽस्येवा°. D om. गोर्भावो ... शब्दवाचिनी प्रकृतिः. A यस्मात् सर्वे°. C भावेन भावेन भवति. AC इत्यत्र पक्षे. C आनेका°, C °वचनेत्वा°, ACDH प्रयुज्यते.

इत्यत्र तु पक्षे शब्दवाचिनी प्रकृतिः, गोशब्दस्य भावो गोत्वमिति ।

तथा हि सर्वे भावाः सर्वे शब्दाः स्वेन भावेन भवन्त्यस्मादिति व्युत्पत्त्या प्रवृत्तिनिमित्तलक्षणेनार्थेन भवन्ति । अनेकार्थत्वाद्धातूनां भवतेः प्रयोगवचनत्वात्प्रयुज्यन्त इति । [f]) स प्रवृत्तिनिमित्तलक्षणो भावस्तेषां शब्दानां प्रत्ययवाच्य इति तच्छब्दवाच्या शब्दात्मिका प्रकृतिरत्र पक्षे भवति । तदेवं गुणलक्षणमत्र शास्त्र उदाहृतम् ।

(5) [a]) यत्र त्वस्य गुणस्य न ग्रहणं शास्त्रे तत्र युक्तिर्वक्तव्या । तथा हि ।

" वोतो गुणवचनात् " (P. 4.1.44)

इत्यत्र नायं गुणः, प्रातिपदिकाधिकारात् । स्त्रीत्वस्य च द्रव्यधर्मत्वाद् द्रव्याभिधाय्येव किंचित् प्रातिपादिकं गुणवचनग्रहणाद् गृह्यते । गुणमुक्तवान् गुणवचन इति पट्वादिभ्यो गुणोपसर्जनद्रव्यवचनेभ्यः प्रत्ययः । [b]) गुणश्चात्रोपसर्जनभूतो न संसर्गादिलक्षणो जातिशब्देभ्योऽपि प्रसङ्गादिति परिभाषितोऽसौ गृह्यते

' सत्वे निविशतेऽपैति । ' (M. Bh. on P. 4.1 44)

इत्यादिः । [c]) नन्वेवं वैशेषिकप्रणीतस्यैव गुणस्य ग्रहणं स्यादिति पट्वी मृद्वीत्यादावीकारो न स्यात् । नैष दोषः । पाटवादीनामप्यस्य लक्षणस्य सम्भवात्, एतदर्थमेव हीयं परिभाषाऽऽरब्धा । अन्यथा प्रतीतिवलादेव रूपादीनां गुणत्वमितीयमनर्थिका स्यात् ।

[d]) " गुणवचनब्राह्मणादिभ्यः " (P. 5.1.124)

इत्यत्रापि पारिभाषिक एव गुणो गृह्यते । तथा हि वाक्यकारेण

अर्थवत् प्रातिपदिकम् । (Vā. on P. 1.4.1)

गुणवचनं च । (Vā. on P. 1.4 1)

इति प्रातिपदिकमात्रस्य गुणवचनसंज्ञारब्धा । यद्येवं प्रातिपदिकाधिकारादेव सिद्धे किमर्थं गुणवचनम् । ब्राह्मणादिग्रहणं चानर्थकम् । उच्यते । प्रातिपदिकाधिकारादतिप्रसक्ते गुणवचनसंज्ञानामेव यथा स्यादिति विधानम् । [e]) गुणवचनसंज्ञाया हि बाधिकाः

---

[f]) C प्रवृत्तिलक्षणो. ADH °लक्षणमात्रं शा°. C ins. वचनगृहणादगृह्यते । गुणवचनं मुक्तवान् गुणवचन इति (before शास्त्रे).

(5) [a]) D यत त्वस्य°. N यत्र यस्य. ADH च धर्मत्वात्. AH गुणवचनाद् गृ°. D ins. इत्यत्र नाय गुणः प्रातिपदिकाधिकारा स्त्रीत्वस्य च धर्मत्वा द्रव्याभिधानात् (before गृह्यते). N °वचनं गुणवचनग्रहणाद् गृह्यते. D repeats गुणमुक्तवान्. [b]) N °सर्जनलक्षण. ACDH संसर्गादि. D °दिलक्षणे. C परिगृह्यते. D °विशत्यैत्यादिः. [c]) C न चैव. C repeats गुणस्य. C लध्वीत्यादौ°. D पट्वी न द्वी°. N पट्वी लघ्वीत्या°. N °दाविका°. C पटवादी°. C °रब्ध. IN गुणत्वं सिद्धमितीय°. C °तीय च प्रर्थि°. [d]) C परि°. C द्वी. D वाक्यकरणे. ADH om. गुणवचनं च ... विधानम्. BI °पदिकादावसिद्धे. [e]) ADH °द्रव्योपदेशिनी सञ्ज्ञादिरिति°. C °निवेशिना संज्ञा चेति, D °रेति. C °सञ्ज्ञामारब्धाः. D समास्था. I संज्ञासु चेति समा°,

" समासकृत्तद्धिताऽव्ययसर्वनामाऽसर्वलिङ्गा जातिः । "
( Vā. on P. 1.4.1 )

" एकद्रव्योपनिवेशिनी संज्ञा " ( Vā on P. 1.4.1 )

इति च समासादिसंज्ञाः समारब्धाः ।

(6) [a]) तथा च समासाविविक्तं प्रातिपदिकं ष्यञमुत्पादयति । अत एव च ब्राह्मणादिग्रहणमप्युपपद्यते । ब्राह्मणशब्दस्य तद्धितान्तत्वाद् गुणवचनसंज्ञाभावात् । माणवशब्दोऽपि तद्धितान्तो मनोरपत्यमिति । तथा वाडवशब्दोऽपि

' वडवाया वृषे वाच्ये ' ( Vā. on P, 4.1.120 )

इति ।

' अर्हतो नुम् च ' ( Vā. on P. 5.1.124 )

इति तु कृत्संज्ञकः । [b]) एवमन्यदपि ब्राह्मणादिगणे गुणवचनसंज्ञाबाधकं योज्यमिति । तत्रापि ष्यञ् यथा स्यादिति ब्राह्मणादिग्रहणम् । ये च ष्यञो बाधकाः प्रत्ययास्तानपि बाधित्वा ष्यञ् यथा स्यादित्यपि ब्राह्मणादिग्रहणमुपपद्यते । [c]) तथा हि ब्राह्मणशब्दस्याव्युत्पत्तिपक्षे

' प्राणभृज्जाति.... ' ( P. 5.1.129 )

इत्यञ् प्राप्तः । माणववाडवयोर्गोत्रत्वात्

' गोत्रचरणात्.... ' ( P. 4 3.126 )

इति वुञ् प्राप्नोतीत्येवमन्यत्राप्यूह्यम् । [d]) येषां तु न तद्धितादिसंज्ञा नापि कश्चिदपवादः प्राप्नोति तेषामत्र प्रपञ्चार्थः पाठः ।

(7) [a]) सूत्रकारमते तु गुणमुक्तवान् गुणवचन इति गुणोपसर्जनद्रव्यवचनो वचनग्रहणादत्र गृह्यते ।

' तृतीया तत्कृतार्थेन गुणवचनेन ' ( P.2.1.30 )

इत्यत्रापि खण्डादिस्तृतीयान्तार्थकृतः कश्चिदेव गुणोपसर्जनो द्रव्यविशेषो गृह्यते । खण्डनगुणयोगाद्धि द्रव्यं खण्डशब्दवाच्यम् ।

---

(6) [a]) AH ण्यतमुत्पा°. C ष्यजमु°. D प्यसमु°. D तध्रितानत्वात्. D मनोरपद्यंत्यद्यमिति. C तथापि. C वाडवाया. A अर्हतां नुमिति तु कृदन्तत्वात्. C नुम्वेति. D नुमेति. [b]) C °गादिगुणि गुण°. AH °संज्ञासाधकं. C °संज्ञाबाध्यकं. A ण्यद्यथा°. C षञ् यथा°. D ष्यश्य था° N ञ्यन्यथा°. A ये चाप्यभी बा°. D चाप्यसो बा°. C ष्यजेव य°. D ष्यसथा. [c]) ACDHIN इत्यण् प्राप्तः. C °वडवयो°. D गत्रित्वात्. D वुसप्राप्तो. C °न्यत्राप्यु°. D °न्यत्राप्य°. [d]) ADH तु च तद्धितादिसमवायी क° and om प्राप्नोति. C °संज्ञानामपि. N °तादिस्तं ज्ञा°. D प्रयचार्थः.

(7) [a]) C खण्डादिभिस्तृ°. ACDN तृतीयार्थकृतः. H तृतीयादित्रितीयार्थकृतः क°. D गृह्यंते. D °योगाधि.

[b]) 'संख्याया गुणस्य निमाने ....' (P. 5.2.47)

इत्यत्र समभागो गुणो ग्राह्यः । न यथोक्तलक्षणः, नापि

'सत्त्वे निविशते....' (M. Bhā. on P. 4.1.44)

इत्यादिलक्षणः । द्विमयमुदश्विदिति द्वौ समौ भागौ यवानां निमानमेकस्योदश्वितः क्रीयमाणस्येत्यर्थः । सापेक्षत्वेऽपि गमकत्वाद् वृत्तिः । [c]) दृष्टश्च समावयववचनो गुणशब्दः, यथा त्रिगुणा रज्जुरिति ।

'गुणवचनेभ्यो मतुपो लुक्' (Vā. on P. 5.2.94)

इत्यत्र येऽभिन्नरूपा गुणमभिधाय तद्वति वर्तन्ते शब्दशक्तिस्वाभाव्यात् ते गृह्यन्ते शुक्लादयः । [d]) तथा च

'अव्यतिरेकात् सिद्धम्' (Vā. on P. 5.2.94)

इति प्रत्याख्यानमभेदोपचारयोग्यताश्रयेण । तेन रूपादयस्तदयोग्या निवर्तिता भवन्तीति मत्वर्थीयान्ता एव तद्वति ते साधवो रूपवान् घट इत्यादि ।

(8) [a]) 'प्रकारे गुणवचनस्य' (P. 8.1.12)

इत्यत्र सर्वस्यैव पदस्य द्विर्वचनमिति स्वतन्त्रं गुणोपसर्जनं द्रव्यं पट्वादि गृह्यते ।

'पूरणगुण....' (P.2.2.11)

इत्यत्र गुणशब्देनार्थग्रहणाभिसंबन्धादेतेषां तावत् प्रत्यायनं नास्ति । आश्रितमात्रस्यापि धर्मस्य संसर्ग्यादिलक्षणस्य परिग्रहे द्रव्यसामर्थ्याद्यसिद्धिः । तस्मात्

'सत्त्वे निविशते....' (M. Bhā. on P. 4.1.44)

इत्यादिलक्षणो गुणो गृह्यते । स च वैशेषिकशास्त्रप्रसिद्धः । [b]) तथा हि—पार्थिवाना रूपादीनामग्निसंयोगादुपजनापायौ द्रव्ये स्तः । कालाकाशात्मसु परममहत्त्वादीना चाक्रियाजन्यत्वमपीति व्याप्यते तेन लक्षणेन गुणपदार्थः । [c]) तथा च रूपादिभिरपि प्रतिषेधप्राप्तौ

"तत्स्थैश्च गुणैः" (Vā on P.2.2.8)

---

[b]) D समभाः गौं गु°. I समभागौ. C om. यवानां. D ययाः नां यमाना मे°. C निमानसस्यो°.; D °स्योन्निश्वितः. C क्रिय°. C व्यत्तिः. [c]) ACHI समवायव°. D समवाययव°. N समवायववचनो. C °शब्दाः. C त्रिगुण. A मत्वभिन्नरूपो. C लुगीष्ट इत्यत्रापि. AH वर्तते. D वंश्रेते. A om ते. C गृह्यते. [d]) C om. तथा च. ADH प्रकृत्याख्यानम्. A अभेदाचारयो°. D अभेदोचार°. H अयमभेदो°. A मत्वर्थीयोपात्ता. C मत्वर्थारूपता एवं. D मत्वर्थीयाता. I मत्वर्थीयास्ता.

(8) [a]) D °सर्जने द्रव्यं यद्वादि°. C °ग्रहणेनाभि°. C °न्धादञ्ता°. D °न्धावदेगं. H °दे ते. IN °न्वाददेञां C संसर्गादिलक्षणपरि°. C °प्रसिद्धाः. [b]) ADH पार्थिवादीनां. AH रूपादीनामपि सं°. D °दीनोम्रसि. C उपननापा°. C om. द्रव्ये. D °शात्ममसु परहत्वा°. ACDH तेन लक्षणपदार्थः। N अनेन लक्षणपदार्थः। [c]) A प्रतिपेधः प्राप्तः. C तस्यै च गुणैरपि प्रसव.

इति प्रतिप्रसव आरभ्यते। तत्रार्थेन सह विधेरसम्भवादभेदेनायं शब्दस्य व्यपदेशः। तस्मिन् गुणात्मनि ये गुणा व्यवस्थिताः तद्वाचिभिरिति। द्रव्यपारतन्त्र्याच्च गुणानां वास्तवं स्वात्मन्यवस्थितत्वं नोपपद्यते इत्यभिधाव्यापाराश्रयोऽयं व्यवहारः। शब्देन केषाचिद् गुणाना स्वात्मप्रतिष्ठाना प्रत्यायनात्। स चायं रूपादिशब्दानां द्रव्यशब्दैरसमानाधिकरणानां प्रकारो घटते, द्रव्यं प्रति गुणभावाप्रतिपत्तेः। इत्थं घटरूपं कपित्थरसः चन्दनगन्धः पवनस्पर्शः कन्यास्वन इत्यादिसमासः साधुः। [d]) ये तु द्रव्योपसर्जनत्वेनोच्यमाना दृष्टास्ते तस्य विशेषणेन व्यवच्छिद्यन्ते शुक्लादयः। शुक्लः पट इति हि द्रव्यसामानाधिकरण्येन प्रयोगोऽस्ति। ततश्च ते प्रतिषेधविषयाः। पटस्य शुक्ल इति षष्ठ्यन्तेन विशेष्यमाणस्य सर्वस्यैव गुणस्य स्वात्मन्यवस्थितत्वेन प्राधान्यात् सर्वावस्थासु तत्स्थत्वमाश्रयणीयम। शुक्लादयश्च क्वचिदतत्स्था इति विधेरपाकृताः प्रतिषेधभाजः। [e]) एवं शौक्ल्यादयोऽपि, शुक्लशब्दाद् गुणे भावप्रत्ययोत्पादाद् द्रव्योपसर्जनशुक्लगुणाभिधानात्। यो हि कस्याञ्चिदप्यवस्थायां द्रव्योपसर्जनो गुणः सोऽत्र तत्स्थविशेषणेनापाक्रियते। तथा च शुक्लगुण इति शौक्ल्यशब्देनापि तस्य प्रत्यायने व्यवच्छेद एवमुपलक्षणे शब्दभेदस्यानङ्गभावात्।

(9) [a]) यद्येवं रूपवान् घट इति द्रव्यसामानाधिकरण्याद् रूपादयो न तत्स्थाः। नैतदस्ति। न रूपमत्र द्रव्यविशेषणं किन्तु सम्बन्धाभेदविवक्षायां मत्वर्थसम्भवाद्विशेषयन्नपि वा वैय्यधिकरण्येन गुणो द्रव्यात्मन्यनध्यासात् न स्वात्मनि स्थितिं जहाति। न हि राजपुरुष इति राजा पुरुषमवच्छिन्दन्नपि तन्मयता भजते। [b]) तस्मात् पटस्य रूपमस्यास्तीति प्रतीत्योरभेदात् सर्वदैव तत्स्था रूपादयः। सूत्रे च वचनशब्द-

C वीधे°. N शब्दव्यप°. AD वास्तवस्वात्मन्यवच्छिन्नत्वं. C रूपं स्वात्म°. D °राश्रयायं व्य°. AC °प्रतिनिष्ठाना. C प्रकाशो स्वगने. N प्रकारे. C गुणप्रभावातिपतेः. C पररूपात् कपिथ°. AH यवनस्प°. D एवनसागः. C कन्यारचन. D °दिसमासाः. [d]) ADH ये तद्द्रव्यो°. C om. दृष्टाः. D दृष्ट. D ति तत स्थ. C शुद्धः धिया. D युक्तादयः. C शुक्लाः पट. C °मानाधिकरणी. ADH षष्ठ्या वि°. ADH स्वात्मनावस्थि°. D 'वस्थितं न प्रा°. AH न समाश्रयणीयम्। D °स्थास त समा°. IN शुक्लादयस्तु. C क्वचिदयस्तु क्वचिदतत्स्था इति. D क्वचिदतत्स्था. C °रपेकृताः. D °रपाकनाः. N °भाजा. [e]) D शौत्मादयो°. C °योत्पावाद्. D °पसर्जनः शु°. I कस्याचिवस्था°. C कस्याचिदव°. D सोऽत्र. C °णेनापिक्रि°. D शौक्लशब्दे°. C om. तस्य. C प्रत्ययेन. D प्रत्यात्याने. N एवोपल°. ADH °स्यानङ्गत्वात्.

(9) [a]) IN पट इत्यपि. C रूपत्वात् पट इत्यत्रापि. A रूपमात्रात्. D रूपमात्र. ADH संबन्धो भेदवि°. BN संबन्धो भेदविवक्षया. AH विशेष न यन्नपि चावै°. D विशेषण नयन्नपि°. B द्रव्यात्मसु. A सदरति. ACDH राजपुरुषमव°. C तस्ययतां. B तन्मयत्व. [b]) C तस्मात्त्पटस्य. D °स्मात्तदस्य. BI रूप रूपमस्यास्तीति. C सर्वभेद तत्स्था. A सूत्रेण. C सूत्रेषु. C वचनेश°. C °नुपादात्. C ए गुण°. C om. न. C वर्तते. N अपि तु गण°. C °मात्रमभिदधीत्थे सम्प्रति°. CD गृह्यत इति. B om. शुक्लादयः. B °दयः मति. A वाक्यनाननव्याख्यातः.

स्यानुपादानाद् ये गुणमुक्त्वा तद्वति न वर्तन्ते, अपि तु गुणमात्रमभिदधति ते सम्प्रति स्वातन्त्र्यादगुणा अपि वृत्त्यन्तरे दृष्टगुणभावा गृह्यन्त इति शुक्लादय एवैवंप्रकारा गृह्यन्ते न रूपादय इति सूत्रार्थ एवं वाक्येनानेन व्याख्यातः। [c]) अत एव ब्राह्मणस्य शुक्ला इति प्रकरणादपेक्ष्यस्य निर्ज्ञातत्वात् सति सामर्थ्ये समासप्राप्तौ नेदं साम्प्रतिकगुणरूपं प्रतिषेधोदाहरणम्। गुणमात्रवृत्तेर्गृहीतत्वात्तत्र भूतपूर्वगत्याश्रयणमेव युक्तम्। घृतस्य तीव्रश्चन्दनस्य मृदुरिति प्रकरणादिवशात्तीव्रादेर्गन्धादिविशेषणत्वे निर्ज्ञाते गन्धादेर्विशेष्यस्य तत्स्थत्वात्तत्र तद्विशेषणस्यापि तथात्वाशङ्कायां

'न तु तद्विशेषणैः' (Vā. on P. 2.2.8)

इत्यपरं तीव्रादेस्तीव्रं घृतमित्यादौ वृत्त्यन्तरे द्रव्यसामानाधिकरण्यात् तत्स्थत्वाभावस्फुटीकरणार्थम्। तेन शुक्लादिवत् तीव्रादिः सौत्रप्रतिषेधविषय एवेति स्फुटीकृतम्।

(10) [a]) 'ईषदकृता' (P. 2.2.7)

इत्यत्र वाक्यं

'ईषद्गुणवचनेन' (Vā. on P. 2.2.7)

इति। तत्र प्रसिद्ध एव गुणो ग्राह्यः। सूत्रार्थप्रदर्शनं हीदम्। तथा हि—ईषच्छब्दोऽपह्रासवचन इति तद्वदभिधायिना तस्य समासः। अपह्रासयोगी च क्रियागुणलक्षणोऽर्थः, जातिद्रव्ययोस्तदभावात्, जातेर्नित्यत्वात्, द्रव्यस्य सिद्धस्वभावत्वात्। [b]) तत्राकृतेति पर्युदासात् क्रियावाचिनाऽग्रहणमिति गुणवचनपरिग्रहः सूत्रार्थ एव। यथैवमीषद्गार्ग्य इत्यत्र नास्ति प्रसङ्गोऽपत्यजातेरपह्रासायोगादिति

'इह मा भूत्, ईषद्गार्ग्यः' (M. Bh. on P. 2.2.7)

इति भाष्ये व्यवच्छेद्यं कथमुक्तम्। यथा कथंचित् समर्थनीयमेतत्। [c]) तथा हि—यथा गार्ग्यतर इति प्रकर्षस्य जातेरयोगादेकार्थसमवेतगुणक्रियानिमित्तत्वमवस्थाप्यते तथाऽपह्रासोऽपि सम्भाव्येतेति युक्तमेतद् व्यवच्छेद्यम्। एतत्तु न सम्यक्। प्रकर्षस्य श्रूय-

---

[c]) ADH प्रकरणापेक्षस्य. C °गुणरूपोदाहरण. I तीव्रं. N प्रकारादि°. AH तत्त्वात्. D तत्त्वत्वात्. C विशेषणस्यापि. ADH ननु. ADHI तीव्रादयस्ती°. C तीव्रातीव्रघटत°. D वृत्तन्तरे. D °सामान्याधि°. AD °स्फुटीकरणार्थाः. ADH शुक्लादितित्रादि. C शुक्लादिप्रतिपत्तिः. N सोऽत्र.

(10) [a]) C इपद°. D इपदकृते°. B इत्यत्र वक्ष्यामीषद्°. C om. वाक्य. C °दर्शनार्थं. CD °भिधायिनी. N °लक्षणोऽर्थं. C °द्रव्ययास्त°. [b]) C तत्राकृतेवि. A पर्युदासाक्रि. D पर्युदासो क्रि°. ADH °वाचिना ग्र°. C °वाचिमोग्र°. N गुणवचनग्रहः. B गुणपरिग्र°. N महाभू°. C व्यवच्छेदं. [c]) क्रियागुणनिमिनाक्रियागुणमिति. C om. तथाऽपह्रासो ... प्रतीयमानक्रियागुणनिमित्तत्वम्. C प्रसजेत्. C आकृते°. D स्यात् समासाः.

माणार्थगतत्वेनासम्भवाद्युक्तं यत्प्रतीयमानक्रियागुणनिमित्तत्वम् । समासस्त्वीषत्पिङ्गल इत्यादौ सावकाश इति कथमत्र प्रसजेत् । यदपि भाष्यम्—

'अकृतेतिह्युच्यमाने....इह न स्यात् समासः ईषत्कडारः इति '

( M. Bh. on P. 2.2.7 )

तदपि कथम् । [d]) यावता नैवात्र क्रियाकारकसंबन्धः प्रतीयत इत्यव्युत्पन्न एवायम् । केवलं स्वरवर्णानुपूर्वीज्ञापनाय

'गडेः कड च '

इत्येवमसत्येव व्युत्पत्तिराश्रिता । तस्मात्सूत्रार्थदर्शनपरत्वेनैवैतद् भाष्यं व्याख्येयम् । गुणवचनत्वादत्र समास इति ।

'अजादी गुणवचनादेव ' ( P. 5.3.58 )

इत्यत्र

'सत्त्वे निविशते '

इत्येवंलक्षणो गुणो गृह्यते न तु संसर्गादिलक्षणः । [e]) एवं हि सर्वस्य प्रातिपदिकस्योपाधिविशिष्टार्थाभिधायकत्वात् प्रातिपदिकमात्रात् प्रत्यये गुणवचनग्रहणमनर्थकं स्यात् ।

( 11 ) [a]) 'नञो गुणप्रतिषेधे सम्पाद्यर्हहितालमर्थास्तद्धिताः ' (P. 6.2.155)

इत्यत्र संसर्गादिरूप एव गुण आश्रीयते । तथा हि—नञ उत्तराणि सम्पाद्यर्हार्थतद्धितप्रत्ययान्तानि गुणप्रतिषेधेऽन्तोदात्तानि भवन्तीति सूत्रार्थः । [b]) अत्र प्रतिषेधभाजश्चत्वारः—प्रकृत्यर्थः, प्रत्ययार्थः, तदुपाधिः, संबन्धो वाक्यार्थरूप इति । तत्र गुणप्रतिषेध इति वचनादकार्णवेष्टिककं मुखमित्यत्र न कर्णवेष्टकादन्यदाश्रीयते, नापि तदभावः । किं तर्हि । कर्णवेष्टकाभ्यां न सम्पद्यते मुखमिति यासौ मुखस्य सम्पद्यमानस्यावच्छेदिका सम्पत्तिरुपसर्जनमुपाधिभूता सा प्रतिषिध्यते । [c]) तदा च प्रकृत्या कर्ण-

---

[d]) ACDH मात्राभावान्नैवात्र. C °संवन्धाः..D इत्युच्यन्त एवायम्. N रत्वप्युत्पन्न एव मा. B गन्धे कड. I कड चेत्येव व्यु°. BI °त्रार्थप्रदर्शन°. C °दर्शनपरस्त्वेन°. B om. एवंलक्षणो गुणो. ACDH संसर्गादि. [e]) N स हि. ADH om. प्रातिपदिकस्य. C °मात्रात् प्रत्यय. C गुणवचना°.

( 11 ) [a]) B °सितालम°. D सम्पाद्यहिसि°. ACDH संसर्गादि°. B गप [illegible]. C om. तथा हि. D तथा दि. I उक्तमात्रसम्पा°. C सम्पाद्यार्थ°. C °प्रत्ययजाति. ACDH °षेधे न्तोदा° B °षेधोऽन्तो°. C भवतीति. [b]) IN तत्र. D प्रकत्पर्थः. D व्यक्तार्थ°. C [illegible] कर्म इत्यन्तेन. ADH °मित्यत्र कन्. H कनकवेष्टकाद°. ADH om. न. C °वेष्टकसम्भतो. C नाभावः C कर्णवे°. C नासंपादि. D सम्पाद्यते. AH ins एवं रूपस्य प्रतिषेधो नञा क्रियत इत्यस्य वाक्यार्थतया ( before सौ. मुखस्य ). C मा ( for या ). D पा ( for या ). AH सौमुख्यस्य. C अवच्छे°. C संपद्यति. C गपाविध. A प्रतिषेध्यते. [c]) C कर्णवे°. C सोपसर्जने ( instead of नञो ). A तस्यास°. D नमो. C °र्थसमोसा. C अद्यवदात्वन्नार्थं नि. AH तदुत्तर. C वस्तु ( for तु ). N तत्रा प्रति°. A वहिरवाधकः शब्दसंस्कारस्यान्तर्गतस्य. C om. अन्तरङ्गस्य. N. om. न ( before गच्छति ). D om. दयो भवन्त्येव.

(14) [a]) स्वभावभूताऽवयवशून्यता घटपरमाण्वोः समाना। दिग्लक्षणेन शक्तिविशेषेण तु प्रकल्पितपौर्वापर्याः स्वाधारभूता एव समवायवशादविवेकेन भासमानाः शक्तिनिमित्तत्वाच्छक्तिव्यपदेश्या भागा इति व्यवह्रियन्ते। स्वतो भागवत्त्व एकत्वा-योगात्। अर्थान्तरसंबन्धनिमित्ता च भागवत्ता न मुख्या, परमाणोरपि प्रसङ्गात्। [b]) न चापि परिमाणकृतो मुख्यो भागभेदः, परिमाणस्यापि तयोर्घटाण्वोर्महत्त्वाणुत्वलक्षणस्य भावादर्थान्तरत्वात्, महदणुत्वप्रत्ययहेतुर्हि शक्तिविशेषः परिमाणम्। अत एव परिमाण-विशेषाद् घटाण्वोर्विशेषः। न त्ववयवसंबन्धासंबन्धाभ्यामित्युपाधिसंबन्धानपेक्षायामव्यप-देश्यं वस्तु ब्रह्मकल्पं सर्वं समानम्॥ १५॥

न चापि वस्तूनामुपाधिनिहितो भेदः स्वरूपसमवायीत्याह—

**यतः प्रकल्पते भेदो भेदस्तत्रापि दृश्यते।**
**अदृष्टोपरतिं भेदमतो युक्ततरं विदुः॥ १६॥**

(15) [a]) अवयवैरवयविनां भेदः, अवयवानामपि स्वावयवैः, तेषामपि स्वावयवैरिति यावत्परमाणुपर्यन्तं प्राप्तिः। तत्रापि दिशा भागभेदप्रकल्पनम्। दिगप्य-नाश्रितभेदा कथं भेदायोपकल्पेत। दिग्भेदोऽपि सूर्यसंयोगभेदाहितः। [b]) तेऽपि सूर्यसंयोगा मेरुप्रदेशभेदात्। तत्राप्यवयवभेदाद्भेदः। तत्राप्यवयवभेदादिति पुनर्दिश्यैवाव-स्थानम्। तत्राप्येवमिति चक्रतुल्यमिदमित्यदृष्टा उपरतिर्निष्ठा यस्य भेदस्य तमनव-स्थादोषादतिशयेनानुपपन्नं मन्यन्ते। [c]) न केवलं स्वतो भेदो युक्तो भावानां याव-दुपाधीनामप्यन्यापेक्षणादपर्यवसितो भेदः सुतरां भावभेदाय नालमिति प्रकर्षः। तदेवं देशादिभेदस्य भावेषु स्वत उपाधिवशाच्चाप्योगाद् व्यवहारमात्रं सांवृतेन रूपेण प्ररूढम-शक्यापह्नवमिति निगमयिष्यति चैतन्यवदित्यादिना॥ १६॥

---

(14) [a]) B संभावना भू°. C स्वप्रावभूत न्वयशू°. C °माणोवोः. C °णेन तु श°. C स्वधार°. B भागमानाः. C शक्तीव्य°. C °श्याभावा. C भानिमित्तो. C °न्तरानिमि°. [b]) ADH तत्रापि. ADH परिणामकृतो. C घटपरमा°. I °स्याभावा°. ADH नन्ववयव°. C तत्ववयव°. C °यवसवन्धाभ्या°. ADH °मव्यपदेशं. C om. वस्तु.

का. १६. C प्रकल्पितो. D अदृशोपरतिं. C °तर वि°.

(15) [a]) C °वमविना. C om. अवयवानामपि. D स्तोव°. D स्यावयवैरिति. C °वैरपीति. D परगणवर्थ°. CN °पर्यन्त प्रा°. N दिशो. A दिगाद्यनाश्रितभेदः. D दिगधाना°. ACDH संयोगादाहितः. [b]) C तेनापि सू°. C °प्रदेशात्. ADH °भेदाभेदः. A rep. तत्राप्यवयवभेदा-भेदः. A उरपरतिर्नि°. C अत्र दृष्टादुरपरति. D अदृष्टुरपर°. N यस्या. C °नुपपात. C मन्यते. [c]) ACH घनो. D वृ(?)तो. N स्वतोऽभेदो. BN om. भेदो. D याधाना°. C सतुरा. ADH °भेदेन नाल°. C °भेदे नाल इ°. I तदव. AC ins. तु (before देशा°). D तं देशा°. AH °वशादप्य°. C स्वतस्तदु°. D स्वतदुपा°. C निगमयति. C °न्यावदित्यादिना. C साम्प्रति. ADH °कत्वामूर्तत्वे. C °करवे दिशः.

सम्प्रति व्यापकत्वममूर्तत्वे दिशः प्राह—

**सर्वत्र तस्य कार्यस्य दर्शनाद्विभुरिष्यते ।**
**विभुत्वमेतदेवाहुरन्यः कार्यवतां विधिः ॥ १७ ॥**

( 16 ) व्यतिरेकादेः पूर्वोदितस्य कार्यस्य सार्वत्रिकत्वाद् व्यापिनी दिग् विभुस्वभावा। अमूर्तानां ह्येतदेव विभुत्वं सर्वत्र स्वकार्यसम्पादकत्वम्, मूर्तानां तु शरीराणामवयवैर्विततदेशव्याप्तिर्विभुत्वम् ॥ १७ ॥

इदानीं पूर्वोक्तं निगमयति ।—

**चैतन्यवत् स्थिता लोके दिक्कालपरिकल्पना ।**
**प्रकृतिं प्राणिनां तां हि कोऽन्यथा स्थापयिष्यति ॥ १८ ॥**

( 17 ) [a] ) सन्नपि हि पदार्थो यावन्न संवेद्यते तावदप्राप्तसत्त्व इव नार्थक्रियासूपयुज्यत इति चैतन्यं ज्ञानं सर्वत्रादिभिरशक्यनिह्नवम् । आत्मा वा चैतन्यम् । यथाहुः साङ्ख्याः

'चैतन्यं पुरुषस्य स्वरूपम्'

इति । तच्चाशक्यापह्नवम् । तद्वदनुपपद्यमानभेदापि दिक्कालयोः **परिकल्पना** यथाप्रतीति रूढा । [b] ) भावाना हि परमार्थतः पूर्वोक्तनयेन भेदाभेदभावाभावादि रूपैरयोगादनादिप्ररूढाविद्यावशाद्विचित्रो व्यवहारो रूढः **प्रकृतिं** स्वभावमिव व्यवहर्तृणां प्राप्त इति विद्वद्भिरपि यथातत्त्ववेदिभिरन्यथा व्यवस्थापयितुं न पार्यते । [c] ) यथा हि चैतन्यं स्वभावभूतमेवं सर्वव्यवहाराणां पूर्वापरादित्वेन दिक्कालावपि रूढौ, तावन्तरेणार्थक्रियानिष्पत्तेः । प्राणित्वमेव विघटेतेति प्राणिग्रहणेन सूचयति । व्यवहारे च यथाप्रतीति पदार्थप्रत्याख्यानं न युज्यते ॥ १८ ॥

यस्मात् ।

**सङ्करो व्यवहाराणां प्रकृतेः स्याद्विपर्यये ।**
**तस्मात्त्यजन्निमान् भावान् पुनरेवावलंवते ॥ १९ ॥**

---

का. १७. C विभूत्व. D विभुत्वा. N °रन्यकार्य°. D कायवि. H कायविधिः.

( 16 ) AD °कादेशे. H °कादेशः. N पूर्वादितस्य. N व्यातनी. A om. ह्येतदेव ... मूर्ताना. ABCDH शरीरिणां.

का. १८. C चैतन्यवे. N °न्यवर्तिता. D दिह्वानप°. C प्रकृतिप्रत्य°.

( 17 ) [a] ) D यावंत्र. D संवेस्वते. AH °प्राप्तत्वादेव. C °प्राप्तसतत्त्व इव. D °प्तत्वा इव. AH °याया प्रपु°. ADH °क्यापह्लवन्. ACDH आत्मा चै°. D तच्चाशयद्भवम्. [b] ) ADH °क्तभेदभयेन. C °क्तयेन. ACD °भेदभावादिरू°. C °दिरूढावि°. A °शादिविन्नो. C °द्याविविशो. D °शादिचित्रो. C रूढ. ADH प्रवृत्ति. C प्रकृतिः. D संभाव°. AD तद्विद्भि°. H तद्वद्भि°. AH तथा तत्त्व°. C तथा तद्वेदि°. [c] ) AC तथा हि. ADH भावान्तरेग. C नावन्तरेण D पाणिग्र°. ADH °ग्रहणमेव. A ins. यतियति (before व्यवहारे). DH ins. यति (befoie व्यव°).

का, १९. C प्रकृतेः, B प्रकृते, C °जं र्तिं, D इति मात्रावान्.

(18) [a]) दृष्टादृष्टफला व्यवहाराः प्राङ्मुखोऽन्नानि भुञ्जीत, पूर्वाह्णे श्राद्धं कुर्यादित्यादयः प्रत्याख्याने दिक्कालयोर्न कल्पेरन्। **प्रकृतेः** स्वभावरूपता प्राप्ताया दिक्कालकल्पनायाः, **विपर्यये** वैपरीत्ये, अपूर्वापरादिनिमित्तत्वेऽङ्गीक्रियमाणे मिथ्याभावोऽनवस्थितत्वं प्रत्यक्षागमरूढाना संध्योपासनादिरूपाणां व्यवहाराणां स्यात् [b]) **तस्माद्** यद्यपि अपूर्वापरं हीदं विश्वं मूर्तितः क्रियातश्च तथापि विद्वान् व्यवहारपतितस्त्यक्तप्रपञ्चावभासोऽपि प्रपञ्चमवलम्बत एवेति **इमान्** दिक्कालप्रकारानर्थान् बाधकाभासोपन्यासेन निराकुर्वन्नपि **अवलम्बते**। तदुपाधिप्रत्ययस्यानिवार्यत्वात्। बहुवचनेनावयव्यादिरप्यर्थोऽशक्यपरित्यागो व्यवहार इति दर्शयति। [c]) **त्यजन्नवलम्बते** इति समानकालत्वेन त्यागावलम्बनयोरतिशयोक्त्या युगपद्विरुद्धार्थाभ्युपगमात् परस्य स्ववचनविरोधं ध्वनयति ॥ १९ ॥

यथा च कालो ब्रह्मणः शक्तिः भावेषु प्रतिबन्धाभ्यनुज्ञाव्यापारोपाध्यध्यस्तनानात्वा तथा दिगपि स्वोपाधिभिन्ना पूर्वापरादित्वेन भावभेदव्यवहारनिबन्धनीत्याह—

**तस्यास्तु शक्तेः पूर्वादिभेदो भावान्तराश्रयः।**
**भिन्ना दिक् तेन भेदेन भेदायैवोपकल्पते ॥ २० ॥**

(19) [a]) सा स्वैरुपाधिभिर्भिन्नेति सामान्येनोक्तेऽपि पूर्वादितया विशेषरूपेण भेदः पुनरिहोपात्तः। सूर्यसंयोगाश्च भावान्तराख्या व्याख्याताः। **भेदायैव** इति स्वविशेषणोपरक्तविशेष्यप्रत्ययजननायेत्यर्थः। [b]) अवधारणेन भिन्नविशेष्यप्रत्ययकाल एवौपाधिकं भेदं समवलम्बते नान्यदा स्वतोऽभिन्ना दिगित्याह ॥ २० ॥

इदानीं दिङ्निमित्तं शास्त्रे कार्यमाह—

**अवधित्वेन चापेक्षायोगे दिग्लक्षणो विधिः।**
**पूर्वमस्येति पष्ठ्येव दृष्टा धर्मान्तराश्रये ॥ २१ ॥**

---

(18) [a]) C °हारः. D भूजात. AD अपराह्णे. N °ख्यान. C विकल्पेरन्. D °लयोर्न. ADH °वरूपरूपता. C °रूपतायाः. D प्राप्ताया. C °कल्पभाव. D आपूर्वा°. D °निमित्तत्व D °माणो. C °भावानव°. C प्रत्यभागरू°. [b]) ADH क्रिया ततश्च. C विद्व व्य°. ADH व्यक्त प्र°. C ins. तत्र (before प्र°). ADH एव इवान्. D °वेनीमात्र. B °सालकल्पनार्थान् ADH बोधकानां सोपन्यासेन. A बृद्धवचनेन नावय°. [c]) C त्यजं नात्लवत्. D °नयोरमा. D om अतिशयोक्त्या. CD °द्धाख्योर्था°. C स्ववचन नि° B स्नस्य चान्वयदि°. C ध्वशति. D घुनति AH शक्तिभा°. D शक्तभा°. ACDH °पारोऽध्यस्त°. B °पारोपाप्यधव. C पुरापरादि°. A °दिभाव°. CDH °राधीन भा°.

का. २०. C तस्याशक्तेस्तु AD °दिर्भेदो, C °राश्रयाः. D दिक्कंन. C भेदे भे°. C भेदीयैव.

(19) [a]) D °दितथा. D om. विशेपरूपेण...स्वविशेपणो. C °हायातः. ACH °संयोगश्च. ACH °न्तराख्या°. A भेदायैव तत्तद्वि°. [b]) C °प्रत्ययः का°. C तेनान्यतो D नोन्यदा. AD दिमित्याह.

का. २१. A °त्वेन वापेक्षा°. DH °त्वेन सापेक्षा°. C °योगैर्दिग्°. DH °क्षालोको. C पूर्वस्यमिति. C पष्टे व. C धर्मंतिराश्रयो.

(20) [a]) इदमस्मात् पूर्वं परमिति मर्यादारूपेणापेक्षणं लौकिकं कार्यम्, तत्रैव शास्त्रीयदिग्योगलक्षणपञ्चमी विशेषविषया। कथं तर्ह्यत्र विषये षष्ठी दृश्यत इत्याह—

**'पूर्वमस्येति षष्ठ्येव दृष्टा'**

इत्यादि। अवध्यवधिमत्संबन्धेऽपेक्षिते पञ्चमीति तया षष्ठी तत्रैवापवादत्वाद् बाध्यते। [b]) **धर्मान्तरस्य** अवयवत्वस्य त्वपेक्षायामवयविनि षष्ठ्येव भवति 'पूर्वं कायस्येति' न ह्यत्रावधित्वेनावयविनोऽपेक्षेति दिग्योगपञ्चम्या अविषयोऽयम्। अवयवावयविसंबन्धे हि न पञ्चमी, किंत्ववध्यवधिमत्संबन्धे। [c]) अत एव चावयवान्तरापेक्षया अवयवान्तरस्यावधित्वे भवत्येव पञ्चमी पूर्वं कायस्य नाभेरिति कायावयव्यपेक्षावयवता, अवयवान्तरापेक्षा तु पूर्वतेति संबन्धिभेदादविरोधे विभक्तिद्वयोपपत्तिः। समासविधौ त्वेकदेशिनेत्यवयविपरिग्रहे दिग्रूपता नाश्रीयते॥ २१॥

व्यवहारे च पूर्वादिभावः पूर्वादिदिङ्निमित्तोऽर्थानां न स्वाङ्गनिमित्त इति नानवस्थित इत्याह—

**पूर्वादीनां विपर्यासोऽदृष्टश्चावध्यसङ्करे।**
**ऋज्वेतदस्येत्येतच्च लिङ्गं न व्यतिकीर्यते॥ २२॥**

(21) [a]) **अवधेः** अपेक्षणीयस्य **असङ्करे** अनियमाभावे पूर्वादीनां **विपर्यासो न दृष्ट** इति व्यवस्थित एवायं व्यवहारः। तथा हि यदपेक्ष्य पूर्वत्वं व्यवह्रियते न तदेवापेक्ष्य तस्यैवापरत्वमिति परत्वापरत्वे दिक्कृते नियते। [b]) एवमस्य वंशस्य ऋजु स्पष्टं मूलमित्येतदपि दिशो **लिङ्गं न व्यतिकीर्यते** अवधेरेवानपेक्षणादवध्यपेक्षायां हि साङ्कर्यं संभाव्येतापि। अवधेरनवस्थितत्वात्। न चात्र लिङ्गेऽवध्यपेक्षेत्यव्यतिकीर्णा

---

(20) [a]) D इदमसगत. D पर्यादा°. D °णादोक्षणं. ADH शाव्त्रीयं. C °क्षणा पञ्चमी. C °त्रैव षष्ठी. C पूर्वस्येति. [b]) B °न्तरस्यावयवस्य. C °यवतरत्वस्य. ADH °संबन्धे तु. C त्ववत्यवधि°. [c]) CHN एवात्रावय°. ADH °रापेक्षा. A om. अवधित्वे...अवयवान्तरापेक्षा. B अवान्तरस्य. D सर्वकायस्य. C °व्यपेक्षया. D repeats अवधित्वे ... अवयवान्तरापेक्षा. ADH पूर्वततिस°. C पूर्वेतिसं°. CD °दविरोधो. B °न्धिविरोधादवि°. A °विधौ एक°. D °विधौ व्येक°. A हि पर्वता. D हि समता. AH शब्द व्य°. ADH त्वपूर्वा°. C °मितानामर्था°. ACDH स्थाननि°.

का. २२. D °र्यासौ. All Mss. and A have इष्ट. The adopted reading is on the basis of the commentary. D °वध्यासङ्करे. D व्यतिकार्यते.

(21) [a]) D °पेक्षणायस्य°. ADH असा नियमाभावे. C औनियताभी°. ACDH °र्यासो इष्ट. D यदपेक्ष. AH om. न. BC तदपेक्ष्य. D rep. परत्वमिति. AH अनियते एव। अस्य वं°. [b]) C एवं वश्यं वं. D एव पवश्यं. C ऋजुगुणः. D ह तुग. D व्यतिका°. C साकार्यसिभावे. D सङ्कार्य. B लिङ्गवत्. C लिङ्गेऽप्यव°.

एव दिशः । [c]) इत्थं च स्वाङ्गादपि व्यवस्थानेऽवधिनियमादसाङ्कर्यमेव । दृष्टादृष्टप्रयोजनस्तु व्यवहारोऽनादिसिद्धा दित्यसम्प्रयोगाख्यावधिनिबन्धनदिग्व्यवस्थानियतैवैपणीयेति न यः कश्चनावधिराश्रयणीयः ॥

एवं तावद् बाह्यार्थनयेन दिक् समर्थिता । इदानीमन्तर्ज्ञेयनयेनाह—

**अन्तःकरणधर्मो वा बहिरेवं प्रकाशते ।**
**अस्यां त्वन्तर्बहिर्भावः प्रक्रियायां न विद्यते ॥ २३ ॥**

(22) [a]) अन्तरवस्थितस्य करणं व्यापारोऽस्येति चैतन्यमेवमुच्यते । तस्य ह्यनाद्यविद्यावशात् स्वरूपनिष्कर्षेणेदमिति बहिराकारावभासेऽपि परमार्थतो बाह्यस्यायोगात् स्वकुक्षावेव जगत् प्रत्यवभासते इत्यन्तरवस्थितस्यैव व्यापारः । [b]) तथा च वक्ष्यति—

द्यौः क्षमा वायुरादित्यः सागराः सरितो दिशः ।
अन्तःकरणतत्त्वस्य भागा वहिरवस्थिताः ॥

इति । तस्यान्तःकरणस्यायं धर्मो बाह्यार्थानपेक्षोऽविद्यावशात् स्वभावभूतोऽवभासते । एवं पूर्वाद्याकारेण बहिरध्यवसीयते । [c]) असति बाह्ये कथं बहिरित्युच्येत इति चेदाह । अस्यामविद्यावशादवभासस्यैव बाह्यत्वावसायरूपाया कल्पनायामन्तारूपता वहीरूपता च न मुख्या परानुरोधात्तु प्रतिभासवशेनैवमुच्यत इत्यर्थः । [d]) असति हि बाह्ये तदपेक्षमान्तरत्वमपि न मुख्यमिति काल्पनिकोऽन्तर्बहिर्भावः । एवं च पूर्वापरत्वमविद्याध्यस्तं भावेषु आन्तररूपेष्वनादिमिथ्याभ्यासवासनालक्षणान्तःकरणधर्मरूपं चकास्तीति न बाह्या काचिद् दिगस्ति ॥ २३ ॥

अतश्चैकत्वनानात्वविचारोऽपि निष्फल एवेत्यह—

**एकत्वमासां शक्तीनां नानात्वं वेति कल्पने ।**
**अवस्तुपतिते ज्ञात्वा सत्यतो न परामृशेत् ॥ २४ ॥**

---

[c]) I ins. दिशः (before स्वाङ्गा°). D स्वाङ्गादवि. ADH °मासाङ्क°. ACDH °नियत एवैप°. AH °पन्तःक्षेपन°. C °न्तरनयेन. D °मन्तर्क्षेपनयेनान्तरक्षेपनयेन.

का. २३ D व्यवहिरेवं. C °रेव. N अस्यं. C च न वि°.

(22) [a]) AD °स्थित करण ADH यस्येति. AH °न्यमेवेत्पु° D °मेव प्रत्यते C °निष्कर्षण°. N °काभावभा°. C ins. अन्तरसयोगावधिभावात् (before स्वकुक्षा°). ADH स्वभावे च ज°. [b]) D °स्थित इनि. C अस्यान्तः°. B °करणस्याय. I बाह्यानपे°. ADH ° भूतोऽवभासः. [c]) ADH °बाह्यत्वावभासरू°. C °भासस्यैवरू°. N आन्तररूपता. B om वहीरूपता. ACDH वचनमुख्या. ADH °रोध्यनु प्रति°. B परानुपरोधा°. [d]) N अभवति वा°. BCIN om. हि. ADH om न (before मुख्य). C °द्याध्वस्तं. AH °पु अन्तारू° C भावेष्वद्यत्यतारू°. D °ष्ट न्तारू°. C °लक्षणादन्तः°. BN om. बाह्या. D बाह्यां. C ततश्च. CDH निष्पद्यत इ°.

का. २४. D शक्तानां. D चेति. D कत्मने. D परामृशेत्.

( 23 ) [a] ) भावोपाधिरूपाणां पूर्वादित्वेन भिन्नानां दिक्शक्तीनां मुख्यमेकत्वम्, उपाधिभेदात्तु नानात्वम् । मुख्यमेव चानादिसिद्धं नानात्वं भिन्नकार्यानुमेयमित्येते द्वे **कल्पने अवस्तुपतिते ।** दिशः परमार्थतोऽवस्तुत्वाद् विज्ञाननये व्यतिरिक्तवस्त्वभावादित्य-वस्तुविषये बुध्वा परमार्थतो न विचारणीये इत्यर्थः । [b] ) यथाप्रतीति व्यवहारसिद्धेः । अत एव संवेद्यमानं प्रतीतिभेदान्नानात्वमभिप्रेत्यासामिति बहुत्वेन निर्देशः ॥ २४ ॥

न च पदार्थविचारे किंचित् प्रयोजनमस्ति । तथा हि—

**विकल्पातीततत्त्वेषु सङ्केतोपनिबन्धनाः ।**
**भावेषु व्यवहारा ये लोकस्तत्रानुगम्यते ॥ २५ ॥**

( 24 ) [a] ) इह पदार्थास्तीर्थिकपरिकल्पितनियतसङ्केतपरिघटितशरीरास्तांस्ती-र्थिकपरिकल्पितान् विकल्पानतिक्रम्य भावतो वर्तन्ते । न हि प्रतिदर्शनदर्शितविरुद्ध-रूपयोगस्तत्त्वं भावानाम् । [b] ) तस्मादविचारितरमणीया लोकसिद्धाः पदार्थाः समाश्रय-णीयाः विद्वद्भिरपि । अलमेभिरप्रतिष्ठितैस्तर्कविकल्पैः । तथा च लोके प्रसिद्धा दश दिशः सिद्धाः ॥ २५ ॥

तर्कविकल्पैस्तु भेदाभेदौ न व्यवतिष्ठेते इत्याह—

**नैकत्वमस्त्यनानात्वं विनैकत्वेन नेतरत् ।**
**परमार्थे तयोरेष भेदोऽत्यन्तं न विद्यते ॥ २६ ॥**

( 25 ) [a] ) अन्योन्याश्रयस्य रूपस्यैकासिद्धावितरासिद्धेरुभयासिद्धिप्रसङ्ग इति दिशामेकत्वनानात्वे न व्यवतिष्ठेते । व्यवहारे गजनिमीलनेन तु यथावभासं लौकिको व्यवहारो रूढः । [b] ) परमार्थविचारे तु परस्परप्रतियोगिनोर्भेदाभेदयोरप्यसत्यता मुख्या-

---

( 23 ) [a] ) A नानोपाधि°. D गावोपाधि°. D मर्वादि°. C om. उपाधिभेदात्तु नानात्व. D दुपाधिभेदा तु. ADH ins. एकत्वं ( after अनादिसिद्ध ). C °मित्येतद्धि कल्प्यते. C °पतितः. C व्यतिरेकव°. ADH बुद्धया. C बुद्धा. C परर्थतो. [b] ) C तथाप्र°. ADH संवेद्यमानत्वम् । AH °भेदात्तत्व. D °भेदा नत्वं. BN बहुवचननि°. C °विचारो.

का. २५. D °तीतत्वेषु. HN भाव्येषु. N तत्रानु°.

( 24 ) [a] ) D °र्थास्मीर्थि°. D °नियतएकेनपरिदाटित°. AH °शरीरास्ते ती°. D °रीरास्ता-तीर्थि°. C भावता. BCDN वर्तते. CD °दर्शनविरुद्ध°. [b] ) A अतोऽलं प्रतिष्ठितनिमित्तैः. D अत अतमेभिप्तप्रति. B °लमेताभिर°. A °भेदोऽपि न व्यवतिष्ठते. DH °भेदो न व्य°.

का. २६. AD °मस्ति ना°. HN °मस्य ना°. D नेत्वन अपर°. C °मार्थ त°. D तयोरिप.

( 25 ) [a] ) AH °न्याश्रयश्च. N °यस्य स्वरू°. ADH °तरासिद्धिप्रसङ्ग. C °तरासिद्धेति-रूपादि प्र°. D °कत्वे नाना°. AC °निमीत्वितेन. D व्यवहारा. [b] ) C °विचारैस्तु. D °योगितो. C °भेदोभेदरप्य°. C किं तु. D शक्तिरिगि°. D °भेदावि°. AH °चारा न तन्तीत्याह. D °रामर्हसंत्याह.

भिन्नस्य परस्यैव तत्स्वरूपत्वादित्यर्थः । किं च परोपाधितया शक्तिर्दिगित्युक्तम् ॥२६॥

शक्तेश्च भेदाभेदविचारानर्हतेत्याह—

**न शक्तीनां तथा भेदो यथा शक्तिमतां स्थितिः ।**
**न च लौकिकमेकत्वं तासामात्मसु विद्यते ॥ २७ ॥**

(26) [a]) **शक्तिमतां** स्वतन्त्राणां पदार्थानां पृथगेवावधारणाद्भेदो निश्चीयते **न शक्तीना**माधारपारतन्त्र्येणावभासमानानाम् । तस्मादाधारात्परस्परतश्च भेदः प्रत्यक्षसिद्धः । नापि स्वतन्त्रस्य शक्तिमतो यथा भेदो घटादेरेकत्वं लोकप्रसिद्धम्, अभेदावभासात् । [b]) तथा शक्तीनां कार्यनानात्वोन्नीयमानभेदानां स्वत आधाराच्चाभेदोऽस्तीत्यनिर्वाच्या एव भेदाभेदाभ्यां सर्वाः शक्तयः । अत एवाविद्याशक्तिर्ब्रह्मणो भेदं न विधत्ते येन द्वैतापत्तिः ॥ २७ ॥

यदुक्तं—

'नैकत्वमस्त्यनानात्वम् ....'

इत्यादि तदेवाव्यवस्थितत्वेन निगमयंस्तार्किकाणामेकपक्षावलम्बनं न युक्तमित्याह—

**नैकत्वं व्यवतिष्ठेत नानात्वं चेन्न कल्पयेत् ।**
**नानात्वं चावहीयेत यद्येकत्वं न कल्पयेत् ॥ २८ ॥**

(27) प्रतियोगिभूतं नानात्वं यदि बुद्ध्या न कल्पयेत् नाश्रयेत् एकत्वं कर्तृ तदा न स्वरूपं नियतं लभेत । एवं नानात्वमपि यदि प्रतियोग्येकत्वं नाश्रयेत् तदा तदपि नावतिष्ठेतेति परस्परापेक्षत्वादनयोर्नैकत्रावस्थातुं पार्यते इत्यविचारितरमणीया दिगाश्रयणीया लौकिकीति सिद्धम् ॥ २८ ॥

इति भूतिराजतनयहेलाराजकृते प्रकीर्णप्रकाशे दिक्समुद्देशः षष्ठः ॥

---

का. २७. D शाक्तानां. C ins. प्रथाभेदो ( before यथा ). C थितः. D स्थिती.

( 26 ) [a]) C °मता. C om. स्वतन्त्राणा. C °रणभेदो. D °धारयावतन्त्र्ये°. AH °नामस्मादा°. A °राह परतश्च. C °धारणश्चत्परस्परतश्च. C भेदःसिप्र°. ACDH न चापि. ADH °न्त्रस्याशक्ति°. B लोके प्र°. ADH भेदावभा°. [b]) A शक्तिमता का°. D शक्तान्ननां. C स्वतन्त्र आ°. C ins. व व्याप्यव्यापकतावच्छेदेन अवयवावयविनोर्भेदास्ती ( after अनिर्वाच्या ). D एव भेदाभ्या. A °शक्तिब्रह्मणोर्भेदे न द्वै°. C ब्रह्मणो भेद न विद्यते. D भेद नं वि°. C om. यदुक्तं. H तदुक्तं. A °मस्ति ना°. CH °मस्य ना°. ADH °मेदक्तावलं°. D शक्तिमित्याहा. D °रामर्ह °सत्याह.

का. २८. C चापहीयेत. D चावधायेत. H चावर्धायेत.

( 27 ) BCN °श्रयेत. A स्वरूपमनि°. D ह्यरूपं न नि. H स्वरूप न नि°. AH प्रतियोगिभूतं. D °योग्यतं. CDI °श्रयेत. ADH नैकत्वाद्यव°. D °स्यातं पा.

# अथ साधनसमुद्देशः ।

(1) 'दिक् साधनम्' इति दिशोऽनन्तरं साधनमुद्दिष्टं लक्षयितुमाह—

**स्वाश्रये समवेतानां तद्वदेवाश्रयान्तरे ।**
**क्रियाणामभिनिष्पत्तौ सामर्थ्यं साधनं विदुः ॥ १ ॥**

(2) [a]) क्रियानिर्वृत्तौ द्रव्यस्य शक्तिः साधनम्, साध्यतेऽनया क्रियेति भाष्यकारप्रभृतयो विदुः । तथा हि

"गुणः साधनम्" (M. Bhā. on P. 3.2.115)

इति भाष्य उक्तम् । शक्तिरेवात्राधारपारतन्त्र्यादन्यस्माच्च स्वाश्रयस्य भेदकत्वाद् गुणशब्देनोक्ता । [b]) कृदाख्याताभिहितयोर्भावयोर्भेदाभिधानप्रसङ्गे तु यद् भाष्यम्—

"द्रव्यं क्रियाभिनिर्वृत्तिं प्रतिं साधनभावमुपैति"

(M. Bhā. on p. 3.1.67)

इति तदन्यत्राहत्य द्रव्यस्य साधनत्वव्युदासाच्छक्तिव्यवधानाश्रयेण गमयितव्यम् । [c]) शक्तं हि द्रव्यं साधनम्, न तु निराधारा शक्तिः सम्भवति ।

"परोक्षे लिट्" (P. 3.2.115)

इत्यत्रापि

"यदि गुणसमुदायः साधनम्, साधनमप्यनुमानगम्यम् । अथान्यद्गुणेभ्यः साधनम्, भवति प्रत्यक्षपरोक्षतायाः संभवः" (M. Bhā. on P. 3.2.115)

इति यद् भाष्यं तदप्येवमेव नेतव्यम् । शक्तेर्नित्यपरोक्षत्वात् क्रियाविशेषणमव्यभिचारादयुक्तमिति परोक्षताविशेषणसामर्थ्याच्छक्त्याविष्टं द्रव्यं साधनमुपन्यस्तम् । [d]) एवम्

---

(1) ADH ins. निरन्तराघस्तात् before दिक्° C ins. श्रीहरिर्जयति ; O ins. हरि श्रीगणपतये नमः । अविघ्नमस्तु before दिक्°.

का. १. C °न्तरो.

(2) [a]) C °यामिनि° ; I °यातिनि°. I om. द्रव्यस्य. A °तेऽनेन. B क्रिययेति. C °प्रवृतयो. CH गुणाः. D भाष्यदुक्त. C °त्र क्रियाद्रव्यादिपा°. C °दन्यासाच्च. C °नोक्तम्. [b]) ADH °ङ्गे हेतुः. ADH om. द्रव्य (before क्रिया°). C क्रियानि°. A °त्राह । नित्यद्र° ; C °त्राह द्र° ; H °त्राहत द्र°. A °नत्वे कदासा च्छ° ; D °ननरुदासा. A व्यधाना°. DO °श्रयेणा. A भवितव्यम् ; D मपितव्यम् ; H मथितव्यम्. [c]) AH शक्यं. DH om. न तु ... गुणेभ्यः साधनम् । The printed texts of the Mahābhāsya have the word तावद् after यदि । I अन्यथान्यद्. The printed texts of the Mahābhāsya have प्रत्यक्षपरोक्षतायाम् । A तदव ने°. DH तदवमतने. ADH °क्त्याविशिष्ट द्र° ; B 'शिष्ट द्र° ; C °क्त्यापीष्टं द्र°: [d]) ADH इति सा°. C °नं यद्धावलि ; ADH °ने यद्धवलि°. B °ख्या यो°. A शोभत ; C योकक्ष्य ; D योत्स्यत. ADH भाष्ये सा°. CO साधनं श°. C शब्दे प्रत्ययासं°. C क्रिया प्रभृतौ. O सिद्धक्रियामप्यर्थ. C om. समास (before प्रति°). A °त्यर्थ द्र° ; D °त्यर्थ द्र°.

"उपसर्गाच्छन्दसि धात्वर्थे" (P. 5.1.118)

इत्यत्र

"साधनेऽयं भवंल्लिङ्गसंख्याभ्यां योक्ष्यते"

(M. Bhā. on P. 5.1.118)

इति भाष्यं साधनशक्तिविशिष्टे द्रव्य इति व्याख्येयम्। तथा हि—धाताविवत्येवोक्ते शब्दे वृत्तसम्भवात् क्रियाप्रतिपत्तौ सिद्धायामर्थग्रहणाद्धातुक्ततोऽर्थ इति समासप्रतिपत्त्यर्थाद् द्रव्यमाश्रितम्। [e]) वस्तुपर्यायो ह्यर्थशब्दः। द्रव्यस्य च स्वरूपेण सिद्धस्वभावत्वात् क्रियया करणानुपपत्तेः कर्मादिकारकरूपेणैव तस्य करणम्। क्रिया हि कारकाणि करोति, तदपेक्षत्वात्तद्व्यवहारस्येति साधनात्मना द्रव्यस्य क्रियया करणादेवमुक्तम्। धातुरर्थः प्रयोजनमस्येत्येतत्तु भाष्यव्याख्यानमयुक्तम्। एवं हि शक्तेरेव क्रिया साध्यत्वेन प्रयोजनमिति द्रव्यं न प्रत्याय्येत। यत्तु

"साधनं वै द्रव्यम्, न च द्रव्यस्य प्रकर्षापकर्षौ स्तः"

(M. Bhā. on P. 5.3.55)

इत्यद्रव्यप्रकर्षव्याख्याने भाष्ये द्रव्यस्य साधनत्वाभिधानं तच्छक्तिशक्तिमतोर्भेदाविवक्षयेत्यवगन्तव्यम्। [f]) तथा हि—तिङन्तात् क्रियासाधनाभिधायिनः प्रकर्षप्रत्यय इति शक्तेः क्रियालक्षणकार्यानुमेयायाः कार्यद्वारेणैव प्रकर्ष इति क्रियाप्रकर्षे प्रत्ययस्येष्टस्य संग्रहे द्रव्याधारत्वाच्छक्तेः कार्यमुखवत् कारणभूतद्रव्यमुखेनापि कथं न प्रकर्ष इत्याशङ्क्य द्रव्यस्य तदभावमभिधातुमेतदुक्तमिति व्यतिरेकोऽनादृतः [g]) तत्र कर्तृकर्मणोः क्रिया समवैतीति स्वाश्रयसमवेतक्रियानिष्पत्तौ तयोः कारकता, करणादीनां तु पराश्रयसमवेतायां क्रियाया साधनभावः। न हि करणादिषु क्रिया समवैति। **क्रियाणाम्** इति व्यक्तिभेदापेक्षं बहुवचनम्। गुणक्रियापेक्षया वा सर्वेषां स्वाश्रयसमवेतक्रियापेक्षं साधनत्वम्। गुणक्रियाया हि कर्तारः सर्वे। अकिंचित्करस्य साधनत्वानुपपत्तेः। अत एव करणं कारकमित्यादिसाधनसामानाधिकरण्योपपत्तिः। इत्थं च **क्रियाणाम्** इति बहुवचनं सुष्ठु गमितं भवति। कर्तृकर्मस्था तु प्रधानक्रिया करणादीनामाश्रयान्तरसमवेता ॥ १ ॥

---

[e]) °र्यायोऽर्थ°. ADH क्रियायाः. AH कारणा°. D °नुपपन्नैः. A करणत्वम्. C °धनंमात्मानं; I °धनमात्मना. B °त्येतत् भाष्य व्या°; C भाष्ये व्या°; DO भाष्यं व्या°. ACDH क्रियासा°. C °यासाधन°. C om. न (before प्रत्या°). A यत्त सा°. D om. वै द्रव्यं ... साधनत्वाभिधानं. A स्तः द्रव्यद्रव्य प्र°. A °र्षव्याख्यानम्। भा°. C तच्छशिश°. [f]) C तिङ् साध°. ADH प्रकर्षे प्र°. A शक्तिः; D सक्तः. A °नुमेया. A °र्यद्वारणेवै. ADH प्रकर्षकार्यम्। प्रकर्षे. A °यस्य स्पष्टस°. A °रत्वशक्तेः. A °व इत्येतदभि°; DH °व मेतदभि°. B °कोनादृतः. [g]) A क्तादिकृता. H कारणा°. C हि का°. C om. सर्वेषां. C साधनं. C सर्वे कर्तारः. D °पन्नैः. C करणा का°. O om. °त्यादिसामा°. B गतं भ°. I °नमिया. C °मित्याह.

कथं पुनरेतदवगम्यते शक्तिः साधनं न पुनर्द्रव्यमित्याशङ्क्याह—

**शक्तिमात्रासमूहस्य विश्वस्यानेकधर्म्मणः ।**
**सर्वदा सर्वथा भावात् क्वचित् किंचिद् विवक्ष्यते ॥ २ ॥**

(3) [a]) घटादयो भावा विश्वशब्दवाच्याः । ते च तत्तदुदकाहरणादिकार्यसाधिकानां शक्तीनां समूहरूपाः । अत एव ताः शक्तयस्तत्र मात्रा भागा इति शक्तिसमाहारमात्रं घटादयः । ताश्च शक्तयोऽनेकविधाः । काश्चित् स्वहेतोरेव प्रभवन्ति, आश्रयविनाशमन्वपि च विनश्यन्ति । यथा बोधप्रदीपादीना प्रकाशशक्तयः । [b]) काश्चित् पौरुषेय्यः स्थित एवाश्रये निरुध्यन्ते । यथा बलादिशक्तयः । ता हि श्रमाभ्यासेन वृष्यद्द्रव्योपयोगेन च जायन्ते । अन्याः सत्येवाश्रये पुरुषप्रयत्नेन विधार्य्यन्ते । यथा विषस्य मारणशक्तिः । बीजस्याङ्कुरजननशक्तिः । [c]) अन्याः प्रभावातिशयवता विपरिवर्त्यन्ते । यथा योगिना सर्वभावानां रूपपरिवृत्तिराधीयते । काश्चित् कालपरिवासेन व्यज्यन्ते, यथा धर्माधर्मादिशक्तिः फलदान इत्याद्यनेकविधमुन्नेयम् । [d]) एवमनेकस्वभावत्वे शक्तिसमुदायस्य विचित्रे कार्ये यथाशक्ति भेदविवक्षायां प्रतिनियतसाधनभावोपपत्तिः । द्रव्यस्य तु साधनत्वे तस्यैकरूपत्वात् कार्यवैचित्र्यं न स्यादित्यर्थः । तदुक्तं भाष्ये

"गुणसमुदायः साधनं" ( M. Bhā. on P. 3.2.115)

इति । [e]) प्रधानक्रियाया एकैकशक्तिसाध्यत्वाभावात् समुदायग्रहणम् । गुणक्रियापेक्षया तु प्रत्येक शक्तेः साधनता । तस्याश्च प्रधानक्रियापेक्षया वैचित्र्यात् कर्मादिरूपता । यद् वा प्रत्येकं साधनत्वेऽपि समुदायग्रहणं शक्तीनां साधनत्वे तासां भेदादेकस्य कार्यभेदोपपत्तिरव्यापनार्थम् । [f]) तेनानेकशक्तेरपि पदार्थस्य सदैव तथावस्थानेऽपि काचिच्छक्तिः क्वचिदुद्भूता विवक्ष्यत इति घटं पश्य, घटेनोदकमानय, घटे उदकं

---

का. २. B °क्तिमत्रास°. C °मात्रस°. C °धर्मिणः. DH °र्वथादास°; B °र्वथा सर्वदामा°. H om. क्वचित्.

(3) [a]) C °श्वस्य वाच्यः. C °ना प्रस°. D ताः शक्रयः. C तत्र भाग. D °नेकविध्यः. AH °तोरेव दैवात् भ°; D °तोरेव देव प्र° AD °यादिनाश मत्वेव न च वि°; H °यादिनाशिमक्त्वेव च; B °शमन्वेव च वि°. C °श्यति. ACDHO °दीपाना. [b]) ADH पौरुषेऽप्यन्तः. A स्थिताः एवा°. C °ध्यते. AH वाधादिश°. D बाध्यादि°. AH समभ्या°; CD समाभ्या°. AH दृष्टद्र°; C द्रश्यद्र°; D दृष्यद्र°. ADH om. च ( before जा° ). AH सत्यो वा अपरपु°. O °त्येवाश्रयेषु. AH विध्वंस्यन्ते; D विव्यर्यते. C विशेषस्यः. D विषयस्य. I मरणश°. [c]) C °वर्तन्ते. C य्रोगीना. C °राश्रीयते. C व्यज्यते. B फल इ°. I °धत्वमु°. [d]) CO °वक्षं प्र°; HI °वक्षा प्र°. C °पत्ति°. C °दायाः सा°. [e]) C °ध्यत्वेत्वाभामा°. C °पेक्षायां. A °त्यात् । कर्माकर्मादिविरूपतायावा प्र°; H कर्मादिकर्मविरूपतायावा प्र°. ADH °त्वेनासां भे°. A °त्तिव्याख्याव°. f) ADH सत्येव तथा स्थानेऽपि. C कापि श°. C °स्यैकस्वभावात्. AD °त्र शक्तिः श°.

निधेहीत्यादि कर्मकरणादिभावो नियमेनोपपद्यत इति न कारकसाङ्कर्यप्रसङ्गः। द्रव्यस्य त्वेकस्वभावत्वात् कर्मकरणादित्वं नोपपद्यत इति गर्भीकृतेयमत्र युक्तिः शक्तेः साधनत्वे बोद्धव्या ॥ २ ॥

[g]) ननु च यत्र सन्ति शक्तयस्तत्र युक्तं यन्नियमेन विवक्ष्येरन्। यत्र दृश्यन्ते पुनरसत्यस्तत्र कथं तासां विवक्षा। तद्यथा शक्तिमादधाति, शक्त्या साधयति, शक्त्या-वायतते, शक्तेर्व्यपैतीति। न हि शक्तेः शक्त्यन्तरयोगः, अनवस्थापातात्। तथा धनविनाशं करोति, धनाभावेन युक्त इति निरूपाख्ये भावे का शक्तिः। स्थाल्यां पचति, स्थाल्या पचति, इति सम्भवनधारणोपकारा स्थाली करणाधिकरणभिन्ना कथ-मित्याशङ्कयाह—

**साधनव्यवहारश्च बुद्ध्यवस्थानिबन्धनः।**
**सन्नसन् वार्थरूपेषु भेदो बुद्ध्या प्रकल्प्यते ॥ ३ ॥**

(4) [a]) विवक्षारूपाया बुद्धेः शब्दनिमित्ता येऽवस्थाविशेषाः प्रतिनियतशब्द-निबन्धनाः तदाश्रयः कर्त्रादिकारकव्यवहारः। तथा हि—निरूपितेऽर्थे शब्दप्रयोगाद् यथानिरूपणं शब्दोपपत्तिः। निरूपणं चानपेक्ष्यापि बाह्यमर्थं स्वातन्त्र्यात् परिकल्पयति तांस्तानर्थविशेषान्। [b]) तथा हि सत्यपि वस्तुनि यावद् बुद्ध्या निरूपणं नास्ति तावदविषयः शब्दानामव्यवहार्य इति व्यवहारेषु बुद्धिरेव प्रभवतीति **सन्** इति निदर्शन-गर्भमभिधानम्। तत्र शक्तेर्द्रव्यायमाणाया बुद्ध्या स्वातन्त्र्येण निरूपणाच्छब्देनाभिधाने शक्त्यन्तरयोगो विरुद्धः। न हि तदा शक्त्यवस्थायामेव तस्यां तद्योगो येनानवस्था स्यात्, अपि तु द्रव्यावस्थायामभावोऽपि बुद्ध्या निरूपिताकारो द्रव्यायमाण एव शब्दवाच्यः। [c]) एवं तनुतरकपालत्वात् स्थाली पाकेऽनपेक्षितकर्तृविनियोगात् स्वातन्त्र्येण विवक्ष्यत

---

[g]) C om. युक्तं यत्. AH विवक्षा। दृश्यन्ते पु°. C °क्षेरन्; D °क्ष्ये दृश्यत्र. I पुनरन्वत्य°. D यो न यथा श°. C तया सा°. AH शक्त्या वर्तते; C शतया वायतते; B °क्त्या वा यतते; D क्त्या वातते. ADH व्यभ्येति; B व्यवैति. B तथा विना°; I साधनवि°. A °भावो न यु°; D °वेः न यु°; O मुक्त. B om. स्थाल्या पचति. A ins. स्थाल्याः पचति (before इति).

का. ३. D °बुद्ध्यवसानि°. D °न्धनात्. °र्थहयेषु.

(4) [a]) C बुद्धाः; D बुध्यैः. O °त्ताया ये°. C °शेषः. C °न्धनः. C °श्रयाः. ADH बाह्यार्थं; C वायार्थं. ADH स्वातन्त्र्यपरिकल्पापतितम्। AH ज्ञानार्थविशेषात्; D स्तानर्थ-विशेषात्. [b]) D हिनिसत्यपि. DH °हार्यत इति. O °हारे. D र्येविरेत. C ins. तत् (before प्रभ°). ADH °ति दर्शन°. AH बुद्धयाः; D वध्या. ADH °न्त्र्येणानि°. ADH तस्या. AH योगो. D वध्या. AD शब्दापवाच्यः. [c]) AH तनुनरक°; D तनतर°. AH °पाकोऽन°. ADH °नियोगा. ADH विवक्षित. ADH कर्ता. C ins. एतस्या एव साधकत्वविवक्षायाः (before तस्याः). B °वान्तावाधा रवि°. AH °त्तानिव्यवस्थितं. O °त्मन व्यवस्थितं. A °तसाधनाः; D प्रपितसाधनः.

इति कर्त्री, इन्धनोपकारानपेक्षया तस्या एव साधकतमत्वविवक्षायां तु करणम्, वास्तवाधारविवक्षायां त्वधिकरणमिति सर्वमुपपद्यते। अत एव हन्त्यात्मानमात्मना, आत्मनः स्वात्मन्यवस्थानम्, इत्यादयोऽपि प्रयोगाः प्रथितसाधिमानः। [d]) वक्ष्यति चैतत्—

" बुद्धयैकं भिद्यते भिन्नमेकत्वं चोपगच्छति "

इत्यादि। दृश्यविकल्पयोरभेदाध्यवसायेन व्यवहारोपपत्तेर्बहिरन्यव्यावृत्तिपरतया समन्वयोऽत्र समर्थनीयः, स्वात्मनि नान्यस्मिन्, स्वात्मन एव नापरस्यावस्थानमित्यादि। यथा शिलापुत्रकस्य शरीरमिति। इत्थं च वाक्यादपोद्धृतस्यापि पदस्य संस्कारे प्रथमत एवाप्रयुक्ते पदान्तरे विवक्षितस्यापि विशेषस्य रूपसामान्यादनवधारणे संभवत्येव पदावधिकमन्वाख्यानं संबधिसामान्येऽपेक्षिते। अन्यथा बुद्धया नियतमर्थरूपं क्रियादिसंबन्ध्यपेक्षं कथं निरूप्येत। अनपेक्षितसंबन्धिरूपस्यार्थसामान्यस्याभावादभ्युपगतं पदावधिकमन्वाख्यानम्। शास्त्रे

" धातुसंबन्धे प्रत्ययाः " (P. 3.4.1)

इत्येवमादीनां प्रत्याख्यानात्। यत्र च सर्वथाऽसङ्गतिः स्थालीमोदनेन काष्ठे पचतीत्यादौ तद् वाक्यमेव न भवतीति कथं वाक्यादपोद्धृताना पदानामन्वाख्यानेऽत्र प्रसङ्गः। [e]) अत एव चाक्षीणि मे दर्शनीयानीत्यादेर्विप्रयोगस्य निवृत्तये शास्त्रमर्थवदेव। सामान्यमपि हि पदार्थरूपमर्थान्तरसंसर्गयोग्यमेव संस्तूयते, न त्वङ्गुल्यग्रे करिशतमास्त इत्याद्यसमन्वितमेव। एवं च कृत्वा छन्दसि

" चपालं ये अश्वयूपाय तक्षति "

इत्यादावसाधुत्वशङ्कापनुत्तये व्यत्ययोऽर्थवानेव। नियतानुपूर्वीकस्य छन्दोवाक्यस्य संभवात्तत्रस्तथैव पदापोद्धारस्य न्याय्यत्वात्। [f]) लोके तु नानवस्थितं नियतानुपूर्वीकमसङ्गत वाक्यमिति न ततोऽपोद्धारप्रसङ्गः। तस्माद्वाक्यादपोद्धृत्य पदानुशासनेऽपि निर्दोषमेव पदावधिकमन्वाख्यानम्। तत्र च समस्तविशेषणविशिष्टस्यार्थस्य निरंशत्वादपोद्धारे सामान्यमात्रा बुद्धिपरिकल्पितशरीरैव। उपक्रम एव तु विशेषापेक्षाया वाक्यावधिक-

[d]) ADH °रन्या व्या°. ADH om. च (before वाक्या°). AD °युक्त पदा°. ADH सन्निवन्धिसामान्यापेक्षितो. IO बुद्ध्यापि. C ins. कृतं (before कथं) H has कृतं (for कथं). ADH °संवन्धरूप°. I °र्थसमानस्वभावादभ्यु°. A °गमने च व°; D om. शास्त्रे ... ख्यानात्. ADH °ख्यान प्रस°. [e]) D om. अत एव ... निवृत्तये. AH °क्षिणी मे दर्शनाये°. A सामर्थ्यवदेव; C समर्थवदेव. ADH °योग्यमेव। सस्क्रियत्वे. C करिणा श°. ADH °द्यसमुचितमेव. B om. अश्वयूपायः. D स्वरूपाय. B वक्ष्यतीत्य°. D पतद्गतीत्या°. AD °सावेकत्वशङ्का। यत्तु तत्र. H °सांकल्यशंका°. A °स्यासंभ°. [f]) AH लोके नाव. D त्रिलोके. C om. समस्त (before विशेषण). ADH निरन्तरत्वात्. ADH °मात्राधिकल्पित.

मन्वाख्यानं कथ्यते। न तु वाक्यस्यानन्त्यात् साक्षादन्वाख्यानं युज्यते। [g]) प्रकृतिप्रत्ययादिविभागकल्पनया हि पदस्यैवानुशासनमुपपद्यते। तस्य च केवलस्यासंभवाद्वाक्यस्थत्वे संबन्धिसामान्यापेक्षायां पदावधिकं तद्वाक्योपात्तसंबन्धिविशेषापेक्षाया तु वाक्यावधिकमन्वाख्यानमितीयाननयोः पक्षयोः विशेषः॥ ३॥

बौद्धे साधनव्यवहारे भाष्यकाराभ्युपगमसंवादकमाह—

बुद्ध्या समाहितैकत्वान् पञ्चालान् कुरुभिर्यदा।
पुनर्विभजते वक्ता तदाऽपायः प्रतीयते॥ ४॥

(5) [a]) कुरुभ्यः पञ्चाला अभिरूपतरा इति

"पञ्चमी विभक्ते" (P. 2.3.42)

इति पञ्चम्यर्थं सूत्रं भाष्ये प्रत्याख्यातम्, बौद्धस्यापायस्य सम्भवादपादान इत्येव सिद्धेः। तथा ह्याभिरूप्येण समानेन गुणेन कुरुभिः सह पञ्चालान बुद्ध्यैकत्वं समुदायभावमापाद्यातिशयाभिरूपतावशात् कुरुभ्यः पञ्चालाः पृथक् क्रियन्त इत्यस्ति संश्लेषपूर्वको विश्लेषोऽपायः। [b]) तदुक्तं भाष्ये

"यस्तैः साम्यं गतवान् स एवं प्रयुङ्क्ते" (M. Bhā. on P. 1.4.24)

इति। तैः कुरुभिः पंचालाना सादृश्यं सम्प्रधारणासामर्थ्यादाभिरूप्येण प्रथमं यो ज्ञातवानित्यर्थः। अनेन चैकबुद्धिनिवेशित्वेन कुरुपंचालानां देशप्रत्यासत्तिमाह भाष्यकारः। तत्पूर्वकस्तु सातिशयस्य निरतिशयाद्विभागः। पंचमीशब्दोऽपादानसंज्ञानत्वान्नोक्तो भाष्यकृता। [c]) सूत्रारंभवादिनापि निर्धारणाश्रयत्वेनैषां बुद्ध्यैव समुदायभावः समानगुणत्वादाश्रयणीयः। अन्यथा निर्धारणाधिकारादेव विभागे लब्धे विभक्तग्रहणादत्यन्तविभागप्रतीतौ न वास्तवः समुदायभावो युज्येत। तदेवं बौद्धः साधनभावोऽस्मादवसीयते। कारकप्रकरणे च तमब्ग्रहणात् प्रकर्षो न विवक्ष्यत इति गौणेऽप्यत्रापायेऽपादानसंज्ञा भवति॥ ४॥

---

[g]) ADH कवलस्य च सं°. O om. पदावधिकं ... पेक्षायां. ADH °पात्तसंबन्धवि°. ADH °गम सवादक°.

का. ४. BHIO समीहितै°. C यथा.

(5) [a]) B °रूपकरा. C om. पंचम्यर्थ. C सूत्रे भाष्य. D योद्धस्या°. C °स्यापादानस्य. C ह्यभिरूपेण. A समानगु°. B °वमानापदि प्रतीयते वशात्. D यद्य क्रिय° [b]) The actual sentence in the M. Bhā. is "यस्तैः साम्यं गतवान् भवति स एतत् प्रयुङ्क्ते". ADH सादस्यगं प्र°. A °रणमर्थादाभि°. A यो गतवा°. C याज्ञाख्यातवामित्यर्थः; D क्षान. A तत्पूर्ववस्तु नः सा°. DH तत्पूर्व वस्तु सा°. ADH °विभागात्. AH °दानसज्ञात्वा°. B °नः स°; C °नः सुज्ञानत्वा°. [c]) ADH °वादिनामपि. C °दायपायोः; D °दायमाचो. ADH °भावोऽपमा°. C बोधः. ADH °वो यस्या°. D नमग्रह°. AH °ऽप्यत्रान्वये; C °यापो. D °ऽपत्रायणे. ADH अन्यमपि. ADH संवादमाह.

(8) [a]) जातौ पदार्थे तज्जातीयाभेदेनानागतं निरूप्य योग्यसाधनविनियोगाज्जातिद्वारेण क्रियासिद्धावङ्गता व्यक्तिद्वारेण तु निर्वर्त्यमानता कर्मणो युज्यत इत्युक्तम्

" निर्वर्त्यमानं यत्कर्म जातिस्तत्रापि साधनम् "

इति । [b]) व्यक्तौ तु पदेन प्रत्याख्यायां शब्दं जनयति संयोगं करोतीत्यादौ जन्यमानस्य निर्वर्त्यस्य शब्दादेः कर्मणोऽनागतस्यापि वर्तमानव्यक्तिसारूप्यादसत्यपि जातेः प्रत्यायने भेदानध्यवसायाद् बुद्ध्याकारमुल्लिख्य योग्यसाधनविनियोगात् बौद्धस्यैव बहीरूपताध्यवसायाद् बाह्येन रूपेण निर्वर्त्यमानता, बौद्धेन तु साधनभावो युज्यत इत्यर्थः । जन्यमानस्येत्यनेन विकार्यप्राप्ययोर्व्यवच्छेदः ॥ ६ ॥

विकार्यं हि प्रकृतिरूपेण स्थितमेव । प्राप्यमपि स्वत एव क्रियद्वा बुद्ध्या नाध्यारोप्यत इत्याह—

**स्वतन्त्रपरतन्त्रत्वे क्रमरूपं च दर्शितम् ।**
**निरीहेष्वपि भावेषु कल्पनोपनिबन्धनम् ॥ ८ ॥**

(9) [a]) सदसत्पक्षभेदेन कार्यकारणभावस्य निराकृतत्वात् सर्वे भावाः क्रियारहिताश्चेष्टाशून्याः । तत्र क्रियायां स्वातन्त्र्यपारतन्त्र्यादिलक्षणं कर्तृकरणादिरूपं कारकत्वम् । क्रियारूपमेव च सक्रमत्वं यथावभासमनादिमिथ्याभ्यासवासनावशेन कल्पनाबुद्ध्युपरचितसनत्त्वम् । [b]) अपूर्वापरस्यापि भावतो विश्वस्य पूर्वापरतया स्वातन्त्र्यादिनावभासनादिति मिथ्यावभासोऽयमर्थेषु क्रियाकारकभाव इत्यर्थः । अद्वैतनये हि सर्वमुपप्लवते, असत्यत्वादिति विकल्पपरिघटितः शाब्दो व्यवहारो यथाप्रतीत्यविचारितसिद्धोऽभ्युपगन्तव्य इति दिगादिपदार्थवत् साधनपदार्थसिद्धिः । [c]) **'दर्शितम्'** इत्यद्वैतनयावलम्बिभिर्भाष्यकारप्रभृतिभिः, " कूलं पिपतिषति " इत्यादिप्रयोगसिद्ध्यर्थमाख्यातमित्यर्थः ॥ ८ ॥

एवं तावद् द्रव्यव्यतिरिक्तशक्तिदर्शनेन साधनं लक्षितम् । अव्यतिरिक्तशक्तिदर्शनेनाप्याह—

---

(8) [a]) H rep साधनत्वं तथा सिद्ध बुद्धिरूपप्रकल्पितम् । जातौ पदार्थे तज्जातीयाभेदेनानागत निरूप्य (after योग्य). C °सिद्धावगतौ. C निर्वसमा°. DH तत्कर्म. [b]) AD °देरेतत्कर्म° AH °मानत्वम् । व्यक्ति°. C वर्तमानसारू°. A भेदाध्यवसायो. CDHO भेदाध्यवसायात्. A °रूपता चाध्य°. D °रूप चाध्य°. ADH ins. तु (after बाह्येन). AH °स्येतेन. D °स्येतान्येन. A स्थान एव. AH क्रियाद्वारा. AH °ऽन्वारोप्यतः. D नोरो°. I नारो°.

का. ८. B °न्त्ररूपातन्त्र°. DH निरीक्षेष्व°.

(9) [a]) ADHO सर्वभा°. ADH °ष्टा अन्याः. ADH °न्त्र्यलक्ष°. ADH क्रमव त्वं. ADH यथाभास°. H °मानमनादि°. ADH °द्ध्युचरित°. [b]) ADH अपूर्वादस्यापि. A विश्वरूपपरतया. D °स्य पूपरतया. ADH °नाऽवभा°. AH अत्र द्वैत° : D अवद्वैत°. B °वतो सत्य°. ADH °ऽप्युपग°. [c]) B दर्शनमि°. C °तनुयावलंघमिः.

**शक्तयः शक्तिमन्तश्च सर्वे संसर्गवादिनाम् ।**
**भावास्तेष्वस्वशब्देषु साधनत्वं निरूप्यते ॥ ९ ॥**

(10) [a]) समवायवशाद्धर्मधर्मिणोरभेदमिव भेदेऽपि ये वदन्ति ते संसर्गवादिनो वैशेषिकाः । ते च स्वरूपं सहकारिणश्च भावानां स्वकार्यजनने शक्तिरिति प्रतिपन्नाः । सहकारिणः शक्तिः, कारणं शक्तिमत् । एवं सहकारिणामपि कारणं शक्तिः स्वकार्ये सहकारि रूपमिति शक्तिशक्तिमन्तः सर्व एव भावाः, न त्वन्या काचिदतीन्द्रिया शक्तिः षट्पदार्थव्यतिरिक्ता विद्यते । [b]) एवमपि साधनत्वं भावाना पदार्थानामपादानादिशब्दैर्न प्रत्याय्यते, अपि तु विभक्तिभिरेव । तथा च प्रत्यायनं योग्यतामात्रेण त्वपादानादिशब्द-प्रवृत्तिः । 'घटं पश्यति' इत्यादावेव द्वितीयादिभिर्महत्त्वाद्याधारनियतं प्रत्याय्यमानं शक्तिः साधनं भवति । आधारानवच्छिन्नस्तु महत्त्वादिः कर्मादिशब्दवाच्यो न किंचनापि साधयतीति विभक्त्येकसमधिगम्यः । [c]) प्रातिपदिकादाधारवाचिनस्तदुत्पत्तेः । आधार-समवाये साधनत्वस्य संस्पर्शादुपकारावस्थायां शक्तित्वमुपकार्यावस्थायां तु शक्तिमत्त्वं प्रमाणदृष्टमिति न काचिदनुपपत्तिः । [d]) अत एव शक्त्यवस्थायां शक्त्यन्तरेणायोगादन-वस्थापि नास्ति । अभावस्यास्मिन् दर्शने सप्तमपदार्थरूपत्वेन भाव्यत्वाच्छक्तियोगोऽ-विरुद्धः ॥ ९ ॥

तत्र को भावः कस्य क्व शक्तिरित्युदाहरणमाह—

**घटस्य दृशिकर्मत्वे महत्त्वादीनि साधनम् ।**
**रूपस्य दृशिकर्मत्वे रूपत्वादीनि साधनम् ॥ १० ॥**

(11) [a]) 'घटं पश्यति' इति दर्शनक्रियाकर्मभावापन्नस्य घटद्रव्यस्य महत्त्वानेकद्रव्यवत्त्वरूपाणि शक्तिस्वसमवेतानि साधनं कर्मकारकम् । तथा हि कणाद-सूत्रम्—

"महत्यनेकद्रव्यवत्त्वाद्रूपाच्चोपलब्धिः" (Vai. Sū. 4.1.6)

---

का. ९. C तेष्वथ श°. H om. साधनत्वं निरूप्यते.

(10) [a]) H om. समवाय ... वैशे. AD भेदमपि. AD °न्ति सं°. B °हकारिणां. ADH भावनां. A °पद्यन्त इत्यसह°. ADH om. कारणं शक्तिमत् ... शक्तिः षट्. [b]) ADH om. पदार्थाना. C ins. पदानामिव (after पदार्थानां). BI °क्तिरेव. ADH °यनयोग्य. AH °हत्वाधा°. AD °च्छिन्नम् । स्वम°. O महत्त्वामहत्त्वा°. ADH कर्मत्वादि°. AD किं तव नापि । [c]) A °वाच्यस्य उत्प°; C °वाचकत्वाधु°; D °च्यं त्वदुत्पत्तिः; H °वाचस्तदु°. I °कारावस्था-याश्च. C om. उपकार्यावस्थाया तु शक्तिमत्व. [d]) ADH सत एव. H °रूपत्वे तु. ADH अशक्तियोगो. AH विरुद्धः. D विरुद्धं. B तस्य त्वशक्ति°.

का. १०. D दृष्टिक°. C महददीनि. D दर्शिक°. D रूपस्या°.

इति। अस्यार्थः। अनेकद्रव्यं समवायिकारणं यस्य तदनेकद्रव्यं द्व्यणुकादि। तद्यस्यास्ति तदारब्धस्य तदनेकद्रव्यवत्। तद्भावस्तत्त्वम्। तस्माद्रेनोरुपलब्धिर्महति द्रव्ये। तेन बहुव्रीहिणा मतुपा च द्वौ मत्वर्थावुक्तौ। [b]) तत्रैकेन परमाणोर्यव्रच्छेदः। स हि रूपवानप्यनेकस्य द्रव्यस्यारंभकस्याभावान्नोपलभ्यते। अपरेण तु मत्वर्थेन द्व्यणुकादेर्व्यवच्छेदः। अत एव सूत्रान्तरमुक्तम्—

"अद्रव्यत्वात्परमाणावनुपलब्धिः"

इति। परमाणुग्रहणमत्रादृश्यमानस्योपलक्षणार्थम्। महति दृश्यमाने चानेकद्रव्यवत्त्वं दर्शनहेतुरिति त्र्यणुकस्य कारणबहुत्वमहत्वप्रचयेभ्यो महत्त्वस्योत्पत्तिरिति त्रिभिर्द्व्यणुकैरारंभान्महतोऽनेकद्रव्यवत्त्वेऽपि तदभावः। [c]) महतो हि दृश्यमानस्यानुवादेनेदं विधीयत इत्यदृश्ये नायने रश्मौ नास्यादृश्यतापत्तिः। न हि महत्त्वमप्यत्र दर्शनकारणं विधीयते। एवं ह्येकस्या आकृतेश्चरितः प्रयोग इति न्यायात् प्रक्रमो भेदार्थः पंचम्येव क्रियेत। अनेकद्रव्यवतश्च महत्त्वाव्यभिचारान् 'महति' इति न हेतुनिर्देशः, अपि तु विषयोपलक्षणमेव। [d]) 'रूपात्' इति च द्वितीयो दर्शनहेतुः। नीरूपस्य वायोर्महतोऽनेकद्रव्यवतश्चाप्यनुपलंभात्। तदुक्तं सूत्रम्—

"रूपसंस्काराभावाच्च वायावनुपलब्धिः" ( Vāi Sū. 4.7.1 )

इति। यतश्चानेकद्रव्यत्वस्य रूपस्य दर्शनहेतुत्वं न महत्त्वस्यापि ततो द्वयोरेव व्यतिरेकः प्रदर्शितः। महत्त्वस्याकारणत्वेऽपि च तद्विषयत्वाद्दर्शनस्य पारम्पर्येणोपयोगान् '**महत्त्वादीनि साधनम्**' इति बहुवचनम्। यद्वा द्रव्यत्वादीना सामान्यविशेषाणामप्यादिशब्देन सङ्ग्रहणात् बहुवचनम्। अत्र सामान्यविशेषा हि प्रधानं दर्शननिबन्धनम्। तदुपाधिकत्वेनार्थानाम्, पररूपव्यावृत्तस्यात्मन उपलंभात्। [e]) 'महति' इत्येव तत्के

(11) [a]) A घटस्य द्रव्य°; HD घटद्रव्य°; C घटस्य द्रव्यमहत्वा°. CD करणादसू°. D महत्यद्रव्य°. A अस्यार्थ. DH तदेकद्र°. BO om. तेन (before बहु°). [b]) ADHI °च्छेदात्. ADH °रंभकाभा°. ADH °कं द्रव्य°. AO °मत्र दृश्य°. H om. मत्र दृ ... त्र्यणुकस्य कारण°. D om. परमाणुगहण ... हेतुरिति. C कारणत्वामाहुः महत्त्व; ADH कारणबहुत्व प्र°. C तदपि भाव. [c]) A महतां हि; D सहतो°; H सहतां हि. C °मानुस्य. AD °श्येना( पवेर स्मीनास्या )दृश्यतासतिः. C °ने रश्मीनां प्रदृसात्रपातापत्तिः; H नामचे रस्मौ नास्या दृश्यताक्षतिः; A हि मत्वर्थेन दर्शने. C मत्वमप्यवे दर्शनं. HD मन्वाप्यन् दर्श°. C एवं कह्येकस्या क्रुतेश्च महतः प्र°. O चरितार्थः प्र°. AD न्यायप्रक्रमाभेदार्थ. ADH क्रियते. H °पलक्षणम्. [d]) ADH °राभावात्तु. ADH om. यतश्चानेकद्रव्यत्वस्य रूपस्य दर्शन (हेतुत्व). A °काप्रदर्शनम्°. H °दर्शिनः. C तस्मिन् विषयेत्वाद°. C °नस्याधारपा°. A यत्त्व द्रव्य°; D यत्वाद्रव्यस्या°. B °शब्देन शब्दसं°. A °मत्र सामान्यम्, विशेषादि. [e]) CD °नया अवयवद्र°. A गम्यते. AH तत् रू°. A °मनेकद्रव्ये च सम°; D om. द्रव्ये च समवायः ... इति। अनेके. B स्थापनं (for साधनम्). A ins. च (after साधनं). AH तथा सूत्रे अनेकद्रव्यरोगक्षम°. O °द्रव्येण द्रव्येण.

व्यभिचार आकाशादिनेत्यनेकद्रव्यवत्त्वादिति मतुपाऽवयविद्रव्ये प्रतीतिरभिव्यज्यते। 'अनेकद्रव्यवत्त्वात्' इति पुनरुच्यमाने तत्पुरुषसंभावनया द्रव्यप्रचयमात्रं गम्येत। 'रूपं पश्यति' इत्यत्र रूपस्य दर्शनक्रियायां रूपत्वं स्वसमवेतं सामान्यमनेकद्रव्ये च द्रव्ये समवायः साधनम्। तथा च सूत्रम्—

"अनेकद्रव्यसमवायाद्रूपविशेषाच्च रूपोपलब्धिः" (Vāi. Sū. 4.1.8)

इति। [f]) अनेके आरंभका यस्यावयविद्रव्यस्य तदनेकद्रव्यम्, तेन समवायात्, तत्र समवेतत्वात्। रूपस्य विशेष उद्भूतत्वम्। अतो नायनरश्मिरूपं बाह्यतैजसद्रव्यरूपेणाभिभूतमपोह्यते। अन्ये तु रूपं विशेष्यते व्यावर्त्यतेऽनेनान्यस्माद्रसादेरिति रूपत्वमेव सामान्यविशेष एवमुपदिष्ट इति वर्णयन्ति। अनेकद्रव्यत्वाभावाच्च परमाणोस्तद्गतरूपस्यादृश्यता। योग्यदेशत्वादयोऽपि सामर्थ्यात् साधनमिति बहुवचननिर्देशः ॥ १० ॥

**स्वैः सामान्यविशेषैश्च शक्तिमन्तो रसादयः।**
**नियतग्रहणा लोके शक्तयस्तास्तथाश्रयैः ॥ ११ ॥**

(12) [a]) रसं रसयति, गन्धं जिघ्रति, स्पर्शं स्पृशति, शब्दं शृणोति इति रसत्वादयः सामान्यविशेषाः समवेताः रसनादीनां रसनादिक्रियासाधनम्। तथा हि तैस्तैः **नियतग्रहणाः** नियतं स्वजातिबलादेव गृह्यन्ते, न तु द्रव्यवदनियतग्रहणाः। द्रव्यं हि कदाचित्सामान्योपाधिना गृह्यते 'द्रव्यम्' इति, कदाचिद् गुणेन शुक्लमिति, कदाचित् कर्मणा 'गच्छति' इति। [b]) रसत्वादीनां तु शक्तीनां स्वाधारा एवावच्छेदकाः स्वरूपग्रहणे शक्तिः। यथा हि रसस्योपलंभे रसत्वमप्युपलभ्यते तद्विशिष्टस्य तस्योपलंभादित्याश्रिताक्षेपः तथा रसत्वोपलंभेऽपि स्वाश्रयाक्षेपः। तथा रसस्योपलंभे तदाश्रयं द्रव्यमपि शक्तिरित्यपि ज्ञेयम्। [c]) पूर्ववच्चानेकद्रव्ये समवायोऽपि गृह्यते, परमाणुगतस्य रसादेरनुपलंभात्। एवं शेषेष्वपि वाच्यम्। इत्थं परस्परं शक्तिशक्तिमन्तो भावाः। तथा च न काचिन्नियता शक्तिः। संसर्गिणां परस्परं तत्त्वात्, अन्यस्य च योग्यदेशत्वादेः सहकारिणः तथात्वात् ॥ ११ ॥

---

[f]) A °नेके यस्यावयवा अवगवि°. AH विशेषतद्भूतत्व ; D °षतउतद्भू°. A न्यायेन अस्मिन् रूप तेन सद्रव्येणाभिभूत°. H न्यायनर°. C °वा व्यावृत्यते. ADH एवमपरिदष्टं. C सद्गतस्य रूप°. BI तद्गतस्य रू°. AH °दृश्यतया. D °नमिति निर्देशः.

का. ११. CO °ग्रहणाल्लोके. C °श्रमै.

(12) [a]) AH om. रसं रसयति ... रसत्वादयः. AD ते स्वैर्नियत°. ADH दृश्यन्ते. ADH °द्रव्यत्वादनि°. C om. कदाचित् (before कर्मणा). [b]) B स्वाधारावच्छे°. C °पलंभस्य. DH °श्रितापेक्षः. D °श्रयापेक्षः. O om. ऽपि स्वाश्रयाक्षेपः. O om. °तथा रसस्योपलंभे. A °श्रय द्र°. C विज्ञेयं. [c]) ADH °वत्त्वनेक°. O °द्रव्ये द्रव्ये. ADH °वायो गृ°. ADH परस्परशक्तिमन्तः. C काचि°. ADH °देशादेः. A तथा चोदितम् ; D तस्थात्वा. H तथात्वादित्.

**इन्द्रियार्थमनःकर्तृसंबन्धः साधनं क्वचित् ।**
**यद्यदा यदनुग्राहि तत्तदा तत्र साधनम् ।। १२ ।।**

(13) [a]) आत्मेन्द्रियमनोऽर्थसन्निकर्षात् ज्ञानं निष्पद्यते रूपादाविति संयोग एव साधनम्। सुखादौ त्वात्मान्तःकरणसंयोगादिति 'क्वचित्' इत्याह। किं वात्र परिगणनया, यद्यत्रोपकरोति तत्तत्र साधनमिति यथायोगं सर्वे भावाः शक्तिशक्तिमन्तः। [b]) तथा हि संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ कर्म च रूपिद्रव्यसमवायाच्चाक्षुषाण्युक्तानि। अवयवानामवयविनिष्पत्तौ संयोगः शक्तिः। गुणनिष्पत्तौ त्ववयविनः समवायः शक्तिः इति परोपकारि परतन्त्रं सर्वं शक्तिलक्षणमनुपतति ।। १२ ।।

[c]) सा च स्वकार्यपरतन्त्रावस्था साधनादिना सिद्धस्वभावार्थाभिधायिना शब्देन नाभिधातुं शक्यते, अपि तु यथायथं विभक्त्यादिरस्याः प्रत्यायने समर्थ इत्याह—

**स्वशब्दैरभिधाने तु स धर्मो नाभिधीयते ।**
**विभक्त्यादिभिरेवासावुपकारः प्रतीयते ।। १३ ।।**

(14) [a]) **स धर्मः,** क्रियां प्रति शेषभावः। कारकं साधनमपादानमित्यादिशब्दैः क्रियोपकारोपलक्षितं द्रव्यमभिधीयते प्राधान्येन, न तु क्रियोपकारलक्षणः साधनभावः समुद्भूतोऽस्मात् प्रतीयते। तथा हि—अत्रापि द्रव्यरूपतया साधनमामुखीकरोति। क्रियोपकारलक्षणो धर्मो द्वितीयां प्रतिपाद्यत इति परिगृहीतक्रियोपकारं द्वितीयादिविभक्तिप्रतिपाद्यं वस्त्विति शक्तिर्विभक्तिवाच्या। [b]) क्वचित्तद्धितवाच्या। शतेन क्रीतः शत्यः शतिक इति क्रये साधकतमत्वं प्रत्ययवाच्यम्। 'यत्र' 'तत्र' इत्याधारभावस्त्वल्वाच्यः। पयः पयो जरयति, मधु निरीक्षते, दधि समश्नाति इति प्रातिपदिकादेव शक्तिः प्रतीयते। अन्तरा त्वां च मां च कमण्डलुरित्यन्तराशब्दोऽव्ययोऽधिकरणमाहेत्यादिग्रहणम् ।। १३ ।।

---

का. १२. C °र्थं मन. D तदनुग्राहि. C नत्तदा. C तत्तत्साधनम्.

(13) [a]) C ins. यथा सत्त्वो ाले तदाश्रियं द्रव्यमपि सत्त्वं परमाणुगतस्य सत्वादेरनुपलंभात् साधनं क्वचित् यदा यदनुग्राहि तदा तत्र तत्साधनम् ( before आत्मेन्द्रि° ). CH एवं. ADH किं च तत्र प°. B om. तत्तत्र साधनमिति यथायोग. ADH शक्तिमन्तः. [b]) ADH पृथक् सं°. A °यात्ताद्रूप्याण्यु°. DH °यात्राहुषा°. C °वयवे नि°. ADH संयोगश°. AD गुणानिष्पन्नो. A °वयविस°. D °विप्रसुपवायः. D °मनपपतति. [c]) A स्वकीयप°. O °क्तिरस्याः प्र°.

का. १३. I स्वैः श°. C णाभि°. C °त्क्यादिरेवा°

(14) [a]) CO स्वधर्मः. AD कारकसा°. C °कारोपद्र°. ADH सामान्येन क्रियो°. ADH °लक्षणसाध°. DH °द्भूतास्मात्°. ADH तथाऽन्यत्रापि. A °नममुखी°. BHI द्वितीया. BCO प्रतिपा°. D om. विभक्ति ... शक्तिः. AH °पाद्यमस्त्विति. [b]) D कातः. B शक्यं ; D शक्यः. C शतीक. C क्रिया सा°. A °भावा वा° ; B °वस्त द्वा° ; DH °भाव अधाच्यः. D पया यगे. B रजयति. A अश्नाति, DH मश्नाति. I समधाति. A शक्ति प्र°. AD °शब्दो व्ययोधि° ; H °ब्दो पयोधि°.

कः पुनरसावुपकारलक्षणो धर्मः साधनमित्याह—

**निमित्तभावो भावानामुपकारार्थमाश्रितः ।**
**नतिरावर्जनेत्येवं सिद्धः साधनमिष्यते ॥ १४ ॥**

(15) [a]) साध्यस्वभावायां क्रियायामुपकाराय सिद्धस्वभावानां भावानां **निमित्तभावो** हेतुभावः । **नतिः** नमनमुपकाराभिमुख्यम्, **'आवर्जनम्'** अङ्गभावेन स्वात्मप्रत्यर्पणम्, क्रियोपजननतात्पर्य्यम् । [b]) **इति** शब्दः प्रकारे । इत्येवमादिभिः शब्दैरभिधीयमानोऽन्योऽपि **सिद्धः** निष्पन्नतया प्रतीयमानः, एवं भूतेन वा धर्मेण निश्रितः, न वस्तु संभवमात्रेण साधनमित्युच्यते ॥ १४ ॥

एवं मीमांसकवैशेषिकदर्शनेन शक्तिः साधनमित्युपपाद्य स्वदर्शने व्यतिरेकाव्यतिरेकग्रहं त्यजति ।

**स तेभ्यो व्यतिरिक्तो वा तेषामात्मैव वा तथा ।**
**व्यतिरेकमुपाश्रित्य साधनत्वेन कल्प्यते ॥ १५ ॥**

(16) [a]) **'सः'** इति हेतुभावः शक्त्यपरपर्यायः ।

"शक्तयः सर्वभावाना कार्यार्थापत्तिगोचराः"

इत्यतीन्द्रियाः पदार्थाद् व्यतिरिक्ताः शक्तयः केषांचिद् भवन्तु । सहकारिसमवधानोपकृतो भावः स्वरूपेणैव कार्यजनकः किमदृष्टशक्तिपरिकल्पनेनेत्यात्मैव भावानां शक्तिः । संसर्गिणः सहकारिणो वार्थान्तरभूताः । स्वकारणपरंपरया हि पदार्थः समुपजातो विशिष्टो यस्तत्तत्सहकारिसंपर्के तत्तत्कार्यजनने शक्त इति किमदृष्टया व्यतिरिक्तया शक्त्या । [b]) तत्कल्पने तस्या नियमहेतुर्भावस्वभाव एव वक्तव्य इति वरं स एवास्तु । तदत्राव्यतिरेकवादो वास्तु व्यतिरिक्ता वा शक्तयः सन्तु । नास्माकमत्र कश्चिद् ग्रहो व्यतिरेकाव्यतिरेकवादे । शब्दप्रमाणका हि वयम्, यच्छब्द आह तदस्माकं प्रमाणम् । शब्दश्च पदार्थानां व्यतिरिक्तमेव साधनभावं प्रत्याययति घटस्य दृशिक्रियाया कर्मभाव इत्यादाविति

---

का. १४. C °माश्रिताः. C °र्जनेत्ये°. BO सिद्धसा°.

(15) [a]) A °भावाना. A क्रियाणा. CDH सिद्धः स्व°. BO om. हेतुभावः. ADH स्वात्मनः प्र°. DH प्रात्य°. A °जननमतात्पर्यत ; D °जननतां ता°. H तात्पर्यंत. [b]) AD प्रकार. A °न्नः तथा प्र. CD °न्नं. ADH °मानेन. D °भूतमेवा ध°. A °श्रितवस्तु°. ADH om. स्वदर्शने.

का. १५. H om. वाते. D °त्मौव ; H त्मेव. AH व्यतिरिक्तमु°.

(16) [a]) ADH °कार्यापत्ति°. ADH °दार्थाव्य°. D °पकृतोः. C °मित्यादौ भा°. ADH °पजायते. AH यस्ततत्सह°. ADH °जननशक्तिरिति. ADH °दृष्टव्यति°. [b]) D °तुर्मापम्व°. I हेतुभावस्व°. H °भावः स्वा°. C व्यक्त्य इति°. ADH परं स°. H तादृशव्यति° ; C शक्तिरियति का वा. I °द्राह्यो. ADH व्यतिरेकवादे.

व्यतिरेकोपाश्रयः शब्दनिबन्धनो व्यवहारः । [c]) तथा च प्रातिपदिकेन प्रत्येऽभिहिते शक्तौ कृतबन्धा शक्तिः प्रवर्तते ॥ १५ ॥

"यद् यदा यदनुग्राहि तत्तदा तत्र साधनम्"

इति व्याप्तिमुक्तां क्रियाणा अपि साधनत्वेन आपेक्षकाभिमतेन संवादयितुमाह—

संदर्शनं प्रार्थनायां व्यवसाये त्वनन्तरा ।
व्यवसायस्तथारंभे साधनत्वाय कल्पते ॥ १६ ॥
पूर्वस्मिन् या क्रिया सैव परस्मिन् साधनं मता ।
सन्दर्शने तु चैतन्यं विशिष्टं साधनं विदुः ॥ १७ ॥

(17) [a]) संप्रदानसंज्ञायाम्

"क्रियाग्रहणमपि कर्तव्यम्" (Vā on P. 1.4 32)

इत्युक्ते इह कश्चित् कंचिदर्थं समपश्यति, स दृष्ट्वा प्रार्थनया व्यवसायं करोति, अध्यवसाये प्रारंभः, प्रारंभे फलप्राप्तिरिति सन्दर्शनादिभिराप्यमानत्वात् "क्रियापि कृत्रिमं कर्म" इति भाष्य उक्तम् । [b]) तत्र साध्यस्वभावाया अपि सन्दर्शनादिक्रियायाः साधनत्वमापेक्षिकम् । सम्यक् समन्ताद्वा दर्शनं सन्दर्शनं फलविषयः संकल्पः । तत् प्रार्थनायां फलोपायविषयेऽभिलाषे, साधनत्वाय कल्पते, साधनं भवति । अर्थदर्शने हि सत्यभिलाषोत्पत्तिः । [c]) व्यवसायो दृढप्रतिज्ञता, क्रियाविशेषस्य फलसाधनत्वेन निश्चयः । तत्र 'अनन्तरा' प्रार्थना साधनम्, अभिलाषे सति निश्चयकरणात् । व्यवसायश्चारंभक्रियायां मानस्यां प्रवृत्तौ साधनम्, व्यवसायबलेनार्थक्रियाकरणारंभात् । तया च क्रिययाऽऽप्यमानत्वाद् भौतिकी क्रिया कर्म भवति संक्षेपतः । [d]) पूर्वस्मिन् पूर्वस्मिन् व्यापारेऽपेक्षिते या क्रिया कर्तव्यत्वात् सैव पूर्वस्मान्निवृत्ता पूर्वकालभाविनी क्रिया परस्मिन् उत्तरोत्तरभाविनि साध्ये साधनं भवति । तदात्मलाभे सिद्धत्वेनोप-

---

[c]) D शर्क्तात्कृतप°. B om. यद् यदा ... संवादयितुमाह. A यदनुगृह्णाति तदा तत्र तत् सा°. DH यदनुग्राहि. ADH व्याप्तिमुक्तां. AO व्याप्तमुक्तात्. C क्रियायां. A साधनत्व.

का. १६. B om. this Karika. C प्रार्थनया. ACDH व्यवहारे. H साधनत्वा क°.

का. १७. D om. या. C °नं मतं. O सन्दर्शनेषु.

(17) [a]) ADH °णं क°. A °त्युक्तम्. C पदार्थमुद्दश्य स°. A °यमानः त्व°; DH °मानव्य°; C °याध्यवसायां. I °मानत्वाद्भिगमहत् क्रि°. [b]) ADH om. सन्दर्शन (before फल°). C °नायमपि. C °पाये वि°. C °ऽभिगोरे. A अथ दर्शनाद्; DH अथ दर्शनेहि. ADH सत्यकिपि भापोत्पत्तिः. [c]) ADH °सायात्. ADH दृढमाहिता°; C दृढप्रा°. BCIO °या मानस्याः प्र°. A °यभावभेदार्थ क्रि°; D °यसायबलेनार्थ क्रि°; H °यसायबलेनार्थक्रि°; B °यसन्धेना°. [d]) A om. one पूर्वस्मिन्. D यापारोपे°. A कर्मर्यत्वात्. A °कालभाविता; C °भाविनो. ADH °त्वोपयो°.

योगात्। [e]) तदयमर्थः। पूर्वस्मिन् सन्दर्शने या क्रिया प्रार्थनादिका सैवोत्तरां प्रति साधनं मता। अथ सन्दर्शनक्रियायाः किं साधनमित्याह—

"सन्दर्शने तु चैतन्यम्"

इति। 'तुः' विशेषद्योतकः। चिद्रूप आत्मा यो भुङ्क्ते भावान्। विशेषोऽस्य फलाभिलाषयोग्यता। [f]) यद्यपि च क्रिया साध्यस्वभावाऽनिष्पन्ना तथापि निष्ठावस्थायां सिद्धत्वात्, साधनशब्देन च शक्तेस्तत्रासमवायेऽपि व्यतिरेकेणाश्रयाद् युक्तः साधनभावः। क्रियायां च क्रियान्तरस्यासमवेतत्वात् सैव क्रियान्तरभावने कर्तुः करणम्। [g]) अयमत्र परमार्थः। यदपेक्षया यत् सिद्धं तत्तस्य साधनं निष्पादकं कारकं भवति। तदानीं हि कर्तुः क्रियानिष्पत्तौ करणान्तरं नास्ति। भावी चांशो भूतेनांशेनाप्यमानत्वात् कर्म भवति। कर्ता हि क्रियया यदीप्सति तत्कर्म। अत्र च क्रियांश एवेप्स्यतेऽपरेण सिद्धेन क्रियांशेनेत्यारंभेण मानसव्यापारेणाप्यमानत्वाद् भौतिकी क्रिया कर्मेति तेनाभिप्रेयमाणस्य संप्रदानत्वं सिद्धम्, 'युद्धाय सन्नह्यते', 'श्राद्धाय निगह्लते' इति। [h]) गत्यर्थधातुविषये संदर्शनादीनां भेदाभेदविवक्षा, पच्यादावभेदविवक्षैव, श्राद्धाय निगह्लत इत्यादौ भेदविवक्षैवेति च वक्ष्यते। तदेवं 'व्यतिरेकमुपाश्रित्य साधनत्वेन कल्पत' इति क्रियाया अपि साध्यसाधनभावो व्यतिरेकाश्रयेणोपकार्योपकारकभावेन भाष्योक्त उदाहृत इति स्थितमेतत् शक्तिव्यतिरिक्ता क्रियोपकारार्थमाश्रिता साधनमिति सामान्येनोच्यत इति ॥ १६, १७ ॥

[i]) वार्तिके कारकमिति संज्ञा साधनमिति संज्ञिनिर्देशेन कर्तव्या। अन्वर्थसंज्ञाविज्ञानाद्वा साधकस्य लाभ इति।

"अन्वर्थमितिचेदकर्तरि कर्तृशब्दानुपपत्तिः"

(Vā. on P. 1.4.23)

इत्युक्तम्। तत्राकर्तरि करणादौ कर्तृशब्दस्य कारकमित्यस्योपपत्तिं समर्थयितुमाह—

---

[e]) ADH दर्शने. H om. क्रिया प्रार्थनादिका ... सन्दर्शनं. C om. मता. AD दर्शनक्रियायां क्रिया सा°. A °शेनं तु. A चिन्मय अन्यायो मक्षभावान्; C भुक्तेऽर्थभावाद्धि°; D चिडप आत्मा यो भक्षभावान्. [f]) C विशिष्टावस्था°. BCO साधनं श°. ADH om. °भावः। क्रियायां ... तत्तस्य साधनं. [g]) A om. कारकं (after निष्पादकं). ADH तदा हि°. AD कारणान्तरं. H om. निष्पत्तौ कारणान्तरं ... कर्ता हि क्रिय). AD भावानां नाशो न तेनाशेन. AD कर्त्रा हि क्रियादीप्सितं. ADH विक्रियान्तर एवेप्स्यते. A सिद्धेनं क्रि°. CI समान व्या°. ADH शुद्धाय सह्ययते. ADH निगल्मते. [h]) B वप्यादा°; I वच्चादा°. C उदाहरतीति. ADH °क्तिव्यतिरेका. [i]) AD वार्तिककारमतमिति संज्ञा. H वार्तिककारमिति. C °र्थसंज्ञाति लमते तथा हि साधनान्तरविनियोगव्यापाराद्. A °नात् सा°; DH °ना सा°. ADH नन्वन्वर्थ°. ADH करणादिकर्तृ°. ADH कारक इत्य°.

निष्पत्तिमात्रे कर्तृत्वं सर्वत्रैवास्ति कारके ।
व्यापारभेदापेक्षायां करणादित्वसंभवः ॥ १८ ॥

(18) [a]) सामग्रीसाध्यत्वात् क्रियाणां सर्वे कारकत्वं क्रियानिष्पत्तिविषयमभेदेन प्रतिपद्यन्ते, पचन्त्येत इति । यदा तु कः कथं पचतीति विवक्षा तदा प्रधानक्रियानिष्पादने विचित्रव्यापाराणि कारकाणि यथास्वं व्यापारातिशयवशेन करणादिसंज्ञाः प्रतिलभन्ते । [b]) तथा हि साधनान्तरविनियोगव्यापारः कर्ता । निर्वृत्तिविकारप्राप्त्याहितसंस्कारं कर्तुः क्रिययेप्सिततमं कर्म । ज्वलनाद्यनुभवत् कारकान्तरव्यापारैरव्यवहितव्यापारं करणम् । [c]) प्रेरणानुमननानिराकरणव्यापारं कर्मणा संबध्यमानं संप्रदानम् । अपायमवधिभावोपगमनेन साधयदपादानम् । कर्तृकर्मव्यवहितक्रियाधारकमधिकरणम् । स्वतन्त्रं प्रेषयद्धेतुरिति । [d]) सामान्यपूर्वकत्वाच्च विशेषस्यावान्तरव्यापारेऽपि कारकत्वमनुवृत्तमिति करणं कारकमिति सामानाधिकरण्योपपत्तिः । अकारकस्य च विशेषसंज्ञाभावः, वृक्षस्य पर्णं पततीति । अनपेक्षिते च कर्तृव्यापारे स्थाली पचति, एधाः पचन्ति, असिश्छिनत्ति इति प्रधानक्रियायामेवैषां कर्तृत्वम् । [e]) संप्रदानापादानयोः स्वव्यापारे स्वातन्त्र्यविवक्षा नास्ति । द्वितीयस्यादातुरपगन्तुश्चापेक्षणात् । अत एव

" सिद्धं तु प्रतिकारकं क्रियाभेदात् .... " ( Vā. on P. 1.4.23. )

इति प्रधानक्रियार्थेषु यथास्वं कारकव्यापारेषु पचादीनामेव वृत्तिर्वर्णिता । तदेतद्भाष्य उक्तम्—

" सामान्यभूता क्रिया वर्तते, तस्या निर्वर्तकं कारकम् "
( M. Bhā. on P. 1.4.23. )

इति ॥ १८ ॥

अत्रैव दृष्टान्तमाह—

पुत्रस्य जन्मनि यथा पित्रोः कर्तृत्वमुच्यते ।
अयमस्यामियं त्वस्मादिति भेदो विवक्षया ॥ १९ ॥

---

का. १८. H om. सर्वत्रैवास्ति ... संभवः. D कारको. C °पेक्षाया. C °दित्वस्य संभवेः ; D संभवतः.

(18) [a]) H om. सामग्री ... कारकत्वं. AD om. क्रियाणां. A ins. एव ( before कारकत्वं ). C om. °निष्पत्ति°. C °विषये. DH प्रति प्रतिप°. ADH om. पचन्ति एते. I om. कथं. A °ष्पादनात् ; DH °ष्पादनो. ADH om. कारकाणि. C प्रतिपद्यते. [b]) ADH °न्तरावियोग व्या°. ACDH निवृत्ति°. I निपुत्ति°. AD °संस्कारं. C कर्तु ; BO कर्तृक्रि°. A हेतुतामनु°. [c]) ADH °पारकर्म°. A स्वतन्त्रः प्रेषयन्. [d]) AD °वृत्तिकरणं कारकमिति करणं कारकमिति. D वृक्षस्य पर्यैर्नधतनी. O एधांसि. BCHIO पक्ष्यन्ति. [e]) BHO °यस्य दा°. AD निर्वृत्तिर्व°. C ins. सामान्यश्रत एव सिद्धं तु पंचादीना प्रतिकारकक्रियाभेदादिति. AD ins. या ( before वर्तते ). ADH निवर्तकं.

का. १९. D तन्मनि. C °मस्मादियं. D °स्मास्मि. O भेदावि°.

(19) [a]) पितरौ पुत्रं जनयत इत्यविवक्षिते जननव्यापारभेदे जनिक्रियाकर्तृत्वमुभयोः प्रसिद्धम्। कः कथं जनयतीति भेदविवक्षायामयं पिता बीजमादधदस्या मातरि गर्भमाधत्ते। इयं तु माताऽस्मात् पितुः पतद् बीजं धारयन्ती जनिक्रियाकर्तृत्वमनुभवतीत्यधिकरणत्वं मातुः। [b]) कर्तृत्वमपादानत्वं च पितुः, कर्तृत्वं मातुरिति भिद्यते प्रवृत्तिः। सामान्यपूर्वकत्वाच्च विशेषस्य जनिः सामान्येनात्मलाभवचनो विशेषविषये प्रेषणविषयबीजधारणबीजच्युतिवचनः। यद्वा प्रकृत्यर्थोऽविशिष्टः, प्रत्ययार्थस्तु णिजर्थो जनयतीति प्रेषणादिः यत्रायं विभागः। साध्यपक्षनिक्षिप्तमपीदं प्रसिद्धत्वान्निदर्शनम्॥ १९॥

[c]) तदेवं प्रधानक्रियायामेव सामान्यविशेषभावेन कारकं करणमित्यादिसामानाधिकरण्यमुपपादितम्। इदानीं गुणक्रियापेक्षया स्वातन्त्र्यं प्रधानक्रियापेक्षयास्वातन्त्र्ये सत्यप्यनपगतमिति प्रकारान्तरेण

'सामान्यभूता क्रिया वर्तते' (M. Bhā. on P. 1.4.23)

इत्येतद्भाष्यं गमयितुमाह—

**गुणक्रियाणां कर्तारः कर्त्रा न्यक्कृतशक्तयः।**
**न्यक्कायामपि सम्पूर्णैः स्वैर्व्यापारैः समन्विताः॥ २०॥**
**करणत्वादिभिर्ज्ञाताः क्रियाभेदानुपातिभिः।**
**स्वातन्त्र्यमुत्तरं लब्ध्वा प्रधाने यान्ति कर्तृताम्॥ २१॥**

(20) [a]) ज्वलनाद्यवान्तरव्यापाररूपाणां **गुणक्रियाणां** स्वातन्त्र्यात् सर्वे **कर्तारः,** प्रधानक्रियाविषये तु **कर्त्रा** स्वतन्त्रेण विनियोक्त्रा न्यक्कृता तिरस्कृता शक्तिः

---

(19) [a]) C जननभेदे व्यापारभेदे क्रिजनिक्रि°. I °त्वमनयोः प्र°. B प्रसिद्धः. C om. कः. I कं कथ. AH °यामपि; D °यामपी. AH धारयतीति; D धारयन्तीति. ADH °न्ती क्रिया°. C °त्वं मातुरिति भवती°. [b]) ADH ins. पितुः (before कर्तृत्वं). H rep. सामानाधिकरण्योपपत्तिः (in the commentary on V. 18) ... भिद्यते प्रवृत्तिः. AH प्रोषणबीज°; D पेषणवी°. O प्रेरणाविषयबी°. C बीजोत्पत्तिव°. ADH °त्यर्थोऽशिष्टः; BIO °त्यर्थोवि°. ADH °र्थस्तु त्यर्थो. ADH प्रेषणा य°. O प्रेरणादिः य°. ADH °पक्षक्षिप्त°. A °द्धत्वादिद°. [c]) B जनादी. B om. स्वायन्त्र्य ... पेक्षया. B सामान्यं भूत°. O वर्तन्ते.

का. २०. C कर्मण्युद्भूतशक्तयः. ACDHI त्यक्तायामपि°. O समर्थिवताः.

का. २१. CD कारण°. D क्रियायां दा°. CD लब्धा. D कर्तृमणात्.

(20) [a]) B om.° रूपाणां गुण°. D °पाररूपाररूपा°. D प्राधान्यक्रि°. BO °न्त्य येषा. B om. तेन (before यथा°). B om. अस्वातन्त्र्यं (before आपा°). ACDH त्यक्तायां. B °तन्त्र्यावेग°. ADH °थास्वं व्या°. ADH स्वभावक्रिया°. ADH °भावागम°. A °गताः सह्यमर्थं जनयन्ति। योगो°. D °रूपमव्यजत यवति योगो°. D °धीनानन्यमा°. ADH यस्मिन् क्रि°.

स्वातन्त्र्यमेषामिति तेन यथायथं न्यग्भावमस्वातन्त्र्यमापादिताः सन्तः **न्यक्तायां** न्यग्भावेऽपि स्वव्यापारे स्वातन्त्र्यानपगमात् अकिंचित्करस्य क्रियासिद्धौ हेतुभावानुपपत्तेः यथास्वं स्वव्यापारानुष्ठानेन प्रधानक्रियाङ्गभावगमनात् कर्तृविनियोगेऽपि यथायथमात्मीयैः सर्वैरेव ज्वलनादिव्यापारैरवियुक्ताः तत्क्रियाविशेषविषयैः करणादिसंज्ञारूपैरधिगताः तद्रूपमत्यजन्त एव विनियोगोत्तरकालमपि स्वव्यापारानुष्ठानलक्षणं स्वाधीनत्वमासाद्य स्वस्मिन् क्रियाभेदे स्वतन्त्राः प्रधानक्रियायामेव **कर्तृतां** कारकत्वं भजन्त इति करणं कारकमित्याद्युपपत्तिरित्यर्थः । [b]) करणादीनि हि कर्तृप्रैषे न्यग्भूतानि स्वव्यापारमनुतिष्ठन्ति तथा भवन्तीति कर्त्रा स्वव्यापारे कर्तृत्वार्थमेवैषां नियोगात्, नियुक्तानां सतां स्वव्यापारे स्वातन्त्र्यमनुभवता करणादित्वे प्रधानक्रियानिष्पत्तिरित्यविरोधः स्वातन्त्र्यपारतन्त्र्ययोः । यदेव हि स्वव्यापारे स्वातन्त्र्यं तदेव प्रधानक्रियायां पारतन्त्र्यं नान्यत् किंचित् । तच्च कर्तृविनियोगे सत्युत्तरकालमेव भवति । पूर्वन्तु कर्तृविनियोगाद्योग्यतामात्रेण स्वातन्त्र्यमुच्यते । इत्थं च करणं कारकमिति विषयभेदोऽपि नास्ति । स्वव्यापारे, स्वातन्त्र्यस्यैव प्रधानक्रियायां करणादित्वात् । [c]) तदेतदुक्तम् ।

“ सिद्धं तु प्रतिकारकं क्रियाभेदात् पचादीनां करणाधिकरणयोः कर्तृभावः ”
( Vā. on P. 1 4.23 )

इति । तत्र

‘ अधिश्रयणोदकासेचन .... ’ ( Vā. on P. 1.4.23 )

इत्यादिना कर्तृकरणाधिकरणानां गुणक्रियामुक्त्वा

‘ अपादानादीनां त्वप्रसिद्धिः ’ ( Vā. on P. 1.4 23 )

इति पुनश्चोदिते

“ न वा स्वतन्त्रपरतन्त्रत्वात्तयोः पर्यायेण वचनं वचनाश्रया च संज्ञा ”

इति पुनः सिद्धान्तितम् । [d]) तथा हि वलाहको विद्योतते इति विद्युदभेदविवक्षायां प्रयोगात् स्वव्यापारेऽस्त्येवापादानस्य स्वातन्त्र्यम् इत्याहुः । ग्राम आगच्छतीति तूक्तेऽर्थान्तरावगमादपादानव्यापारानवसायात् प्रयोगाभावः । अस्ति तु ग्रामस्यापादानस्य क्रियासिद्धौ कश्चिद् व्यापारोऽवधिभावापत्तिलक्षणः । अन्यथा ग्रामस्य समीपादागच्छतीति-

---

[b]) ADH करणानि हि. ADH °षेऽन्यसूतानि. AD नियोगाना नि°. H नियोगा नि°. ADH °त्तिरिति विरोधात् स्वा°. D om. °पारतन्त्र्ययो ... योगे सत्युत्तर. AD पूर्वतः. ADH °विनियोग्यतामा°. I °णं कारकान्तरमिति. O स्वव्यापारैः. [c]) C om. सिद्धं तु; ADH om. तु ( after सिद्धं ). A °यणादिकालेचनेत्या° ; C °यणोद्देशकासेचनेत्याना ; D °यणोदकागेचने°. ADH °करणादीनां. ADH °दानाना त्वप्रसिद्धमिति. ADH °तन्त्रात्र्योः. ADH °यात् सं°. [d]) ADH °तीत्युक्ते. C °पारः नव°. D ins. ग्रामादागच्छतीतिवत् ( after °तीतिवत् ). AH किं ग्रामस्य कार°. D कं ग्रामस्याकारत्वा. C °त्रापि ग्रामकत्वं.

संबन्धे शेषषष्ठ्यां प्राप्तायां हेतौ तृतीया। [b]) नैयायिकास्त्वाचक्षते, गुणद्रव्ययोर्यन्निमित्तं स हेतुः। स चाकारकविभक्तेर्विषयः। यत्तु क्रियापदोपात्तायाः क्रियाया निमित्तं तत्कारकमेव। यथा ' विद्यया वसति ' इत्यादाविति

' अनुर्लक्षणे ' (P. 1 4.84)

इत्यत्र हेतोरपि लक्षणशब्देनाख्यानादविशेषमनयोः संभाव्यापाकरोत्याश्रितेत्यादिना। [c]) **लक्षणे** इत्यत्र लक्षणशब्दो भावसाधनः। '**लक्षणं विदुः**' इत्यत्र तु करणसाधनः। **लक्षणे** लक्ष्यमाणवस्तुप्रकाशने। यद् '**आश्रितावधिभावम्**,' आश्रितोऽवधिभावो मर्यादारूपं यत्र तल्लक्ष्यतेऽनेनेति **लक्षणं** ज्ञापकं **विदुः** जानन्ति तज्ज्ञाः। यत्रावधिभावः प्रज्ञायते हेतावपि तल्लक्षणम्। अत एव **तुः**' विशेषावद्योतकः। [d]) अन्ये त्वाहुः। कार्योत्पत्तावुपयोगो हेतोः, प्रत्ययोत्पत्तौ तु लक्षणस्येति। तदसत्। हेतोरपि प्रत्ययोत्पत्तौ व्यापारदर्शनाद्विद्यादेरपि हि वासादिनिश्चये व्यापाराल्लक्ष्यमाणवस्तूपजने योग्यतामनादृत्यावधित्वेनाश्रितो जनको भवतु मा वा भूदिति लक्षणम्। तद्यथा वृक्षमनु विद्योतते विद्युदिति वृक्षो लक्षणं विद्योतनस्य। वृक्षं प्राप्य विद्योतत इत्यर्थः। [e]) कथं तर्ह्यनुर्लक्षण इत्यत्र शाकल्यस्य संहितामनु प्रावर्षद् इत्युदाहरणम्। यावता संहिता नावधिमात्रेण वर्षणस्य परिच्छेदिका प्रतीयते, अपि तु जनकत्वेन। जनकश्च हेतुः, न लक्षणमिति हेतुरेवात्र ज्ञापकत्वसामान्याल्लक्षणशब्देनोक्त इत्यविरोधः। [f]) ननु च धूमोऽग्निना प्रसिद्धसाहचर्योऽसकृद्दर्शनादवधृतः केवलोऽप्यदृश्यमानमग्निं कारणान्तरप्रभवं लक्षयतीत्येवं लक्षणं स्यात्। संहिता तु प्रथममेव दृश्यमाना, न तस्या असकृद्दर्शनं दर्शनावृत्तिरस्तीति कथमसौ लक्षणं स्यात्। [g]) अत्रोच्यते। यद्यप्येतदस्ति लोके येनासकृल्लक्ष्यते तल्लक्षणमिति तथापि प्रतीता कार्योदये शक्तिर्यस्य कारणस्य तथाविधमपि कारणं लक्षणं भवति। कार्यस्य हि यः परिच्छेदः तत्र हेतुभावेन कारणमपि लक्षणम्, कार्यपरिच्छेदकत्वात्। यथैव हि भूयोदर्शनेन गृहीताविनाभावोऽन्यं गमयति तथा हेतुरपि परानपेक्षो जनयन् कार्यस्याव्यभिचारात्

---

[b]) ACDH स च कार°. C पुनर्लक्षण°. [c]) C इत्यत्र नु. B लक्ष्यमात्रेण वस्तु°. ACD ins. हेतुः (after °प्रकाशने). A om. यद् (after °प्रकाशने). ACD यत्र ल°. AD तेनेति. AH °वधिर्न प्रज्ञायते तावपि. D °वधिमानं ज्ञायते हे°. [d]) D हेताः. ADH °श्चयो व्यापारलक्षणे व°. CO °पजनने. CD °त्वेनाश्रितौ. A ins. विद्युतो (before वृक्षो). [e]) D °हितोमनुभाव°. C om. यावता. CI om. वर्षणस्य. D rep. जनकत्वेन. D न भक्षण°. A ज्ञेयत्वसामा°; DH ज्ञायत्वसाधान्या°; I ज्ञापक तत्सामा°. A इत्यविशेषः. [f]) C °चर्येण. C °मग्निकोरणादितर°. D लक्षवानीत्येव. C लक्ष्यं स्या°. C °ता प्रथमे च°. C om. न तस्या. B दर्शन वृ°. [g]) CD °द्यप्यतद°. AH प्रवर्तते का°; D प्रवर्तते. C यस्यति का°. ADH कारकस्य. O परिच्छेदकः. D om. लक्षणं ... तथा हेतुरपि. A तथैव; H तथैव. C कापरानपेक्षा. AH जननकार्यस्याव्यभि°. O करणत्वेन. A निमतोऽन्तोऽसत्त्या°. A om. यत्. A मेघं द°.

ऽवधिभावेन परिच्छेदहेतुः, संहितादेस्त्ववधित्वानाश्रयेऽपि ज्ञापकत्वसामान्याल्लक्षणत्वम् । बहुधा हि लक्षणं भवति । क्वचिदवधिभावेन यथा विद्योतमानायास्तडितो वनस्पतिरवसायनिबन्धनम् । क्वचित् कारणावच्छेदेन यथा धूमो वन्हेः । क्वचित् कार्यपरिच्छेदहेतुतया यथा मेघोदयो वृष्टेः । संहितापि चोक्तेन प्रकारेण लक्षणं हेतुश्चेति । [m]) यद्येवं

'लक्षणेत्थंभूताख्यान ....' (P. 1.4.90)

इत्यादिना सामान्यलक्षणेनैव सिद्धायां कर्मप्रवचनीयसंज्ञाया

'अनुर्लक्षणे' (P. 1.4.84)

इति पुनर्विधानमनर्थकम् । तदुक्तम् ।

'अनुर्लक्षणेवचनानर्थक्यं सामान्यकृतत्वात्' (Vā. on P. 1.4.84)

इति । अत्रोत्तरम्—

'हेत्वर्थं तु वचनम्' (Vā. on P. I.4.84.)

इत्युक्तम् । [n]) नायमभिधेयपर्यायोऽर्थशब्दः, किं तु निवृत्तिवचनः । कार्ये च कारणशब्दमुपचर्य हेतुशब्देन हेतुतृतीयोक्ता । बाधोऽपि बाध्यान्नान्येति 'हेतुरेवार्थो निवर्त्यो यस्ये'ति समासः । तेन हेतुसंज्ञाबाधनार्थं पुनः संज्ञाविधानमित्युक्तं भवति । ननु च पुनः संज्ञाविधानात् प्रदेशेषु संज्ञिप्रत्ययः स्थिरतरो भवेत् । तृतीया तु कथं बाध्येत । परत्वेन हि बाधिकासौ । नैतत् । असकृद्विधीयमाना संज्ञा

'कर्मप्रवचनीययुक्ते द्वितीया'

इत्यादिप्रदेशेषु द्विरुपतिष्ठते । तत्रैकमुपस्थानं द्वितीयार्थम् । यत्तु द्वितीयमुपस्थानमनुर्लक्षण इति तदनर्थकं मा भूदिति हेतुतृतीयां बाधित्वा द्वितीयामेव स्थिरयति । [o]) ननु द्विरुपस्थानात् संज्ञिप्रत्ययो द्विर्भवेत्, न तु द्वितीयाविधिः प्रचयमनुभवति । कार्यार्था संज्ञा गुणभूता । कार्यं द्वितीयाख्य प्रधानम् । न च गुणभेदे प्रधानभेदः । किमर्थं तर्हि गुणो द्विरुक्तः । निरर्थको भवतु, न त्वियता प्रधानमावर्तते । यद्यपि च प्रधानमात्मसंस्कारार्थं गुणदेशं गच्छति यथोद्देशे संज्ञापरिभाषे तथापि साकांक्षस्य गुणदेशगमनादेकेनैव गुणेन नैराकांक्ष्यादपरगुणदेशं किमर्थं व्रजेदिति एकैव द्वितीया ।

---

[m]) I °त्थंभूतेत्यादि°. A om. तदुक्तम् । अनुर्लक्षणेवचनानर्थक्यं. D अनुर्वचने°. D वचवमित्याक्तम्. [n]) A मभिधाप° ; D °मभिधेयप° ; B °मविधिप°. ADH °र्ये तु. ADH बाध्या ना°. I निर्वर्त्यो. DH °तिससमासः. A संज्ञिपत्ययास्थि° ; C सज्ञिसंप्र° ; D सक्षिप्र प्रत्य°. CI बाध्यते ; H साध्येत. ADHIO °प्रदेशे. C °स्थानं सकृद् द्वि°. [o]) AH °चयमनविधिः भ°. ADH ननु च. ADH न हि गुणो. A भवति. A न द्वितीया ; H द्वितीयता. ADH om. यथोद्देशे ... एकैव दिती. A यत्तां गत्वा तृतीया वा°.

पकारापेक्षित्वेऽपि सर्वथा गुणत्वात् तदङ्गभावपरिपोषार्थमेव हि तत्कृतोपकारापेक्षणम्' न तु स्वप्राधान्यार्थम्। [t]) कार्यकालपक्षेऽपि कार्यवाक्ये संज्ञाद्वयं भेदेनैव संज्ञिद्वयमुपस्थापयति। तस्मात् पुनः संज्ञाविधानलक्षणाद्वचनसामर्थ्यात् प्राप्तातिशयः कक्ष्यान्तरप्राप्तो द्वितीयाविधिः परमपि तृतीयाविधिमपसारयतीत्येव युक्तम्। तथा च वक्ष्यति।

हेतुहेतुमतोर्योगपरिच्छेदेऽनुना कृते।
आरंभाद् बाध्यते प्राप्ता तृतीया हेतुलक्षणा॥

इति। तदित्थमनुर्लक्षण इत्यत्र हेतुरेव लक्षणव्यापकत्वं कथयितुं लक्षणतयोपात्तः सत्यप्यवान्तरभेदेऽनयोः। तथा हि

'लक्षणहेत्वोः क्रियायाः' (P. 3.2.126)

इत्यत्र लक्षणाद्भेदेन जनकत्वविवक्षया हेतुरुपात्तः। [u]) तदेवं निमित्तसामान्यं त्रिधा विभक्तम्। स्वरूपभेदेन क्रियानिर्वर्तकं कारकम्, सामान्येन जनको हेतुः, ज्ञापके लक्षणमिति॥ २४॥

जनकत्वसाम्येऽपि हेतुसाधनयोर्विषयभेदात् भेदमाह—

**द्रव्यादिविषयो हेतुः कारकं नियतक्रियम्।**

(23) [a]) द्रव्यगुणक्रियासाधनसमर्थं वस्तु द्रव्यादीनां हेतुः। तद्यथा बीजेनाङ्कुरः, धनेन कुलम्, कन्यया शोकः, विद्यया यशः, शिल्पाभ्यासेन नैपुण्यम्, अग्निना पाकः। क्रियासाधनसमर्थमप्यनाश्रितव्यापारं हेतुरेवेति पाकादयो यद्यपि क्रियाः तथाप्यत्रोपरतव्यापाराणां सन्निधिनात्रोपकारितया तेजःप्रभृतीनां विवक्षितत्वादविद्यमानकरणभावास्ते हेतुतृतीयया संबध्यन्ते। [b]) धनेन सह संपत्तिक्रियाप्रभावितः कुलस्य संबन्धः। कुलस्य हि धनेन प्रसिद्धिरुपजन्यते। तत्र चोपरतव्यापारं धनं योग्यतामात्रात्कुलस्य हेतुरिति शेषषष्ठीबाधिकया हेतुतृतीयया संयुज्यते कन्यापि जनयितुः शोकस्य जननक्रियाद्वारेण। [c]) विद्यापि यशस्विना प्राप्यमाणैव यशसो हेतुरिति प्राप्तिक्रिया-

---

[t]) O च वाक्ये. AH भेदेन च. AD °त्येवमुक्तम्. ACD हेतुमतो°. AD हेतुलक्षणा तृतीया. B हेतुर्वेलक्षणस्य व्या°. D rep. लक्षणं व्यापकत्व कथयितुं. A °न्तरोपात्तः. AD °देतयोः. A हेतुरुपादेरत्र. DH °रुपादत्तः. [u]) ADH तदेव. CH निवर्तकं.

का. २५. D °तक्रियान्. D क्रियां या.

(23) [a]) AD °नमर्थवस्तु. B °थान्वितजनाङ्कुर. DH कन्याया. AD °ग्निना पाकक्रियासाधनमर्थवस्तु. H °ना पाकक्रियासाधनं. H om. °समर्थमप्य. H om. °राणा सन्निधान. AD °भावा एते तु तृ°. C तृतीया या. C °ध्यते. [b]) C °भाविनः. C धनेन हि कुलस्य. A °ग्यतामाह कु°. DH °ता मारा कु°. ADH om. जननक्रियाद्वारेण. [c]) ADH om. विद्यापि यशस्विना प्राप्यमाणैव यशसो. C यथा योग्यमप्यूह्यम्. C °व्यं विद्यया व°. AD °भूता। विपमता. I °रूपे भे°.

तां परत्वात्तृतीया बाधेत। [p]) ननु च प्रधानमन्तरेण गुणानां स्वरूपहानप्रसङ्गात् गुणान्तरमकृतार्थं प्रधानान्तरमाविर्भावयेत्। यथा अमात्या राजाभावे स्वात्मनो गुणरूपमीहमाना राजान्तरं स्थापयन्ति। तत्स्थापने तेषामात्मरूपं संपद्यते। राजानमन्तरेणामात्यादेरभावात्। नैतत् समानम्, राजामात्ययोः परस्परमुपकार्योपकारकभावात्। गुणप्रधानभावनियमस्यैवानिश्चयात्। [q]) तथा हि राजा प्रकृतीर्धर्मशास्त्रोक्तायां मर्यादायां स्थापयति। स्वयं चानुवर्तते। ताः प्रकृतयोऽपि राजानं विनयन्तीति प्रधानभेदादेव तत्र गुणभेदः। एवं तर्हि उपायविधिरेवोपेयविधिर्भवति। तद्यथा 'अनीकस्थो भव' इत्युक्तेऽनीकस्थता हस्तिनामन्नयवसरक्षासंपादनमिति अनीकस्थताविधानद्वारेण तदेव कार्यं विहितं भवति। एवं कर्मप्रवचनीयसंज्ञाविधानद्वारेण तत्कार्यं द्वितीयाख्यमेव विहितं भवति। तथा च पुनर्द्वितीया विधीयमाना बाधकबाधनार्था जायते, येन नाप्राप्तिन्यायेन। संबन्धे हि षष्ठी प्राप्ता, तस्यां बाधिका कर्मप्रवचनीयद्वितीया, तस्या अपि हेतुतृतीया, तस्यां प्राप्तायामनुर्लक्षण इति कर्मप्रवचनीयसंज्ञाविधानद्वारेण द्वितीयेति येनाप्राप्तिन्यायेन चतुर्थस्थानप्राप्तोत्कृष्टबला बाधिका। अत्र वचनसामर्थ्यं निबन्धनम्। अन्यथा पुनः संज्ञाविधानमेव द्वितीयाविधानार्थं कथमुपपद्यते। [r]) इत्थं च कृत्वा कल्पनान्तरमप्युपपद्यते। गुणभेदेन प्रधानभेद इति वचनेन न्यायस्य बाधनात्। तथा च भाष्यम्—

'दृष्टान्तस्यापि पुरुषारंभो निवर्तको भवति' ( M. Bhā. on P.1.1 85 )

इति। यद्वा संज्ञाभेदादनुशब्दः संज्ञी भिद्यते। न तु द्वितीयाविधिः प्रधानभूतः, येन न्याय्यो गुणभेदात् प्रधानभेदो भवेत्। संज्ञिभेदाच्च लब्धबलातिशयो द्वितीयाविधिस्तृतीयाविधिं बाधते। [s]) यथोद्देशपक्षे च गुणदेशं गच्छत् प्रधानमेकेन गुणेन कृतार्थं न भवति। तत्प्रकरणगतेन सर्वेणार्थित्वात्, संबन्धस्याविशेषात्। अत एव प्रधानान्तरं गुणोऽकृतार्थः कल्पयतु, राजान्तरं यथा प्रकृतयः। न च वैसादृश्यं प्रकृतीनां राजकृतो-

---

[p]) ADH °रूपावहान प्र°; C °रूपावभासना प्रसङ्गा रामकृता°. AH °विर्भाव्येत. D °मार्विभोवयेत; I °मपि भाव°. H om. राजान्तरं ... नैतत् समानम्. AD °त्मस्वरूपं. ADH °स्परोपकारकभा°. AD °दिप्रपंचस्यैव नि°. [q]) AH प्रकृतिं; B प्रकृतिः. AD स्वयं ता. ADH °नीकस्था. ADH हस्तिरात्रयवस°; I °नायसयवस°. A °नेन कृतेति. A °विधानवदेव का°. ADH om. विहितं. ADH संबन्धेन प°. ADH °तीया येन. A °र्थसंस्थानप्राप्तौ. ADH प्रवचनसा°. C ins. द्वितीयाविधिः ( before इत्थं ). [r]) C om. इत्थं ... गुणभेदेन. A °भेदे प्र°. DH °भेद प्र°. A °चने न्या°. DH °रंभे नि°. A om. इति ( after भवति ). ADH संज्ञा भि°. BI संज्ञि भि°. ADH ननु द्वि°. AH येनान्या°. C °तेऽपि न्यायो येना°. A °भेदाच्च बला°. D ततायाविधि. [s]) B गुणभेद ग°. A °र्थं भ°; DH °तार्थे भ°. AD °स्य वि°. C राकांक्षान्तर. B °कारापेक्षितेऽति. B तदशभावपरिवेषा°. I °भाववतिपो°. ADH तत्र कृतो°. ADH ननु स्वप्रधा°.

पकारापेक्षित्वेऽपि सर्वथा गुणत्वात् तदङ्गभावपरिपोषार्थमेव हि तत्कृतोपकारापेक्षणम्' न तु स्वप्राधान्यार्थम्। [t]) कार्यकालपक्षेऽपि कार्यवाक्ये संज्ञाद्वयं भेदेनैव संज्ञिद्वयमुपस्थापयति। तस्मात् पुनः संज्ञाविधानलक्षणाद्वचनसामर्थ्यात् प्राप्तातिशयः कक्ष्यान्तरप्राप्तो द्वितीयाविधिः परमपि तृतीयाविधिमपसारयतीत्येव युक्तम्। तथा च वक्ष्यति।

> हेतुहेतुमतोर्योगपरिच्छेदेऽनुना कृते।
> आरंभाद् बाध्यते प्राप्ता तृतीया हेतुलक्षणा॥

इति। तदित्थमनुर्लक्षण इत्यत्र हेतुरेव लक्षणव्यापकत्वं कथयितुं लक्षणतयोपात्तः सत्यप्यवान्तरभेदेऽनयोः। तथा हि

'लक्षणहेत्वोः क्रियायाः' (P. 3.2.126)

इत्यत्र लक्षणाद्भेदेन जनकत्वविवक्षया हेतुरुपात्तः। [u]) तदेवं निमित्तसामान्यं त्रिधा विभक्तम्। स्वरूपभेदेन क्रियानिर्वर्तकं कारकम्, सामान्येन जनको हेतुः, ज्ञापके लक्षणमिति॥ २४॥

जनकत्वसाम्येऽपि हेतुसाधनयोर्विषयभेदात् भेदमाह—

**द्रव्यादिविषयो हेतुः कारकं नियतक्रियम्।**

(23) [a]) द्रव्यगुणक्रियासाधनसमर्थं वस्तु द्रव्यादीना हेतुः। तद्यथा बीजेनाङ्कुरः, धनेन कुलम्, कन्यया शोकः, विद्यया यशः, शिल्पाभ्यासेन नैपुण्यम्, अग्निना पाकः। क्रियासाधनसमर्थमप्यनाश्रितव्यापारं हेतुरेवेति पाकादयो यद्यपि क्रियाः तथाप्यत्रोपरतव्यापाराणा सन्निधिनात्रोपकारितया तेजःप्रभृतीना विवक्षितत्वादविद्यमानकरणभावास्ते हेतुतृतीयया संबध्यन्ते। [b]) धनेन सह संपत्तिक्रियाप्रभावितः कुलस्य संबन्धः। कुलस्य हि धनेन प्रसिद्धिरुपजन्यते। तत्र चोपरतव्यापारं धनं योग्यतामात्रात्कुलस्य हेतुरिति शेषषष्ठीबाधिकया हेतुतृतीयया संयुज्यते कन्यापि जनयितुः शोकस्य जननक्रियाद्वारेण। [c]) विद्यापि यशस्विना प्राप्यमाणैव यशसो हेतुरिति प्राप्तिक्रिया-

---

[t]) O च वाक्ये. AH भेदेन च. AD °त्येवमुक्तम्. ACD हेतुमतो°. AD हेतुलक्षणा तृतीया. B हेतुर्वलक्षणस्य व्या°. D rep. लक्षणं व्यापकत्वं कथयितुं. A °न्तरोपात्तः. AD °दे तयोः. A हेतुरुपादेरत्र. DH °रूपादत्तः. [u]) ADH तदेव. CH निवर्तकं.

का. २५. D °तक्रियान्. D क्रियां या.

(23) [a]) AD °नमर्थवस्तु. B °थान्वितजनाङ्कुर. DH कन्यायाः. AD °ग्निना पाकक्रियासाधनमर्थवस्तु. H °ना पाकक्रियासाधनं. H om. °समर्थमप्य. H om. °राणा सन्निधान. AD °भावा एते तु तृ°. C तृतीया या. C °ध्यते. [b]) C °भाविनः. C धनेन हि कुलस्य. A °ग्यतामाह कु°. DH °ता मारा कु°. ADH om. जननक्रियाद्वारेण. [c]) ADH om. विद्यापि यशस्विना प्राप्यमाणैव यशसो. C यथा योग्यमप्यूह्यम्. C °ण्यं विद्यया व°. AD °भूता। विषमता. I °रूपे भे°.

जनितोऽत्र शेषसंबन्धः । एवमन्यत्रापि यथायोगमभ्यूह्यम् । शिल्पाभ्यासेन नैपुण्यमध्ययनेन वसतीति गुणक्रियाविषयता हेतोः । क्रियासाधननियतं तु **कारकम्** । तत्र हि क्रियैव विषयभूता नियता, व्यापाराविष्टत्वं च स्वरूपभेदः । [d]) कस्यचित्तु व्यापाराविष्टस्यापि क्रियाविषयस्य शास्त्रीयं हेतुत्वमुक्तमित्याह ।

**कर्ता कर्त्रन्तरापेक्षः क्रियायां हेतुरिष्यते ॥ २५ ॥**

**कर्ता** प्रयोजकः प्रयोज्यकर्तृशक्तिव्यत्रधानेन क्रियायमुपयुज्यमानः प्रयोज्यकर्तारं प्रेषयन् तत्प्रयोजको हेतुः इति शास्त्रे हेतुत्वेनेष्यते । वचनात् कारकविशेषोऽपि न त्वयं रूढो हेतुरित्यर्थः ॥ २५ ॥

इदानीं क्रियाविषयत्वे समानेऽपि हेतुकारणयोर्विशेषमाह ।

**क्रियायै करणन्तस्य दृष्टः प्रतिनिधिस्तथा ।**
**हेत्वर्था तु क्रिया तस्मान्न स प्रतिनिधीयते ॥ २६ ॥**

(24) [a]) क्रियासाधनाय प्रकृष्टोपकारकं करणमप्रधानम्, क्रिया तु साध्यस्वभावा प्रधानम् । अत एव प्रधानानुरोधित्वाद् गुणानामसति श्रुते करणे शिष्टैः प्रतिनिधिराचरितः । [b]) प्रधानभूता हि क्रिया साध्यत्वात् योग्यसाधनाक्षेपसमर्थेति साधनसामान्यस्याक्षेपेऽध्यावापार्थं श्रुतः साधनविनियोग इति तदसंभवेऽपि प्रधानेन क्रियास्वरूपेण यदाक्षिप्तं साधनसामान्यं तद्विशेषान्तरेणापि परिपोष्यमाणं न श्रौतार्थत्यागाय प्रभवति । सामान्यस्यापि श्रुतत्वात् तस्य च सर्वविशेषस्वीकारयोग्यत्वादिति प्रतिनिध्युपपत्तिः पूर्वमेव चर्चिता विस्तरतः । [c]) अङ्गभ्रेषेऽपि प्रधानानुच्छेदात् प्रधानक्रियास्वरूपसंरक्षणाय शिष्टैः संप्रदायपारंपर्यात्रगतं सदृशमङ्गं मुख्यबुद्ध्यैवोपादीयत इति क्रियायाः प्राधान्यस्यैतत् फलम् । अत एव केचित् करणशब्दोऽत्र सर्वकारकवचनो जातौ चैकवचनमिति सर्वाणि कारकाणि गुणभूतानीति गुणस्य प्रतिनिधिरुपपद्यत इति व्याचक्षते । [d]) अध्ययनेन वसतीति तु वसतिक्रियाऽऽख्यातात् प्राधान्येनापि प्रतीय-

---

[d]) B °पारविशिष्टस्यापि. CI om. कर्तृ ( after प्रयोज्य). ADH °धाने. I प्रयोजयन्.

का. २६. I तदा. ADH प्रतिविधी°.

(24) [a]) C °चरिताः ; B °चरितं. [b]) ADH °ना पेक्षास°. ACH °ऽव्यवसायार्थं ; D °ऽध्याचार्थ. ADH श्रुतसाधना°. D श्यैतार्थ° ; I श्रुतार्थ°. AH °पेषु स्वी° ; D °पत्वस्वी°. AH चर्वितो ; D चर्विता. ADH विस्तरः. [c]) ADH °भ्रेषो ; C °भ्रंशो AH °पाधीमत्त. C ins उपक्षिप्त ( after फलं ) ADH °तौ वैक° ADH °ति तस्य प्र°. C व्याचक्षते गुणस्य तस्य. [d]) A ins. तथा ( before प्रती° ). D °ख्याता तु : H °ख्यातात्र: O °मर्थ्य ध्य°. AH °णान्तरोऽप° ; D °णानरोऽप्र°. ACDH वा समर्थमन्य° ; B °वे सामर्थ्यमन्य°. ADHI प्रतिवि°. DH °तु प्रयुक्त ; I °तु मयुक्तम्. AD °स्याप्यु पा° ; H °स्याह्युपा°. C तदर्थं ; D नादर्थं. O क्रियाया. ADH °यते इदानी.

माना वस्तुसामर्थ्याद्ध्ययनाख्यहेतुपरतन्त्रा। तथा ह्यध्ययनार्थी ममात्र वास इति वक्तारो भवन्ति। न च गुणानुरोधि प्रधानमित्यध्ययनाभावे वासार्थमन्यत् किंचिदत्र प्रतिनिधातुं युक्तम्। अन्यस्य ह्युपादाने तादर्थ्यं क्रियायाः प्रतीयेतेति तदानीं स एव मुख्यो हेतुः स्यात्। [e]) तस्माद्ध्ययनेन वसतीति नेयं करणतृतीया, अपि तु हेतुतृतीयैवेति। न ह्यध्ययनेन व्यापाराविष्टेन वासो निर्वर्त्यते अपि तु वासस्याध्ययनमेव संपाद्यं प्रधानमिति निर्व्यापारं योग्यतामात्रेणोद्देश्यमध्ययनं वासस्य हेतुः। [f]) व्यापाराविष्टत्वेऽध्ययनस्य वासं प्रत्यानुकूल्यविवक्षायां भिक्षादिवत् तत्समर्थाचरणात् प्रयोजककर्तृत्वम्, अध्ययनं वासयतीति। तदेवं कारकविषये क्रियाप्रधानं कारकं गुणभूतम्। हेतुविषये तु विपर्यय इत्यनेनापि विशेषेण कारकाद्धेतोर्व्यतिरेक उक्तः॥ २६॥

इदानीं चतुर्थीविषयं तादर्थ्यं तृतीयाविषयाद्धेतोर्व्यतिरेचयितुमाह।

**प्रातिलोम्यानुलोम्याभ्यां हेतुरर्थस्य साधकः।**
**तादर्थ्यमानुलोम्येन हेतुत्वानुगतं तु तत्॥ २७॥**

(25) [a]) अपचीयमानावस्थो हेतुरपचितमेव कार्यं जनयन् प्रातिलोम्योपलक्षितः। तद्यथा जलमातपसंसर्गविशेषोपजातापचितरूपमुत्तरोत्तरापचिततरापचिततमलक्षणावस्थापरंपरासादनानुगुणम्। अर्थान्तरसंसर्गोपचीयमानरूपविशेषं तु कार्यमुपचिततरमेव जनयन् कारणमानुकूल्योपलक्षितो हेतुः। तद्यथा बीजमुदकातपसंयोगाहितविशेषमुच्छूनतरावस्थमङ्कुरप्रसवसमर्थम्। इत्थं द्विप्रकारो हेतुः। [b]) तद्विशेषस्तु तादर्थ्यम्। आनुकूल्यैकनियतमर्थसिद्धिनिमित्तमानुकूल्येन यद्धेतुत्वं जनकत्वं तदनुगतं हेतुविशेषरूपम्। तादर्थ्यं कार्यकारणसंबन्धस्योद्भूतरूपमित्यर्थः। तत्र चतुर्थी कुण्डलाय हिरण्यमिति। 'तस्मा इदं तदर्थम्' इति इदमोपकारकस्य निर्देशः, तच्छब्देनोपकार्यस्य। समासाद्भावप्रत्ययेन संबन्धस्योद्भूतरूपाभिधानम्। तत्र चोत्तर-

---

[e]) ADH °यनमेव. ADH om. वसतीति ... वासस्याध्ययनमेव. I °पारं प्रधानयोग्य°. DHO rep. संपाद्यं ... अध्ययनं वासस्य. ADH ins. ते न वासो न निर्वर्त्यते अपि तु वासस्याध्ययनमेव हेतुः (before व्यापारा°). [f]) ADH व्यापाराविशिष्ट°. ADH तदेव. AD कार्यपरकं गु°. ADH ins. स (after तु). C om. तु विपर्यय. B उक्तम्. H °विपये. AD तृतीय वि°.

का. २७. AD °भ्यानुकूल्याभ्यां. ADH साधकम्.

(25) [a]) D अपरीयमा°. CD °वस्था. A °नुरविततमेव; B °रुपचितमेव. D °तुल्यचितमेव. ADH °नयत्. B °क्षितं. AD जलमानय सं°. A °गोपजनाय पचति; D °ताप्रचति°; H °तापचति°. ADH °पचतितरा पचतितमा. D नक्षत्रावस्था; C लक्षणापरं°. C °रात्पादनानु गुण°. C °र्गोपक्रियमाणरूपावशेप. H om. °विशेषं ... मुदकातप. D नद्यया. C °मुद्साहित तपस°. [b]) A °कूल्ये यद्धेतुजन°. ADH °गतहेतु°. D त्यदर्थं. A °स्याद्भुतं. AH अत्र; D अर्थे. ADH °कारस्य. A °स्याद्भुतरूपम°. A गुणे सं°. C संबन्धीति.

पदार्थस्य कारणरूपस्य प्रज्ञापनीयत्वेन प्राधान्यात्तच्छब्दवाच्ये गुणे संबन्धः पदं बध्नाति । [c]) तत्र ह्यसावुद्भूत इति तादर्थ्ये कारणस्योपकारित्वे गम्यमाने कार्यकारणसंबन्धोद्भवे चतुर्थी विधीयमाना कार्यवाचिन एव भवति । तथैव कारणगतस्यापि संबन्धस्य निर्भोगात् । कारणवचनात्तृतीया न भवति । कार्यमेव प्रयोजकतया परिणतं तदर्थमित्युच्यत इत्ययुक्तमभिधानम् । उत्तरपदार्थप्रधानत्वात्तदर्थशब्दस्य कारणवचनता न्याय्या यतः । [d]) अत एव हेतुत्वानुगतं तादर्थ्यम् । कारणविशेषो न कार्यम् । यदर्थमस्य गमनं तदनेन साधितमित्यत्र तूपसर्जनस्यैव यच्छब्देनोद्दिष्टस्य समानाधिकरणेन तच्छब्देन निर्देशात् सर्वनामार्थः कार्ययोगी युक्तः । न त्वेनावतेह सर्वनामार्थस्य प्राधान्यमुत्तरपदार्थे गुणत्वात् ॥ २७ ॥

तदेवं कारकं हेतुर्लक्षणं तादर्थ्यमिति निमित्तत्वसाम्येऽपि प्रविभक्तस्वरूपविषयाः पदार्थाः इति न तत्र लक्षणसाङ्कर्यप्रसङ्ग इत्यानुषङ्गिकेऽर्थे निर्णीते प्रस्तुतमेव कारकविषयं विचारं प्रस्तावयितुमाह ।

**सर्वत्र सहजा शक्तिर्यावद्द्रव्यमवस्थिता ।**
**क्रियाकाले त्वभिव्यक्तेराश्रयादुपकारिणी ॥ २८ ॥**

(26) [a]) अनित्यानां पदार्थानां स्वहेतोरेव शक्तानामुद्भव इति सहजाता शक्तिः । न ह्यनाधेयातिशयत्वाद् भावानामशक्तस्योत्पत्तावनन्तरमाधातुं शक्यते शक्तिः । नित्यानां तु स्वाभाविकी शक्तिः । [b]) आश्रयसमवेतास्तु शक्तयः । तदपाये निराधारा नावस्थातुं पारयन्तीति यावद्द्रव्यभाविन्यः । एवमपि सहकारिसन्निधाने स्वकार्योद्युक्ताः शक्त्याभिव्यक्तिमाश्रयन्ते भावा इत्यभिव्यक्तिकाल एव कार्योपयोगित्वात् साधनमित्युच्यन्ते नान्यदा सत्त्वेऽपि । तथा हि ।

**कुड्यस्यावरणे शक्तिरस्यादीनां विदारणे ।**
**सर्वदा न तु सन् धर्मः क्रियाकाले निरूप्यते ॥ २९ ॥**

---

[c]) ADH °दर्थ्यका°. C °न्धोद्गमे. AH तथैव. ADH निर्भागात्. C om. परिणतं. ADH इत्युक्तम°. [d]) C °मस्या गमनेन तदेनेन. A °त्यत्र उप°. ADH °नस्यै तच्छब्देनोच्छिष्टस्य. ADH सामानाधिकरण्ये शब्देन. ADH °योगीत्युक्तः ; C कार्याभियुक्त. ADH °वतेदं. ADH हेतुत्वालक्षणं. ADH °मित्तसा°. ACDH प्रस्तावयति.

का. २८. C °क्तिर्वाग्यद्रव्या°. C क्रियाशक्ते त्व°.

(26) [a]) A स्वतनोरेव. A सहजता शक्तिः; DH °जता शक्तिः. C नामधेया. AH °स्योत्पत्त्यनन्त°. [b]) C °पायो हि नि°. C नु स्था°. ADH कार्योद्यु°. A °क्तिकाः । त एव; DH °क्तिका न एव. ADH °कारित्वा°.

का. २९. ADH °रस्त्रादी° ; DH °क्तिरसात्मनां. I सन्तु. B सद्धर्मः.

(27) आवरकं कुड्यम्, पाटकं च शस्त्रम्, छेद्यावरीतव्यवस्तुसन्निधाने ज्ञायन इति विद्यमाना शक्तिर्विषयायत्ताऽभिव्यक्तिः। परिच्छिद्यते त्रिकालाऽप्यर्वाग्दर्शनैः। उपादाननियमाद्धि कार्यात् पूर्वमपि शक्तिरस्ति। पुनरपि कार्यकरणादुत्तरकालमपि।

आगमेनाप्येतत् संवादयति।

**स्वाङ्गसंयोगिनः पाशा दैत्यानां वारुणा यथा।**
**व्यज्यन्ते विजिगीषूणां द्रव्याणां शक्तयस्तथा ॥ ३० ॥**

(28) [a]) दैत्यानां स्वकर्मनिर्माणा वारुणाः पाशाः स्वहस्ततलावलीनाः सदा सन्निहिताः शक्तिरूपेणेत्यागमः। ते तु परसैन्यावजयवेलायामभिव्यज्यन्त इति श्रूयते। [b]) एवं द्रव्याणां सदा सन्निहिताः शक्तयः स्वकार्यनिष्पादनकाले प्रकाशन्त इत्यपि युक्तम् ॥ ३० ॥

यदुक्तमस्त्रादीनां विदारणे शक्तिरिति तदेव प्रतन्यते।

**तैक्ष्ण्यगौरवकाठिन्यसंस्थानैः स्वैरसिर्यदा।**
**छेद्यं प्रति व्याप्रियते शक्तिमान् गृह्यते तदा ॥ ३१ ॥**

(29) [a]) निविडतरसंहननानामवयवानां क्रमेणाग्रे सूक्ष्मीभवतां तनुत्वप्रकर्षस्तैक्ष्ण्यम्, छेदनिमित्तं धर्मः। भिन्नजातीयावयवसंभेदविच्छेदे विच्छिन्नान्तरालानामवयवानामुपचयाद् गौरवं निपतनहेतुर्धर्मः। [b]) तापनोत्तेजितानां लोहावयवानां निविडत्वं काठिन्यं नाम धर्मो यतः प्रहारविशेषो निष्पद्यते। संनिवेशविशेषो मण्डलाग्रादिव्यपदेशनिबन्धनमस्यन्तराद्विभागहेतुः संस्थानम्। यतः प्रहारवैचित्र्यमाजायते। [c]) तदेतैर्धर्मैरसियष्टिश्छेद्यविपाटनमारभमाणा शक्तिमतीति गृह्यते। व्यापारशून्या तु सत्स्वप्येतेषु

---

(27) B आवकारक. C कह्यं. A विदारकं; B वाटकं; C पाटकत्नं. D यांररकं. H पाटरकं. ADH ज्ञाप्यते. AH °मानशक्तिविप्पयोपपन्नाभि°. O °तेऽत्रिका°. ADH दर्शने. A °नेऽपादा°. DH °नेऽनु. ADH °माधिकार्यात्. AD शक्तिरतस्तं.

का. ३०. DH साङ्ग सं°. C वारुणी. D व्यत्यते. D वितिगाप्रणां. H om. °षूणा द्रव्याणां शक्तस्यतथा.

(28) [a]) H om. दैत्यानां ... सदा. B वारुणां पाशात्. I ins. यथा (before स्वहस्त°). A °तलाचलिताः; D तलाचलाताः. D संतिहिनाः. A °गमहेतुपर°. D °गमलेतुप° A °सैन्यायत्तजय°. C °सैन्य एव जय°. H °सैन्यापजय°. [b]) ADH °मस्त्रादीनां. HI एतदेव.

का. ३१. C तैक्षावगौर°. D नैज्ञावगौ°. C स्वैर्यासिदा°. B स्वैरदियं°.

(29) [a]) AD °तरसंह°. C °क्ष्यं यछेद; D °क्षायं छे°. A °मित्तो धर्मः. C °जातियानामेव संभे°. ADH °न्तराधीनामवय°. ADH नियत न हेतुधर्मः. [b]) A पावकोत्ते°; B पाभिनेत्ति°; C तापेनो. D पापकोत्ते°; HIO पायनोत्ते°; O प्रकारवि°. O °रा वि°. AH °विचित्रता जा°. [c]) A °विपाटव मा°; D °पाटत्व मा°. ADH °तीति निगद्यते. AD सत्यप्येतेषु. O अपेरुफल°.

धर्मेषु न तथावसीयते। एवमन्येषामपि पदार्थानां यथायोगं वाच्यम्। असेरुपलक्षणत्वात् ॥ ३१ ॥

पक्षान्तराण्यप्यत्र साधने संभवन्तीत्याह।

**प्राङ् निमित्तान्तरोद्भूतं क्रियायाः कैश्चिदिष्यते।**
**साधनं सहजं कैश्चित् क्रियान्यैः पूर्वमिष्यते ॥ ३२ ॥**

( 30 ) [a]) सिद्धे सत्वेऽभिव्यक्तिप्रतीक्षा शोभते। सत्त्वमेव तु शक्तीनां कार्यानुमेयत्वात् क्रियातः पूर्वमसिद्धमिति क्रियायाः पूर्वमपेक्षणीयान्निमित्ताच्छक्तयो द्रव्याणां क्रियानुगुणा जायन्त एव। सत्वेऽप्यभिव्यक्तिनिमित्तमपेक्षणीयमिति तदेव जनकम्। [b]) तथा हि सहकारिसव्यपेक्षाणां भावानां जनकत्वात् परस्पराहितशक्तयस्ते स्वकार्यहेतव इत्युन्नीयन्ते, केवलानामजनकत्वात् न तदानीं शक्ता इति न स्वाधारजनकादेव शक्तिजन्म, अपि तु निमित्तान्तरादेव। प्रत्यभिज्ञायमानत्वाच्च शक्ताशक्तत्वेऽपि न वस्तुभेद इति केचित्। अत एवोपादाननियमोऽपि योग्यतावधारणात् सिद्धः। [c]) अन्ये तु शक्तेर्वस्तुनोऽनन्यत्वात् स्वभावभेद एव शक्ताशक्तत्वे मन्यन्ते। सहजं कैश्चित् साधनं शक्तिर्द्रव्याणामिष्यत इति पूर्वप्रतिपादितपक्षानुवादः। केचित्तु न येनैव कारणेन क्रिया जन्यते तेनैव साधनम्, अपि त्वन्येनैवेति क्रियापेक्षया निमित्तान्तरत्वं मन्यमानाः सहजत्वमपि क्रियापेक्षयैव व्याचक्षते। [d]) तथा हि इतरेतरस्य शक्तिमर्पयन्तः क्रियां निर्वर्तयन्ति भावाः सहकारिणः इति साधनशक्तिभिः सहैव क्रियाणां व्यापाररूपाणां जन्म मन्यते। तथा च येभ्य एव क्रिया जायन्ते तेभ्य एव शक्तय इति सहजत्वम्। [e]) उपजातशक्तयस्तु क्षणान्तरे क्रियानिर्वर्तका इति साध्यसाधनभावे नास्ति क्षतिः न हि साध्यसाधनयोः सहभावः प्रमाणोपपन्नः ॥ ३२ ॥

अन्ये तु साधनात् पूर्वभाविनीं क्रियां मन्यन्ते। तत् कथं युज्यत इत्याह।

**प्रवृत्तिरेव प्रथमं क्वचिदप्यनपाश्रिता।**
**शक्तिरेकाधिकरणे स्रोतोवदपकर्षति ॥ ३३ ॥**

---

का. ३२. B क्रियायां. B सहजा. B क्रियाया पू°. CDH क्रियान्यैः कै°.

( 30 ) [a]) ADH सिद्धिसत्वे° व्यक्ति°. A साधनम् ( for शोभते ) ; D सोमते ; I शोभन. AH °नामर्थानु°. I °मसिद्धिरि°. ADH °णीयनि°. D °गुणता जा°. [b]) B °पेक्षायां. AD हंतव इत्युपनीय°. A तदा निःश°. C जनकत्वादेव. [c]) AD शक्तिर्वस्तु°. BO स्वभाव एव. A शक्तत्वे ह्यन्यै स° ; D °क्तात्वेनत्यंते ; H °क्तत्वेऽत्यन्ते. ADH शक्तिद्रव्या°. AD om. न ( before येनैव-). C एवैव. ADH ins. न ( before तेनैव ). [d]) ADH om. तथा हि ... जन्म मन्यन्ते. ADH ज्ञायते. [e]) AD तदुप°. ADH °न्तरे निर्व°. ADH सदसभवः. AD अभेदे तु. AD पूर्वप्रभाविनी. A om. तत् कथं युज्यते.

का. ३३. C °पाश्रिताः. B °धिकाधिकरणे. C °कारण. D कारणे.

( 31 ) [a]) अनपेक्षितहेतुव्यापारा नित्या क्रिया **अनपाश्रिता** कचिदपि भण्यते। स्वाश्रये तु समवेतैव। अत एव तत्राश्रये साधनशक्तीराविर्भावयति प्रतिनियतस्वकार्यसंपादिकाः। अन्ये त्वनाश्रितैवेत्याहुः। [b]) सततव्यापारप्रवहद्रूपा नदीप्रवाह इव तृणपर्णलतादीन् साधनशक्तिः प्रवृत्तिलक्षणा क्रिया कर्षति वहतीति केषांचिज्जरन्मीमांसकानामागमः। रजोलक्षणा वा प्रवृत्तिर्नित्या सर्वभावेष्वनुयायिनी स्वकार्यप्रसवसमर्था कार्याणि जनयतीति सांख्यनयः। [c]) व्यापाराविष्टस्य सर्वस्य कार्यजनकत्वाद् व्यापारः पूर्वभावी समवस्थितः। तेन च शक्त्याक्षेप इति युक्तम्॥ ३३॥

केयं प्रवृत्तिरनपाश्रया नित्येत्याह।

[ इतो ग्रन्थपातसन्धानाय फुल्लराजकृतिर्लिख्यते। ]

इदानीं मतान्तरानुसारेण साधनस्वरूपं वर्णयितुमाह।

**अपूर्वं कालशक्तिं वा क्रियां वा कालमेव वा।**
**तमेवंलक्षणं भावं केचिदाहुः कथंचन॥ ३४॥**

( 32 ) [a]) **अपूर्वं** धर्माधर्माख्यमदृष्टसंज्ञकं केचिदेवंरूपं **तं** सामर्थ्यलक्षणं भावमाहुः। अदृष्टवशाद्धि सर्वं भवति वा न वेत्यदृष्टमेव सर्वकार्याणां निमित्तं बोद्धव्यम्। [b]) केचित्तु वादिनः **कालशक्तिम्** एव भगवतो ब्रह्मणः संबन्धिनीं साधनमाहुः। कालशक्त्यनुप्राणितं हि सर्वं क्रियायै प्रभवति। **क्रियां वा** राजसीमनन्तरोपवर्णितस्वरूपा साधनमाहुः। न तूत्तरकालभावि किंचन साधनं नाम शक्यं निरूपयितुम्। [c]) पूर्वं क्रियामूलं साधनं व्याख्यातम्। अधुना क्रियैव साधनमिति विशेषः। सैव हि स्वयं प्रवर्तमाना विशेषीभवतीति **कालमेव वा** नित्यमेकमित्यादिलक्षणलक्षितं द्रव्यकालवादिनः साधनमाहुः। [d]) कालवशाद्धि सर्वे भावाः प्रभवन्ति कार्यसंपत्तये इति काल एव साधनम्। यथा वक्ष्यति

---

( 31 ) [a]) ADH °क्षितत्वे तु सा क्रिया. AH तन्त्राश्रयं सा न शक्तिरा°. DH साधशक्तीरा°. A °दिका. O °संवादिकाः. [b]) A स्रोतोव्या°. DH अत व्या°. ADH °प्रवाहवत्. AH °नशक्तीः; D °नशक्ताः. A प्रवृत्तिलक्षणीं; HD °त्तिलक्षणी. ADH अपकर्षति. A इतो लक्षणा वा प्रवृत्तिनि°. ADH °सवमर्था. [c]) D om. सर्वस्य. The remarks enclosed within [ ] are obviously those of a scribe and show that what follows is not by Helārāja but by Phullarāja whose commentary extends up to the words: न काचित् क्षतिः in the commentary on Kā. 47. After those words the commentary of Helārāja is resumed.

का. ३४. I आपूर्वं. ADH तमेवल°.

( 32 ) [a]) A om. तं (before साम°). D न (for तं). BIO भवति न भवति चे°. C om. निमित्तं. [b]) C om. भगवतो. A °न्धिनः. BCDH °न्धिनी. D om. कालशक्त्य ... साधनमाहुः. [c]) A सर्वक्रिया°. AH स्वयं प्रतिमानविशेषा भव°; D °प्रतिमाताविं°. [d]) C कार्यसमन्वय. BO °र्यनिष्पत्तये. H °र्यसमत्यय°. ADH यदा व°. AH °सामर्थ्यादिल°. O सामर्थ्यलक्षण°. D संख्याविधातुं; H संख्याविधानं.

' यदि न प्रतिबध्नयात् .... ( Vāk. III का. v. 5 )

इति ।। ३४ ।।

अथ शक्तेः सामर्थ्यलक्षणायाः साधनत्वेन पूर्वं निरूपितायाः संख्याविचारं कर्तुमाह ।

**नित्याः षट् शक्तयोऽन्येषां भेदाभेदसमन्विताः ।**
**क्रियासंसिद्धयेऽर्थेषु जातिवत् समवस्थिताः ।। ३५ ।।**

( 33 ) [a]) अन्येषां मतेनार्थेषु नित्याः षट् शक्तयः पृथग्लक्षणलक्षिताः कर्माद्या व्यवस्थिता इति स्थितम् । कीदृश्यः । भेदाभेदसमन्विताः, एकान्तेनार्थेभ्यश्चेद्भेदसमन्विता अभिधीयेरन्नर्थस्य शक्तिवैकल्यान्नीरूपता स्यात् । [b]) अथाभिन्नाः कथ्यन्ते तर्हि विभिन्नकार्योदयो नावतिष्ठते । तस्मात् कथंचिद् भेदेन, कथंचिदभेदेनेति भेदाभेदाभ्यां समन्विताः शक्तयोऽर्थजातिवदवस्थिताः यथा सत्वद्रव्यत्वगोत्वशावलेयत्वादिजातयः सततं भेदाभेदसमन्वयेनार्थेष्वित्येके मन्यन्ते ।। ३५ ।।

[c]) तासां तु द्रव्यादिभेदेनानन्त्येऽपि षट्त्वमेव षड्विधत्वमेव तत्त्वं नातिवर्तत इत्याह ।

**द्रव्याकारादिभेदेन ताश्चापरिमिता इव ।**
**दृश्यन्ते तत्त्वमासां तु षट् शक्तीर्नातिवर्तते ।। ३६ ।।**

( 34 ) [a]) द्रव्यभेदेन भिन्ना शक्तिः । यथा दात्रमन्यथा छिनत्ति, खड्गोऽन्यथेति । आकारभेदेन खड्गोऽन्यथा खड्गलता त्वन्यथेति । [b]) आदिग्रहणाद्देशकालभेदेन सैव दहनशक्तिरग्निवैचित्र्यमुपयाति, षट्त्वं पुनस्तत्स्वरूपं नातिक्रामति ।। ३६ ।।

अथैकैव शक्तिर्निमित्तभेदाद्विशेषरूपतया षोढात्वमापन्ना वा साधनमित्याह ।

**निमित्तभेदादेकैव भिन्ना शक्तिः प्रतीयते ।**
**षोढा कर्तृत्वमेवाहुस्तत्प्रवृत्तेर्निबन्धनम् ।। ३७ ।।**

---

का. ३५. O षड् व्य°. D भेदाभेदाभेदस°.

( 33 ) [a]) ADH मतेचा°. AH इति । ताः की°; D इति तं कादृ°. A °न्तेन योऽर्थस्तद्भेदस°; DH °न्तेनाभ्यर्थस्तद्भे°. [b]) ADH °दया. ADH °ष्ठते. A om. कथंचिदभेदेन. C कश्चिदभेदे°. B °भ्यां शक्तिस°. I अर्थेषु जाति°. ADH सद्रव्यत्वगोशा°. [c]) AC च ( for तु ); D मु. ADH द्रव्यभे°. C °देनान्यतोऽपि. ADH नाभिवर्त.

का. ३६. D °न्ते न तमा°. D यद् व्यक्तीनां नितिव°.

( 34 ) [a] ) ADH °त्र मन्यार्थं. AH खण्डो ; C षडो ; D खडो. B आधारभे°. A अवयवी ह्य° ; B खड्गतता ; C षड्गलता ; D खण्डतात्वद्न्य°. [b]) BO अग्नेवै°. A °मुपपादयन्ती वस्तुतत्त्वरूपं ना°. B °रूपतायां.

का. ३७. BO om. this verse.

( 35 ) [a]) यस्मात् **कर्तृत्वमेव** निमित्तभेदेनेप्सिततमत्वादिना ज्वलनत्वादिना वा **षोढावस्थितः** सन् **तत्प्रवृत्तेः** शक्तिभेदप्रवृत्तेः कारकव्यवहारभेदस्य **निबन्धनं** निमित्तभूतं बोद्धव्यम् । [b]) यथोक्तम्—एधाः पक्ष्यन्त्या विक्लित्तेः ज्वलिष्यन्तीति ज्वलनक्रियाकरणस्य पाक इत्यादिन्यायेन कर्तृत्वमेवावान्तरव्यापारविवक्षया करणादिव्यपदेशरूपतां भजते ।। ३७ ।।

तदेवमेकानेका वा शक्तिरुपपादिता । अथासौ व्यतिरिक्ता वा स्यादव्यतिरिक्ता वेत्याशङ्कयाह—

**तत्त्वे वा व्यतिरेके वा व्यतिरिक्तं तदुच्यते ।**
**शब्दप्रमाणको लोकः स शास्त्रेणानुगम्यते ।। ३८ ।।**

( 36 ) [a]) भेदाभेदाभ्या तावदनिर्वाच्यासौ केवलं भेदाभेदसमन्वितेत्युक्तम् । अथात्र निष्कोपाणिकां करोपि तत्त्वया सहास्माकं किं प्रयोजनम् । सर्वथा शक्तिशक्तिमतोरेकान्तेन तत्त्वमव्यतिरेको वाभेद एव वा । [b]) वैयाकरणनयानुसारिभिस्त्वस्माभिः सामर्थ्यं व्यतिरिक्तमेवोच्यते । यस्मात् **शब्दप्रमाणको लोकः ।** शास्त्रेण चानेन स एवानुगम्यत इत्याह ' **स शास्त्रेणानुगम्यते ।** ' [c]) लोकप्रतीत्यनुसारेण हि शब्दस्यार्थो वितन्यते । लोकश्च शब्दक्रियानिमित्तायाः शक्तेर्व्यतिरेकमेवानुगच्छति । अव्यतिरेके हि सततं क्रियानिष्पत्तिप्रसङ्ग इत्युक्तम् ।। ३८ ।।

अथ परमार्थपर्यालोचनां विना न निर्वृतिमुपलभसे तदत्रोच्यते किंचिदित्याह ।

**परमार्थे तु नैकत्वं पृथक्त्वाद्भिन्नलक्षणम् ।**
**पृथक्त्वैकत्वरूपेण तत्त्वमेव प्रकाशते ।। ३९ ।।**

( 37 ) पृथक्त्वाद्भिन्नलक्षणं पृथक्त्वव्यतिरिक्तं नैकत्वमस्ति, पृथक्त्वैकत्वरूपेण हि तत्त्वमेव प्रकाशते । तद्धि व्यतहारदशायां पृथक्त्वेन प्रकाशते । अविद्याविलये

---

( 35 ) [a]) B om. यस्मात् ... निमित्तभूतं. A °देनेष्टतमत्वा° ; C °देनेश्रितत्वमतादिना : D °नेष्ठिततमत्वा°. A °दिभावः ; D °त्वादिभावा. C शब्दप्रवृत्तेः सकृच्छक्ति°. [b]) AH यथा पच्यन्ता विक्लिन्त्यै एधाज्व° ; D यथाः पच्यन्तां विक्लित्त्ये. A ज्वलनेक्रिया°. A °रिक्ताऽव्यति° ; C °वा तस्मादव्य° ; D om. अव्यतिरिक्ता.

का. ३८. तत्वं वा. O om. शब्दप्रमाणको लोकः. In C, the second half of the verse is given after the words : शास्त्रेण चानेन स एवानुगम्यत इत्याह in the commentary.

( 36 ) [a]) ADH निष्टेणिकां ; O शिष्कोष°. ADH °था शक्तिमतो°. AD भेदः। एवं च. [b]) C °णानुनयानु°. ADH om. स ( after इत्याह ). C om. शास्त्रेणानुगम्यते but gives the second half of Kārikā 38. [c]) I लोकप्रसिद्ध्य°. I ins. न ( after लोकश्च ). AD °रेकं. C °लोचनया वि°. ACDH om. न ( after विना ). ADH °लभन्ते. A ते तदो° ; DH स तदो ; C स तदत्रो°.

का. ३९. H परमार्थेषु. CD पृथक्त्वैक°.

( 37 ) D पृथत् का°. A अविद्या व्य° ; DH निधि व्य°; C नापि व्य°. B अविद्याविषये.

त्वेकत्वेन प्रकाशते इति बोद्धव्यम् ।। ३९ ।।

एतदेव व्याख्यातुमाह ।

**यत् पृथक्त्वमसंदिग्धं तदेकत्वान्न भिद्यते ।**
**यदेकत्वमसंदिग्धं तत् पृथक्त्वान्न भिद्यते ।। ४० ।।**

(38) असंदिग्धं याथात्म्यावगमात् सन्देहं विना कृतं यत् पृथक्त्वं तदेकत्वान्न भिद्यते । यच्चैकत्वमसंदिग्धं विगतभ्रमं तत् पृथक्त्वान् नानात्वान् न भिद्यते ।। ४० ।।

तथा च यदैकत्वं काष्ठामनुप्राप्तं तदा सर्वत्र तदेव प्रकाशत इत्याह ।

**द्यौः क्षमा वायुरादित्यः सागराः सरितो दिशः ।**
**अन्तःकरणतत्त्वस्य भागा बहिरवस्थिताः ।। ४१ ।।**

(39) [a]) *अथवास्तां* कतिपयवस्तुविषयो नानात्वैकत्वविचारः । य इमे द्यौश्चाकाशं च पृथिवी च द्यावापृथिव्यौ महत्यौ महाभूतसंज्ञिके वस्तुनी, तदन्तरे च वायुरपि तृतीयः, तथादित्यलक्षणमपि सकलतेजसां प्रधानं दिव्यं तेजः, आपः सरित्-समुद्रा वा विकाराः, सर्वाण्येतानि महाभूतानि सकलजगज्जीवितभूतानि, दिशो वा लोकव्यवहारनिमित्तभूताः, कालश्च वक्ष्यमाणः, तदेतत् सर्वम् '**अन्तःकरणतत्त्वस्य**' इति अन्तःकरणसंज्ञकं अन्तःकरणत्वेनान्तररूपतया प्रतिभासमानं यत् तत्त्वं तस्यैवैते भागाः प्रतिबिंबकाः आभासा बहिरवस्थिताः । [b]) परमार्थे तु कीदृशोऽन्तर्बहिर्भावः । एकमेव संविन्मयं परं शब्दब्रह्म तथा तथावस्थितमिति कारिकार्थः ।। ४१ ।।

महाभूतरूपत्वं दिग्रूपतां चाभिधाय कालरूपतां तस्यैव प्रतिपादयन्नाह ।

**कालविच्छेदरूपेण तदेवैकमवस्थितम् ।**
**स ह्यपूर्वापरो भागः पररूपेण लक्ष्यते ।। ४२ ।।**

---

का. ४०. D पथमस्वंदि. D पृथत्कोन्न°.

(38) ADH यथातथावगमात् . D कतं. ADH om. यत् (after कृतं). A प्रकार इ° DH प्रकारक इ°. C om. the commentary on this verse.

का. ४१. O बहिरिव स्थि°.

(39) [a]) AD एकत्वानेकत्व°. A चरमे द्यौ°; D पदमे. B आकाशः. D महत्वौ महत्यौ B °संज्ञिके. AH जलद्युती त°; D वलद्यु°. C तृतीयाः. O °तीय. AH यदादित्य°; D वदादित्यं. ADH दिव्यते°. AH सरितः. A समुद्रः गौर्वावितता ; BCIO समुद्रगाववितताः. ADH om. अन्तःकरणसंज्ञकं यत् तत्त्वम् . B om. त्वेनान्तररूपतया ... कारिकार्थः. ADH भावाः. I बहिरिव स्थिताः. [b]) H om. कीदृशो ... कारिकार्थः.

का. ४२. O कालमिच्छेतरू°. C स स्वपूर्वा°. O भावः. C ऊमरूपेण.

(40) [a]) **स ह्यपूर्वापरः** परमार्थेन । अथवा कालशक्तिवशात् चिरक्षिप्रादिक्रमेण लक्ष्यते । तदेवं पदार्थसामर्थ्यमेव लोकप्रसिद्ध्या वैयाकरणमतेन साधनम् । [b]) अथ वा बुद्धिप्रकल्पनारूपं विज्ञानवादाभिप्रायेण, संसर्गिरूपं वा पदार्थान्तरभूतं संसर्गवादानुसारेण, अदृष्टलक्षणमपूर्वशब्दवाच्यं वा मीमांसकदृष्ट्या, ब्रह्मसंबन्धिनी वा कालशक्तिरद्वैतदर्शनेन, क्रिया राजसी प्रवृत्तिरूपा वा सांख्यदर्शनानुसारेण, नित्यमेकं द्रव्यलक्षणं वा कालरूपं द्रव्यकालवादिनां मतेन विज्ञेयम् । [c]) साधनप्रस्तावेन च कारकशब्दविचारः तत् प्रसङ्गेन च हेतुलक्षणकारककरणतादर्थ्यानां भेदनिरूपणपूर्वकं लेशतः स्वरूपमुक्तम् । ततः शक्तेः किं सह प्रागुत्तरकालं वा भाव इति कालविकल्पः । सा च किं कर्मादिभेदेन भिन्नैवाहोस्विदेकैव तथा तथा परिकल्प्यत इति संख्याविकल्पः । [d]) । सा च किं पदार्थाद्व्यतिरिक्तैवाथाव्यतिरिक्तेति व्यतिरेकाव्यतिरेकचिन्ता तत्प्रस्तावेन च ब्रह्मस्वरूपनिरूपणमिति प्रकरणस्य समुदायार्थः ॥ ४२ ॥

इदानीं प्रकृतं वैयाकरणमतमेवानुबध्नन् शक्तेर्व्यतिरेकमेवान्वयव्यतिरेकमुखेन परिघटयन् सद्भावमुपपादयितुमाह ।

**दृष्टो ह्यव्यतिरेकेऽपि व्यतिरेकोऽन्वयेऽसति ।**
**वृक्षाद्यर्थान्वयस्तस्माद्विभक्त्यर्थोऽन्य इष्यते ॥ ४३ ॥**

(41) [a]) **अव्यतिरेके** अभेदेऽपि प्रकृत्यर्थस्य वृक्षो वृक्षं वृक्षेण वृक्षायेत्यादौ विभक्त्यर्थस्य साधनलक्षणस्य व्यतिरेकः तथा तत्रैव विभक्त्यर्थस्यासत्यन्वये प्रातिपदिकार्थस्यान्वयोऽनुगमो **दृष्टः** । [b]) ततो मन्यामहे अस्ति कश्चिद् व्यतिरिक्तः प्रत्ययार्थभूतोऽनपह्नवनीयः साधनलक्षणः शक्तिशब्दवाच्योऽर्थ इति साधनसिद्धिः ॥ ४३ ॥

इदानीं व्याख्यातस्योपसंहाराय व्याख्येयस्योपक्रमाय कारिकामाह ।

**सामान्यं कारकं तस्य सप्ताद्या भेदयोनयः ।**
**षट् कर्माख्यादिभेदेन शेषभेदस्तु सप्तमी ॥ ४४ ॥**

---

(40) [a]) AH °र्थतः. BIO च ( instead of वा ). A लक्षितं. A तदेव. AH सामर्थ्यं प्रसिद्धं वै° ; D प्रसिद्धा. [b]) पदार्थान्तर्भू°. AH प्रकृतिरूपा. D om. क्रिया राजसी ... °वादिना मतेन. C बोद्धव्यम्. [c]) ADH भेदपूर्वं निरूपणम् । पूर्वकाले कृतः. C किं पदार्थकर्मा°. A °देकैव सैव तथा ; DH °देकैवनैव तथा. [d]) ADH °र्थस्वरूपाद्. A °रिक्ताव्यति°. A °तिरेको । व्यतिरेकं विना तत्प्रस्तावे तु. ADH °रणसमु°. AH °बन्धनम् ; D °बन्धं श छक्ते°.

का. ४३. D om. ऽपि व्यतिरेको ; ADHI अन्वये सति. C विभक्तयर्थो.

(41) [a]) A °र्थस्य वृक्षे वृक्षाये°. DHO वृक्षं वृक्षे वृक्षाये°. A तत्र च. A °र्थस्यासत्यत्वम् । येन ; C °र्थस्यान्वये सत्यन्वये ; D °र्थस्यासत्यंत्वये ; O °स्य सत्यन्वये. [b]) A °कार्थेऽस्यान्वयेऽमु° ; C °न्वयानुग°. ADH °लक्षणशक्ति° ; I °लक्षणे श°. D °राया व्या° ; C °स्या क्रमाय.

का. ४४. °न्यकारिकं ; C कारणं ; D व्यद्धर्माख्या°. D समप्रा.

(44) [a]) **औदासीन्येन** ताटस्थ्येन **यत् प्राप्यम्** । यथा ग्रामं गन्तुर्वृक्षमूलादि । तथा **यत् कर्तुरनीप्सितम्** चोरविषादि । एतत्

'तथायुक्तं च नीप्सितम्' (P. 1.4.50)

इति द्वितीयसूत्रनिर्दिष्टं तावद् द्विविधम् । [b]) तथा च येनैव प्रकारेण कर्तुरीप्सिततमं तेनैव **चेत् अनीप्सितम्** ईप्सितादन्यद् द्वेष्यं विषादि, इतरच्च यदौदासीन्येन प्राप्यं वृक्षमूलाद्युक्तम् । तथा **संज्ञान्तरैः** अपादानादिसंज्ञाभिरनाख्यातमपि क्रियानिमित्तम् । [c]) एतद्

'अकथितम् च' (P. 1.4.51)

इति तृतीयसूत्रनिर्दिष्टं वेदितव्यम् । तथा '**यद् यच्चाप्यन्यपूर्वकम्**' इति । अन्यत् कारकं पूर्वं यस्य । यथा 'देवदत्तमभिक्रुध्यति', 'देवदत्तमभिद्रुह्यति' इति । अत्र हि

'क्रुधद्रुहोरुपसृष्टयोः कर्म' P.1.4.38

इत्यनेन क्रुधद्रुहोरुपसृष्टयोः उपसर्गसंबन्धयोः यं प्रति कोपः तत् कारकं पूर्वसूत्रेण संप्रदानसंज्ञमपि कर्मसंज्ञमेव भवति । [d]) तथाक्षान् दीव्यतीत्यत्र

'दिवः कर्म च' (P. 1.4.43.)

इत्यनेन दिवः साधकतमं यत् पूर्वसूत्रेण करणसंज्ञमेव कर्मसंज्ञं भवति ॥ ४६ ॥

अथ निर्वर्त्यादि त्रिविधमुद्दिष्टं व्याख्यातुमाह ।

**सती वाविद्यमाना वा प्रकृतिः परिणामिनी ।**
**यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते ॥ ४७ ॥**

(45) [a]) यस्य निर्वर्त्यमानस्य घटादेः प्रकृतिः **सती वा** यथा मृदादिका, **अविद्यमाना वा** यथा शब्दः संयोगादेः **परिणामिनी** अभेदेन नाश्रीयते मृदं घटं करोतीत्याद्येवंरूपतया न विवक्ष्यते, किं तर्हि, मृदा घटं करोतीत्यादिभेदेनैव । [b]) यदा प्रकृत्या सह विवक्षा तदा तन्निर्वर्त्यं कर्म प्रचक्षते कर्मविदः ।

विकार्यं व्याख्यातुमाह—

**प्रकृतेस्तु विवक्षायां विकार्यम्**

---

(44) [a]) AH तात्स्थ्येन ; C om. ताटस्थ्येन. A प्राप्तम्. A गच्छन् वृक्षं स्पृशति. C °तुरन्नाप्सितम्. C तेन तथायु° AD तच्च द्वि°. [b]) D वचनैव प्र°. AH °क्षितमेव चेदनी°. A °तादन्यथा वि°. A प्राप्तं. [c]) D rep. देवदत्तभि क्रुध्यति. A om. इत्यनेन क्रुधद्रुहोरुपसृष्टयोः. A °र्गसंबद्धयोः. [d]) C अक्षैर्दीव्यति. A °सूत्रेण तत्करणसंज्ञमपि. AH निर्वर्त्यं त्रि°.

का. ४७. B सति. B °विद्यमासा. I नादी°. B कस्य. H प्रवक्ष्यते.

(45) [a]) AD निर्वर्त्यस्य. D सता. D महादिका. A शब्द सं°. D शब्दं सं°. O °गादौ. A °णाममापादिताः ; C °णामादिना ; D °णायादिना. C अभेदो ना° ; H अभेदतः ; I नादीयते. A मृदो ; B मृदा ; D मृद. DH प्रकरो°. D °त्येवः रू° ; C °रूपं न. A विवक्षिता ; CD °क्षते. CI मृदो ; DH मृदं. [b]) A has 'प्रकृतेस्तु विवक्षायां विकार्यं' which is part of the next Kārikā after यदा. A om. यदा ... तुमाह.

(46) [a]) **प्रकृतेः** कारणस्य परिणामित्वेन यदा विवक्षा क्रियते मृदं घटं करोति, काशान् कटं करोति, अङ्गारान् भस्म करोति इत्यादि तदा विकार्यं कर्म प्रचक्षते। [b]) अथापरय मतान्तरोपन्यासच्छलेन प्रकारभेदकथनवाञ्छया निर्वर्त्यविकार्ये निरूपयितुमाह—

**कैश्चिदन्यथा**
**निर्वर्त्यं च विकार्यं च कर्म शास्त्रे प्रदर्शितम् ॥ ४८ ॥**

कथमित्याह

**यदसज्जायते सद्वा जन्मना यत्प्रकाश्यते ।**
**तन्निर्वर्त्यं विकार्यं च कर्म द्वेधा व्यवस्थितम् ॥ ४९ ॥**

(47) [a]) **यदसद्** वैशेपिकाद्यनुसारेण **जायते** सांख्यमतेन सदेव वा जायते तदुभयमपि **जन्मना** प्रकाश्यमानत्वान्निर्वर्त्यं कथ्यते। एतदुक्तं भवति। सत्कार्यवादिनामस्माकं निर्वर्त्यं कर्मास्तीति वक्तुं पार्यते। सती तस्य प्रकृतिर्भवत्वसती वा। सर्वथा जन्मना प्रकाश्यमानत्वेन निर्वर्त्यत्वस्य न काचित् न क्षतिः। [b]) सदसद्वा जन्मना यत् प्रकाश्यते तन्निर्वर्त्यम्। **असज्जायते** इत्यविद्यमानप्रकृतेः कर्मणा निर्वर्त्यमानता पूर्वोक्तैवानूदिता, असज्जन्मना प्रकाश्यत इति। [c]) अयमत्र विशेषः। तद्यथा पुत्रं प्रसूते, शब्दं प्रयुङ्क्ते इत्यत्र कुक्षिस्थस्य सत एव पुत्रस्य विवक्षितस्य च शब्दस्य प्रसवप्रयोगाभ्यां प्रकाशनम्। सतः प्रकाशनं हि जन्मात्र विवक्षितम्। जन्मग्रहणेन प्रकृतिविवक्षायां विकार्यतामाह। अन्यथाभिव्यज्यमानस्य निर्वर्त्यकर्मताभावमपि जन्मग्रहणेनाह। [d]) तेन वेदमधीते इत्यादौ वेदादेरध्ययनेन प्रकाश्यमानस्य निर्वर्त्यकर्मताभावात्

"कर्मणि निर्वर्त्यमानविक्रियमाणे इति चेद् वेदाध्यायादीनामुपसंख्यानम्।"
(Vā. on P. 3.2.1.)

---

(46) [a]) A प्रकृतिः ; A मृदा ; D मद. A काशैः ; D काशा. C °ङ्गारां. DH विवक्षार्थं. [b]) C अथपर. C कथवा°.

का. ४९. H om. विकार्यं ... स्थितम्. CD give the same after the words इह तु तीर्थिकमताश्रयेणेति विशेषः on V. 49.

(47) [a]) H om. यदसद् ... °मानत्वात्. D ज्ञायते. B °र्त्यत्वं क°. A वक्तव्यं पा°; D चक्तं पर्यायते ; OB पारयति. A सतीत्यस्य. A °श्यमाना न वै निर्वर्त्यस्य. C om. सर्वथा. [b]) BCDHIO have "इतश्च प्रकृतैव हेलाराजकृतिः।" followed by the कारिका—कैश्चिदन्यथा। निर्वर्त्यं च etc.। From the words सदसद्वा जन्मना यत् प्रकाशते it is again the commentary of Helārāja. C तथा प्रका°. BC कर्मणो. A °मानमित्यतः पूर्वोक्तैनवान्तरितो. C °नादिता सजनाना च. D °नदितो. [c]) H प्रसूयते. AD °सवयो°. A °नाद्धि ज°. [d]) I निर्वर्तरमानक°. A °मानो वि°. CI °मानेवि°. A °ध्यपनादी°.

इत्युच्यते । इत्थं च प्रकृत्यर्थविवक्षायामेवैतन्निर्वर्त्यं कर्मोक्तमिति

कैश्चिदन्यथा

इत्यसङ्गतम् । [e]) तस्मात् सदसत्कार्यवादिमतभेदेनैतद् व्याख्येयम् । पूर्वं लोकप्रतीत्यनुसारेणोक्तम् । इह तु तीर्थिकमताश्रयेणापीति विशेषः ॥ ४९ ॥

" विकार्यं च कर्म द्वेधा व्यवस्थितम् " । प्रतिव्यक्ति लक्षणं वक्तुं व्यक्तिभेदः पूर्वमुक्तः । लक्षणमाह—

**प्रकृत्युच्छेदसंभूतं किंचित् काष्ठादिभस्मवत् ।**
**किंचिद् गुणान्तरोत्पत्त्या सुवर्णादिविकारवत् ॥ ५० ॥**

(48) [a]) निरन्वयविनाशात् प्रकृतेरुच्छेदः । तद्यथा काष्ठादेर्भस्मादि । काष्ठानि भस्म करोति । पूर्ववत् प्रकृतिविकारयोः क्रियासंबन्धो योज्यः । पूर्वेण तु लक्षणेन निर्वर्त्यमेतत् कर्म प्रकृतेरविवक्षायाम् । विवक्षायां तु विकार्यम् । इह त्वविवक्षायामपि प्रकृतौ भस्मादिकार्यं रूपविशेषादेव काष्ठादिकमुपमृद्योपजातमिति प्रतितेर्विकार्यम् । [b]) पूर्वत्र तु प्रकृतिः साक्षाद्विकार्यं कर्म, तदभेदेन विकारोऽपि । इह तु साक्षाद्विकार एवेति विशेषः । काष्ठानि दहतीति तु प्रकृतिरेव शब्दवती, सामर्थ्यगम्यस्तु विकारो भस्म । एवं काण्डानि लुनाति, चर्म करोतीत्यादौ वेदितव्यम् । काचित्तु प्रकृतिरत्यजन्ती स्वरूपं संस्थानान्तरापत्त्या विकृतेत्युच्यते इति गुणान्तरस्य सन्निवेशादेर्धर्मस्योत्पत्त्योपलक्षितमपरं विकार्यं कर्म । तद्यथा सुवर्णं कुण्डले भवत इति । [c]) असत्कार्यनये यद्यप्यत्रापूर्वोत्पत्तिः तथापि प्रत्यभिज्ञानाल्लोके तत्त्वाध्यवसायाद्गुणान्तरमात्रापत्तिरुच्यते । एतच्च प्रकृतिविवक्षायां पूर्वलक्षणेनापि सङ्गृहीतम् ॥ ५० ॥

इदानीं प्राप्यकर्मलक्षणमाह—

**क्रियागतविशेषाणां सिद्धिर्यत्र न गम्यते ।**
**दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते ॥ ५१ ॥**

---

[e]) C तिर्यङ्मता°. C द्विधा. A om. वक्तुम्. A ins. प्रतिलक्षणं (before व्यक्तिभेदः।). A °मुक्त.

का. ५०. C संश्रुतं. D °स्मावाद. DBH °न्तरापत्त्या.

(48) [a]) A यथा; D तथा. C भस्मसात्; D भस्मा. D °कारायाः; B पूर्वे त. I °णेन तु नि°. A °क्षया. C °तिविषयम्. [b]) AH पूर्ववत्. C पूर्वं च इ. A °र्यक°. A °भेदेऽवि°. B °क्षाद्विशेष. A दहन्ती°. DH rep. प्रकृतौ ... दहतीति तु. I काष्ठानि. AH कर्म. AD °न्तरस्य°. C °स्य नि°. [c]) A °र्थतया; D °र्थमये. C प्रतिज्ञा°. C °ल्लोको.

का. ५१. I °कृतावि.

(49) [a]) निर्वर्त्ये कर्मणि निर्वृत्तिरात्मलाभ एव क्रियाकृतो विशेषो **दर्शनात्** प्रत्यक्षादेवावधार्यते। विकार्ये तु भस्मकुण्डलादौ विकारः क्रियाकृतो विशेषोऽवधार्यते प्रत्यक्षेण। क्वचित् पुनरनुमानाद्विशेषावसायो यथा परत्र जनितानां सुखादीनां मुखप्रसादादिना लिङ्गेनावसायः। जलावसेकादिक्रियावेशितश्च वनस्पतीनां विशेषः प्रतिकलमवाप्तजन्मा सूक्ष्मत्वादुत्पत्त्यनन्तरमनवसीयमानश्चरमावस्थायां प्रचिततरविशेषदर्शनादवधार्यते। [b]) न ह्ययं प्रचिततरो विशेषोऽनपेक्षितक्रमो झटित्यशङ्कित एवोदेतुं प्रभवतीति प्रतिक्षणमनुमीयमानः सूक्ष्मरूपः, तस्य हि सूक्ष्मस्य रूपस्य दुरवधारत्वम्। यथा षड्जादिस्वरविशेषयोस्तारातितारयोः। तदेवंविधो विशेषो यत्र क्रियाकृतो न संदृश्यते तत्कर्तुः क्रियाया विषयभावमात्रेणेप्सिततमत्वात् प्राप्यं कर्म। तद्यथा आदित्यं पश्यति, नगरमुपसर्पति वेदमधीत इत्यादि। आदित्यादीनां हि संदर्शनादिक्रियया कश्चिदाहितो विशेषो नावधार्यते। [c]) प्रमाणाभ्यां क्रियासंबन्धमात्रं तु लक्ष्यते, न च स एव विशेषः। वृत्ते क्रियासंबन्धे वस्तुगतस्य भेदस्य निर्वर्त्यविकार्ययोर्दृष्टत्वात्। नगरे तु गमनक्रियाजनितः संयोगो द्विष्ठो विशेषो भवन्नपि नगरस्य महापरिमाणत्वादल्पपरिमाणेन देवदत्तेन हिमवदङ्गुलिसंबन्धवदलक्ष्यः। पृथिव्येकदेशश्च स्वावयवापेक्षया कल्पितो विशिष्टस्वाधेयाधाररूपो नगरशब्दवाच्यः प्रसिद्ध एवेति न काचिदनुपपत्तिः॥ ५१ ॥

नास्त्येव प्राप्यं कर्म, सर्वत्र क्रियाकृतविशेषावधारणादिति केचित्। तथा हि—

**विशेषलाभः सर्वत्र विद्यते दर्शनादिभिः।**
**केषांचित्तदभिव्यक्तिसिद्धिर्दृष्टिविषादिषु॥ ५२ ॥**

(50) [a]) दर्शनादिक्रियाहित**विशेषलाभो** विकारः **सर्वत्र विद्यते,** सौक्ष्म्यात्तु नावधार्यते सर्वेणेति केषांचिन्मतम्। तस्य विशेषस्य दृष्टौ विषं येषां तेषु तद्विषयेऽभिव्यक्तेर्निश्चयस्य सिद्धिः। दृष्टिविषैरहिभिर्निरीक्षितो हि विषयो ज्वलनज्वालालीढो लक्ष्यते। तत्साधर्म्यादन्यत्रापि दर्शनादिनाहितः कश्चिद्विशेषो विषये समुन्नेयः। [b]) तैजसं हि चक्षुः प्राप्यकारीति तेन युक्तो विषयोऽवश्यं विक्रियते यथा दृष्टिविषदर्शनेन।

---

(49) [a]) ACD निर्वर्त्यक°. DH °या प्रकृ°. DH प्ररजनि°. I जलसे°. ACDH प्रतिजल°. A °वाप्य जन्म. A °मवसी°. D प्रवित°. [b]) AD °षोऽनवे°. O त्सदित्य°. D °हेतुं. D om. तस्य हि सूक्ष्मस्य रूपस्य. A दुःखाधारत्वम्. ACD तथा. AD °रूपघोरातिता°. D °विध्ये. A °ते कर्तुः; A क्रियाविष्ट°. A °मुपश्रयति. A °त्यादौ. A °न क्रि°. I has न before कश्चित् and none after विशेषो. [c]) A घृते; I प्रवृत्ते. D om. नगरे तु. AD विशेष्यो. A हि भवदंगु°. A स्वाधाराधेय. A कदाचि°. A प्राप्यकर्म. D प्राप्तरू°.

(50) [a]) A षाद्यो वि°. D om. दर्श ... न. D om. विकार; A सर्वेति. I दर्शनम् तथा हि. HI °ष्टौ विषयं°. I हि विषे. I °लावलीनो. [b]) A °श्यं क्रि°. A °ष्टिविशेष; A तेजस्वदुत्कट वि°. D °दुत्कठं. B दर्शयति; I दशति. A प्रत्नवतोर्यास्त्वेव. D प्रसीयतादावस्त्येव.

इयांस्तु विशेषो दृष्टिविषे तेज उत्कटं विषसंपर्काद्विषयं दहति, अन्यत्र तनुतरस्थिति। आदिशब्देनायस्कान्तादीनां ग्रहणम्। तत्सन्निधौ लोहं भ्रमति। कनकफलसन्निधौ हि जलं प्रसीदतीत्यादावस्त्येव क्रियाकृतो विकारः। एतच्च न शास्त्रकारस्य मतम्। केषांचिदित्यन्यमतत्वेनोपन्यासात्। [c]) क्वचिद्विशेषदर्शनेऽपि न सर्वत्र तथा भावोऽदृश्यमानविशेषेऽपि युक्तः। किं च क्रियाफलेऽत्र विकारोऽभिप्रेतः। परिदृश्यमानस्तु विषयो क्रियाया हेतुर्न फलम्। दृष्टिविषादावपि तेजःसंयोगाद्विषये विकारो न क्रियाबलात्। एवमयस्कान्तादेर्वस्तुस्वभावोऽयं न क्रियाकृतो विकारः कश्चित्। तस्मादस्त्येव प्राप्यं कर्म क्रियाकृतोपकारानपेक्षम्॥ ५२॥

न चेद्विकारयोगः प्राप्यकर्मणः कथमस्य क्रियासिद्धावङ्गभावः साधनतासम्पत्त्यर्थः। उच्यते।

**आभासोपगमो व्यक्तिः सोढत्वमिति कर्मणः।**
**विशेषाः प्राप्यमाणस्य क्रियासिद्धौ व्यवस्थिताः॥ ५३॥**

(51) [a]) योग्यदेशावस्थानेन दर्शनपथमवतरति विषय इति योग्यदेशापत्तिः **आभासोपगमः** स्वभावादस्य दर्शने उपकारः। योग्यदेशस्थितस्यापि नीहारादिप्रकाशप्रतिबन्धकभावाभावादिप्रदीपादिनिमित्ता **व्यक्तिः** अङ्गम्। विषयस्य प्रकाशयोग्यदेशस्थितस्यासत्यावरकेऽदृश्यस्वभावः पिशाचादिरिति **सोढत्वम्**, बोधक्षमता, दृश्यस्वभावताङ्गम्। एतैरतिशयैर्दर्शने साधनभावमनुभवति प्राप्यं कर्म। [b]) एते च दर्शनक्रियाहेतवो न तत्कृताः। ग्रामं गच्छतीत्यादावपि यथायोगं सोढत्वादयो ग्रामादेर्वाच्याः। समीहाविषयीकृता हि ग्रामादयोऽवभासमाना गमनादिसहाः साधयन्ति गमनादिक्रियाम्। एवमधीयमानं वेदादि अध्ययनसहम्। मातरं स्मरतीत्यपि माता कृतोपकारा क्रूरहृदयस्यापि स्मृतिपथमनुपतन्ती साधयति स्मृतिम्। ईप्सिततमत्वानपेक्षायां तु संबन्धित्वसामान्यविवक्षायां शेषषष्ठी मातुः स्मरतीति॥ ५३॥

एवं तावाद् यथाविभागं कर्म लक्षितम्। इदं तु वक्तव्यम्—पूर्वमुक्तं गुणक्रियाणां कर्तारः सर्वे साधनविशेषा इति। तत्कथं कर्मतासंभव इति कर्मकर्तृविचारपातनिकां करोति।

---

A किकार; A om. न before शा°. A °चिदन्यम°. [c]) A °विशेषो. B °प्रेता. I °मानवस्तु वि°. B °दृष्टिविष°. A समादयेस्त्येवं. IO प्राप्यस्य क°.

(51) [a]) A °शताप°. A °भावदेशस्य; DH °भावदस्य. BIO °गमस्वभाव°. I °वः स दर्शने. A योऽन्यदे°. I °रादिप्रति°. A °कभानुप्रतीपादि°; H °कभावात् प्रदी°. A सत्यव्यापारको; D सत्यथावा°. H °त्यावारको द°. A बाधक्षमतामह°. A °र्शनसा°. A प्राप्यक°. [b]) A न कृ°. A मोदावि°. A राम[l]°. D स्मरयती°. D कतूहृद°. D °तती. D सतिम्.

निर्वर्त्यादिषु तत्पूर्वमनुभूय स्वतन्त्रताम् ।
कर्त्रन्तराणां व्यापारे कर्म संपद्यते ततः ॥ ५४ ॥

(52) [a]) निर्वृत्तिविक्रियाभासापत्तिक्रियासु यथासंख्यं निर्वर्त्यविकार्यप्राप्यलक्षणं कर्म स्वातन्त्र्यं कर्तृत्वमाश्रित्य तदपेक्षयान्येषां निर्वर्त्यादिकर्मविषयत्वाद् बहूनां कर्तॄणां निर्वर्तनादिव्यापारे प्रैषलक्षणे कर्म जायते तेनाप्यमानत्वात् । [b]) तथा हि निर्वर्तते विकुरुते आभासमुपैति प्रकाशते इति कर्तारः स्वव्यापारे कर्मभेदात् प्रधानकर्तृव्यापारे विवक्षिते निर्वर्तयति, विकारयति, आभासादिविषयभावमापादयतीति कर्तृप्रैषे स्वामिसन्निधाविव भृत्या न्यग्भवन्तः कर्मभावमनुभवन्ति ॥ ५४ ॥

एवं तर्हि कर्ता भूत्वा कर्म भवतीति कर्म भूत्वा कर्ता कथं भवति येन कर्मकर्तृत्वसंभव इत्यत आह—

तद्व्यापारविवेकेऽपि स्वव्यापारे व्यवस्थितम् ।
कर्मोपदिष्टान् लभते क्वचिच्छास्त्राश्रयान् विधीन् ॥ ५५ ॥

(53) [a]) भिद्यते कुसूल इत्यादौ यदा कर्तृप्रैषस्य निर्वृत्तिः कुसूलादेर्विशरारुरूपतया स्वयमेव भिदानुभवात्, लूयते केदार इत्यादावपि शुष्कतरत्वात् कर्तृप्रयत्नानपेक्षणात्, पच्यते ओदनः स्वयमेवेत्यादावपि सौकर्यातिशयवशात् कर्तुरनपेक्षणात् तदा स्वव्यापारे स्वातन्त्र्याश्रये कर्तृत्वे शास्त्रेण यत्नेन कर्मकार्यप्राप्त्यर्थः कर्मवद्भावो विधीयत इति कर्मणि अपदिष्टान् विहितान् विधीन् कार्याणि कर्ताऽपि सन् प्राप्नोति । [b]) कर्मकर्त्रन्तरव्यापारपातनेन हि स्वव्यापारे कर्तृत्वात् कर्मकार्याणि न स्युरिति शास्त्रारंभः । क्वचिद् इति । कर्मस्थभावानां कर्मस्थक्रियाणां च धातूनां विषय इत्यर्थः ॥ ५५ ॥

ननु च कर्तृप्रैषे निवृत्ते तदायत्तं कर्मत्वमत्र मा भूत् कर्तृत्वं तु कथं येन कर्मकर्त्तेति व्यपदेशः । तथा हि । सति प्रधानकर्तरि कर्मणः स्वक्रियायां व्यापारो दृष्ट इति तदभावे कर्मत्ववत् कर्तृत्वमपि कुत इत्याशङ्क्याह ।

निवृत्तप्रेषणं कर्म स्वक्रियावयवे स्थितम् ।
निवर्तमाने कर्मत्वे स्वे कर्तृत्वेऽवतिष्ठते ॥ ५६ ॥

---

का. ५४. B निर्वृ॰; D निवृ.

(52) [a]) A °र्वृत्तिः वि. A °पत्तिः क्रि°. A °र्त्यप्राप्य°. A °न्व्यक°. A °या त्वेषां. [b]) H तया हि. A निवर्त°. B °पिकु°. H om. आभासमु ... विकारयति. A कर्तरि स्व°. AD कथं भेदाः. A निवर्त°. B भूत्वान्यत् भ°. I °भवतः. A कर्माभूत् कर्ता°. A °कर्तृसंभ°.

का. ५५. B °दिष्टाल्लभ°. D °ष्टा न नभा°.

(53) [a]) A °सूलमि°. A निवृ°. A विषाणरू°; B विशदारू°. DH विशरारू°; I °शरा आकुरू°. A भिदा तु भवति. A °पारस्वा°. A यत् कर्म°. A °प्त्यर्थ. I कर्ता हि सन्. [b]) A कर्मवत्तत्र व्यापारफलनेन. A कर्मत्ववत्ता क°; B कर्म भवेत्.

का. ५६. C स्वे कर्मत्वे स्वे कर्तृत्वे.

(54) [a]) धात्वर्थानुकूल्येन चेष्टनं कर्तुः प्रेषणं स्वव्यापारः कारकान्तरविनियोगलक्षणम्। तदनभिधीयमाने कर्तरि पच्यते ओदनः स्वयमेवेत्यादौ निवर्तते। कर्त्राश्रयस्य व्यापारस्य कर्तरि प्रत्ययेनाभिधीयमाने धातुनाऽनभिधीयमानत्वात्। प्रतीयमानत्वं तु तस्य द्व्यर्थः पचिरिति भाष्यविरोधादसङ्गतमित्याख्यातम्।

तानि धात्वन्तराणि

इति च वक्ष्यमाणत्वाद् विषयविभागेन धात्वर्थेना कर्तृव्यापारस्य ग्रन्थकृतोऽभिप्रेता। [b]) तस्मिन्निवृत्ते स्वस्मिन् क्रियावयवे प्रधानक्रियापेक्षया गुणभूते स्वव्यापारे कर्म स्थितम्, कर्तृतया भूतपूर्वगत्या त्वस्य कर्मव्यपदेशः। यद्यपि च कर्तृव्यापारे विवक्षिते स्वक्रियायामेवावस्थानं तद्द्वारेण प्रधानक्रियानिर्वर्तनात्, कारकं कर्मेति सामानाधिकरण्याच्च, तथापि सामर्थ्यादत्र प्राधान्येनावस्थानं बोद्धव्यम्। अत एव कर्तृव्यापारापेक्षस्य कर्मत्वस्य निवृत्तावात्मीये सर्वत्र भवति स्वक्रियाविषये कर्तृत्वेऽवतिष्ठते इति कर्तृव्यापारापेक्षया पूर्वं कर्म भूत्वा सौकर्यातिशयप्रतिपादनपरतया तदविवक्षायां कर्ता सम्पद्यत इति भवति कर्मकर्ता। [c]) अयं भावः। न केवलं कर्तृव्यापारस्याविवक्षामात्रे कर्मकर्तृता, अपि तु स्वव्यापारे स्वातन्त्र्यविवक्षायामपि सत्याम्। ततश्चाप्राप्तानि यगादीनि कर्मकार्याणि

"कर्मवत् कर्मणा तुल्यक्रियः" (P. 3.1.87)

इति शास्त्रेण प्राप्यन्ते। तदुक्तं वार्तिककृता

"कर्मकर्तरि कर्तृत्वं स्वातन्त्र्यस्य विवक्षितत्वात्" (Vā. on P. 3.1.87)

इति। [d]) तत्र परायत्तोपजनेऽपि भिदादौ कुसूलादेः परानपेक्षा प्रतिपादिता भाष्ये

"यस्तु खलु निवाते निरभिवर्षे अचिरकालकृतः कुसूलः स्वयमेव भिद्यत इति।"

(M. Bhā. on the Vā. quoted above)

निवात इति समीरसम्पातमनवाप्येति कर्तृव्यापारो व्युदस्तः। निरभिवर्ष इति सलिलकलासंस्पर्शो व्युदस्तः। अचिरकृत इति कालान्तपरिवासाधीयमानविशेषव्युदासः। [e]) एते हि पातहेतवः कुसूलस्य सभाव्येरन् इति व्युदस्ताः। एवं चाद्दढसंनिवेशित्वात् स्वयमेव विशीर्यन इति कर्तृत्वोपपत्तिः। यत्रापि दात्रहस्तो देवदत्तः परिपतन् दृश्यते लूयते केदारः स्वयमेवेति अत्रापि तीव्रकरकिरणसम्पर्कसमुत्सारितस्नेहः परिजर्जरितनालः

---

(54) [a]) B °नुकूलेन. O चेष्टनं. A ins. कर्ता before कार°. H कातग्वि°. A °मान कर्त°. A °तुनाभि°. I °मानवत्वं A °ज्ञातमेवाख्यातान्तानि. A °ति वक्ष्य°. [b]) A कर्तृभूतया. D त्वस्य; A तस्य. A निमित्तावा°. A पूर्वकर्म. A °र्थादि प्र°. [c]) I कर्मकर्ता. A सत्यम्. D ममादी°. A कर्मवत्तुल्य°. [d]) A यदा यतो यजे°. A यदयं नि°. A चिरकृत. A °तनाप्येति. [e]) A °वेश°. A शीर्यत. A अत्र हस्ते. H om. स्वय ... केक्षरः. A °र्जरभुवनालेः; D तात् स्वा°.

विशीर्यमाणः केदारः तात्स्थ्यात् व्रीहिरूपो लवने सुकरतामेति । [f]) सामग्रीसाध्यत्वाच्च क्रियाणां प्रत्येकं व्यापारोत्कर्षणार्थं स्वातन्त्र्याध्यारोपेणाप्युपपन्नः प्रयोगः देवदत्तः छिनत्ति, असिः छिनत्ति, स्थाली पचतीत्यादिः । तत्र च कर्मण एव कर्तुः कर्मवद्भावो नान्यस्य, छिद्यते रज्जुः, पच्यते ओदनः स्वयमेवेति । तदेतदुक्तं भाष्ये—

"तत्रापि याऽसौ सुकरता नाम तस्या नान्यः कर्ता..."

(M. Bhā. on P. 3.1.87)

इति । [g]) सौकर्यातिशयवद्व्यापारे केदारे समीहिते न देवदत्तश्छेदस्य कर्तृव्यपदेशं प्रतिपत्तुं योग्योऽपि तु केदार एवेत्यर्थः । ओदनविक्लित्तौ तु छेदनवत् कर्तृव्यापारोऽपि नावश्यमपेक्ष्यः । अनपेक्षितकर्तृप्रयत्ना एव हि तण्डुला विक्लिद्यन्ति । करणादिकारकविनियोग एव ह्यत्र मुख्यः कर्तृव्यापारो लक्ष्यते ॥ ५६ ॥

[h]) ननु चैक एव पच्यादिर्धातुः क्वचित् कर्तृव्यापारे गुणभूतमर्थमाह पचत्योदनं भिनत्ति कुसूलं लुनाति केदारं देवदत्त इति । क्वचित्तु कर्तृव्यापारेऽप्रतिपन्नगुणभावं स्वप्रतिष्ठमर्थमाह पच्यत ओदनः स्वयमेवेत्यादावित्येषोऽसति रूपभेदे धातूनां विवेको दुर्लभ इति कर्तृप्रत्ययवाच्यैव भावना भवत्वित्याशङ्क्याह—

**तानि धात्वन्तराण्येव पचिसिद्ध्यतिवद् विदुः ।**
**भेदेऽपि तुल्यरूपत्वादेकत्वपरिकल्पना ॥ ५७ ॥**

(55) [a]) कर्मकर्तृविषयाणि पच्यादीनि विक्लित्त्यादिमात्रवचनानि तदुपसर्जनविक्लेदनादिव्यापारवाचिपच्यादिधातुभ्यो धात्वन्तराणि बोद्धव्यानि । अर्थभेदेन शब्दभेदात् । प्रधानं हि शब्दानां प्रतिपाद्योऽर्थः । प्रधानानुयायी च गुण इति न्यायात् प्रत्यर्थं भिद्यते शब्दः । तद्यथा पचेर्विक्लेदनवचनात् सिध्यतिरन्यो धातुर्विक्लित्तिवचनः । [b]) धात्वन्तरत्वेऽपि चैकत्वेन रूपाभेदादुपदेशो धातुपाठे डुपचष् पाक इत्यादि । अभिन्नरूपं ह्येकत्वकल्पनासहं वस्तु । यत्र तूपदेशभेदे फलभेदोऽस्ति तत्र द्विस्त्रिरुपदेशः, तद्यथा क्षियत्यादीनां विकरणभेदात् क्षि क्षये भ्वादौ, क्षि निवासगत्योरिति तुदादौ दिवादौ च, क्षीष् हिंसायामिति च क्र्यादौ ॥ ५७ ॥

---

[f]) A स्येकव्या°. D आसि. B om. असिः छिनत्ति. A अत्र क°. DH °भावे. A ins. अपि before नान्यः. [g]) A °शभवशाद् व्या°. A °नविभक्तौ. A °दनकर्तृ°. A मुख्यक°. [h]) AI °च्यादिधा°. BO om. क्वचित्. A °पारे प्रति°. A °ष्ठार्थ°. D यवत्पो°. A °दाविव रूप°. D °दार्वित्यषोसविरू°.

का. ५७. D धत्तितएण्येव.

(55) [a]) B °र्तृत्व वि°. B °दनानि व्या°. B °पद्योऽ°. O °र्थं प्र°. A °नत्वात् सि°. B °वचनं. [b]) A °त्वे हि चै°. B °रूपभे°. A °दिभिन्नरूपो. A °सहस्तु. DHI रूपदेश°. A यथा हि पच्या°. A क्षि हिंसा°; I ह्रिश हिं°.

इदानीम्

एकमाहुरनेकार्थं शब्दमन्ये परीक्षकाः

इति नयेनाह—

**एकदेशे समूहे च व्यापाराणां पचादयः ।**
**स्वभावतः प्रवर्तन्ते तुल्यरूपसमन्विताः ॥ ५८ ॥**

(56) [a]) तुल्येनाभिन्नेन रूपेण स्वभावेन युक्ता एते धातवोऽभिन्नाः, अबाध्यमानस्यैकाकारप्रत्ययस्याभेदावेदकत्वात् । अनेकार्थत्वमेव बाधकमिति चेन्न । शक्तिभेदेन तदुपपत्तेः । अनेकार्थप्रतिपादनशक्तिर्ह्येकोऽपि शब्दो दृष्टः । [b]) यथा ग्रामशब्दः शालासमुदायवाटकपरिक्षिप्तदेशजनसमुदायवचनः । यथा वाक्षादिशब्दाः । तत्र कर्मकर्तृविषये विक्लित्तिमात्रवचनः पचिः, पच्यते ओदनः स्वयमेवेति । देवदत्तस्य कर्तुः प्रत्ययेनानभिधानात्तद्व्यापारस्यात्र धातुवाच्यत्वाभावः । प्रधानभूतो हि पच्यर्थो विक्लित्तिः, सर्वत्र संभवात् । [c]) अपेक्षितेऽपि हि कर्तृव्यापारे देवदत्तः पचतीत्यत्र विक्लित्यर्थत्वाद्विक्लेदनस्य कर्तृव्यापारस्यार्थेन रूपेण विक्लित्तेरेव प्राधान्यात्, अत्र च द्वयस्याभिधानात् समूहवृत्तित्वम् । अत्रैव द्व्यर्थतोपपत्तिरुक्ता । कर्मकर्तृविषये तु कर्तृप्रत्ययस्याभावात् तद्व्यापारो भावना नाभिधीयते । [d]) कर्मैव ह्यत्र कर्ता, तद्व्यापारश्च विक्लित्तिरेवेति सैवाभिधीयते । तद्यथा विक्लिद्यन्ति सिद्ध्यन्ति तण्डुला इति विक्लित्तेरेव कर्तृव्यापारस्याभिधानम् । एवं भिद्यते कुसूलः स्वयमेवेति द्विधाभवनं धात्वर्थः । भिनत्ति कुसूलं देवदत्त इति तदुपसर्जनं द्विधाभवनमित्युदाहार्यम् ॥ ५८ ॥

[e]) तदेवं विचित्रशक्तित्वाच्छब्दानां विषयभेदेनार्थविवेकः समुदितः । इदानीं कर्मकर्तृप्रसङ्गेन

"णेरणौ यत्कर्म" (P. 1.3.67)

इत्यत्र

"कर्मकर्तृत्वात् सिद्धम्" (Vā. on P. 1.3.67)

इत्युक्तत्वात् विचारयति—

**न्यग्भावनान्यग्भवनं रुहौ शुद्धे प्रतीयते ।**
**न्यग्भावना न्यग्भवनं ण्यन्तेऽपि प्रतिपद्यते ॥ ५९ ॥**

---

(56) [a]) O om. स्वभावेन. A °वोभि°. A °भेदादेक°. [b]) A जनस्य वचनः. A यथा चा°. A परिपच्यते. O om. पचिः; A धात्वर्थो वि°. [c]) A विक्लेदस्य. A °क्लित्तिरेव. A °न्यात् समूहे वृ°. A अत्रैव वृत्तिरुक्ता. [d]) कर्मैव क°. A °सूलं स्व°. B °त्वर्थ । . [e]) A °क्तिवशात् श°. BO सूचितः.

का. ५९. B न्यग्भवतं न्यग्भावनं. DH न्यग्भावचां. A ण्यन्तेऽपि. A प्रतिपाद्यते.

**अवस्थां पंचमीमाहुर्ण्यन्ते तां कर्मकर्तरि ।**
**निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते ॥ ६० ॥**

(57) [a]) इहारोहयते हस्ती स्वयमेवेत्ययं हस्तिव्यापाराभिधायी प्रयोगोऽस्ति कर्मकर्तृविषयः । तस्य चान्वाख्यानोपायपरिकल्पना कर्तव्या । तत्र रूपसामान्यानुगमप्रवर्तितेन रेखागवयवदवयवापोद्धारेण तदर्थाश्रयणेन चान्वाख्यानं प्रवर्त्यते । [b]) तथा च यावतीषु सोपानस्थानीयासु अर्थविभागभूमिषु पदं विन्यस्येयं प्रायोगिकी पर्यन्तभूमिः प्राप्यते ता अन्तरालभाविन्यो गण्यमाना भूमयोऽवस्थाशब्दवाच्याः । तत्राद्ये भागे रुहिधातुः प्रत्यभिज्ञायते । तस्य चान्यत्रावस्थाद्वयरूपोऽर्थः प्रसिद्धः, स एवेहाङ्गीक्रियते । [c]) तदेतदाह—

**न्यग्भावना न्यग्भवनं रुहौ शुद्धे प्रतीयते ।**

इति शुद्धे केवले णिज्रहित इत्यर्थः । आरोहन्ति हस्तिनं हस्तिपका इत्यत्र न्यग्भवन्तं न्यग्भावयन्तीत्यर्थः । अत्र च धात्वर्थमात्रप्रदर्शने तात्पर्यम् । विकरणप्रत्ययाद्युपादानं तु नान्तरीयकम् । नान्यथा प्रयोगार्हः प्रदर्शकः शब्दो लभ्यत इत्यारोहयते हस्ती स्वयमेवेत्यस्यैव धातोरयममर्थः प्रदर्शितो भवति । [d]) एवं च कृत्वैकेन शब्देन धातुना नान्तरीयकतयोपात्तप्रत्ययसहायेनावस्थाद्वयं न्यग्भावनान्यग्भवनलक्षणमुपात्तम् । धातुभागादूर्ध्वं चात्र गुणाद्यादेशलक्षणकृतविकारो णिच् प्रत्यभिज्ञायते । स यदि यथास्थितप्रकृत्यर्थनिष्ठे प्रयोजकव्यापारेऽन्वाख्यायते तदा न्यग्भावनिष्ठापरप्रयोजकव्यापारप्रतीतिप्रसङ्गात् प्रकृतवैगुण्यं स्यात् । तेन रुहिधात्वर्थसङ्कोचलभ्यं मध्येऽवस्थान्तरं प्रकृत्यर्थत्वेन णिच आश्रीयते हस्तिव्यापारमात्ररूपम् । तत्पर्यन्ते पूर्वशङ्कापरिहाराय दर्शितम् ।

**निवृत्तप्रेषणाद्**

इत्यादिना । [e]) ततस्तन्निष्ठे प्रयोजकव्यापारे प्रागवस्थोपचयकारिणि णिजुत्पादितः केवलरुहितुल्यार्थतां सम्पादयति । तदाह

**न्यग्भावनान्यग्भवनं ण्यन्तेऽपि प्रतिपद्यते ।**

इति । आरुह्यते हस्ती स्वयमेव, आरोहयन्ति हस्तिनं हस्तिपका इत्युदाहरणद्वयमत्र । एकेन प्रयोज्यव्यापारो णिच् प्रकृत्यर्थरूपो दर्शितः । स च नान्यथा शक्यदर्शन इति

---

का. ६०. D अतस्थां. D कर्मकारि. D णितुच्य°.

(57) [a]) A च व्याख्या°. A प्रवृत्तिः। तेन. A °खापचयादवयवभावापोद्धा°. A च आख्या°. A प्रवर्तते. [b]) A प्रयोजिका. A °न्तरा न भावि°. [c]) A om. न्यग्भावना. A शुद्धं. A om. इति. D om. हस्तिनं. I °र्थप्रदर्शनमात्रे. A °ब्द उपपद्यते. [d]) °ज्ञायेत. A °ष्टप्र°. A °रे व्याख्या°. A °भावनि°. D प्रद°. [e]) A °कारिणो. A °सहिबुध्य°. HIO ण्ययन्तोऽपि. A °हन्ति हस्तिप°. A °रेणात्र प्र°. A °पदक°. A °प्राप्तेः.

यगात्मनेपदे कर्मवद्भवात् प्राप्ते नान्तरीयकतयोपात्ते। द्वितीयेन णिजर्थो हस्तिपकव्यापारः प्रदर्शितः। [f]) स च प्रयोज्यव्यापारपृष्ठपातित्वेन शक्यदर्शन इति रुहिरुपात्तः। प्रत्ययाद्युपादानं तु नान्तरीयकतया पूर्ववत्। तदेताश्चतस्रोऽवस्थाः। तत ऊर्ध्वमात्मनेपदसरूपो भागो दृश्यते हस्तिव्यापारमात्रप्रतीतिश्च। एतच्च कर्मकर्त्रवस्थामन्तरेणाशक्यमिति पूर्वावस्थासंकोचलभ्या साश्रीयते। तदाह—

अवस्थां पंचमीम्

इत्यादि। [g]) तदेवं कर्मकर्तृत्वाद् आरोहयते इत्यात्मनेपदे सिद्धे

णेरणौ

इत्यत्र

"कर्मकर्तृत्वात् सिद्धमिति चेद् यक्चिणोर्निवृत्यर्थं वचनम्" (Vā. on 1 3 67)

इति वार्तिककारेणोक्तम्। तत्र

"न वा यक्चिणोः प्रतिषेधात्" (Vā. on P. 1.3 67)

इत्यादिना कर्मवद्भावेनैवात्रात्मनेपदमिति सिद्धान्तितम्। गणयति गणः स्वयमेवेत्यत्र तु आत्मनेपदनिवृत्त्यर्थं नियमार्थनया

'णेरणौ'

इति सूत्रं वार्तिककारेण स्थापितम्। न्यग्भवनं च विक्लित्तिवत् कर्मस्थमिति रुहिः कर्मस्थक्रियो वाक्यकारस्य कर्मवद्भावविषयः॥ ५९, ६०॥

दृश्यते च धातूनां प्रकृत्यन्तण्यन्तानां केषाञ्चित् समानोऽर्थ इत्यत्र दृष्टान्तमाह—

**ब्रवीति पचतेरर्थं सिद्ध्यतिर्न विना णिचम्।**
**स ण्यन्तः पचतेरर्थो प्रकृते व्यवतिष्ठते॥ ६१॥**

(58) [a]) सिद्ध्यत्योदन इति विक्लित्तिमात्रवचनो धातुः। पचत्योदनमिति विक्लित्त्युपसर्जनं विक्लेदनलक्षणं पचत्यर्थं णिच्सहितोऽभिधत्ते साधयत्योदनमिति। एवमारुहिर्ण्यन्तोऽपि क्वचित्तदर्थे वर्तत इति। [b]) इदमत्र तात्पर्यम्। भिन्नावेवारुही प्रकृत्यन्तण्यन्तरूपौ पचतिसाधयतिवदेकार्थौ, ण्यन्ते तु प्रैषस्य निवृत्तावारोहयते हस्ती स्वयमेवेत्यपि न्यग्भवनवचनोऽन्य एव धातुरेवमुपायपरिकल्पनया व्युत्पाद्यते। न त्वयमत्र

---

[f]) BO °रीयकं पू°. A °वस्थां संबन्ध°. [g]) न्यग्मा°. A °स्था क्रिया वा°. A प्रकृत्यन्तरम्॥ ५९, ६०। ण्यन्ता°.

का. ६१. BIO णिचा. BI प्राकृ°.

(58) [a]) B °त्योदन इ°. H °र्जने. A °एवमाहुहि. [b]) A °चेव सद्दी. B °रूपो. °द्येत, A नन्वय°. A °छते इति चोद्यते।.

परमार्थतो णिच् येनार्थनिवृत्तौ कथमवतिष्ठतेति चोद्येत । [c]) अन्वाख्येयं हि लौकिकं शब्दमुद्दिश्य प्रतिपादकशब्दनिष्ठमुपायपरिकल्पनया प्रकृतिप्रत्ययविभागेनासत्येन सर्वत्रानुशासनं लौकिकार्थानुसारेणैवं क्रियते । नन्वेवमप्यसत्यस्यापोद्धारपदार्थस्यासंभवे कथं तच्छब्दः । एवं तर्हि कर्मव्यापारातिशयस्य णिच्प्रत्ययाख्यस्यास्ति संभव इत्यदोषः ॥६१॥

एवं प्रैपस्य निवृत्त्या कर्मणः कर्तृत्वमुपपाद्य प्रैपाध्यारोपेणाप्युपपादयितुमाह—

**केषांचिद्देवदत्तादेर्व्यापारो यः सकर्मके ।**
**स विना देवदत्तादेः कटादिषु विवक्ष्यते ॥ ६२ ॥**

( 59 ) कटं करोति इत्यादौ सकर्मके धात्वर्थे देवदत्तादिप्रधानकर्तृविषये प्रधानकर्तुः प्रयोजकस्य यः प्रैपलक्षणो व्यापारः असौ यदा सौकर्यातिशयविवक्षा कर्मणः तदा कर्तारमन्तरेण तत्र कर्मणि विवक्ष्यते । यथा हि देवदत्तः प्रयुङ्क्ते एवं कटोऽपि सुकरो देवदत्तमिति भवति विवक्षा ॥ ६२ ॥

तदेतत् सामान्येनोक्तं प्रकृते योजयति—

**निवृत्तप्रेषणं कर्म स्वस्य कर्तुः प्रयोजकम् ।**
**प्रेषणान्तरसंबन्धे ण्यन्ते लेनाभिधीयते ॥ ६३ ॥**

( 60 ) ([a] कर्तृव्यापारः प्रैषः कर्मणोध्यारोपित इति **निवृत्तप्रेषणं** तदविवक्षितप्रयोजकव्यापारं स्वातन्त्र्यविवक्षायामात्मीयस्य प्रयोजकस्य प्रयोजकतां सौकर्यातिशयवशात् प्रतिपद्यमानं तत्र कटादिकर्मसंबन्धिनि देवदत्तादिकर्तृविषये **प्रेषणान्तरे** प्रयोजकव्यापारान्तरे णिचि सति कारयते कटः स्वयमेवेति ण्यन्ताल्लकारेण कर्मकर्तृविषयेणाभिधीयत इति णिजभिधेयः प्रैषोऽस्तीति भावः । [b]) अत्र चोपायपरिकल्पना प्रैषो णिचो न तु वस्तुतस्तत्संभव इति प्रयोज्यापेक्षाभावः । तथा च प्रयोज्यकर्मसंभवादविद्यमानकर्मान्तरसंबन्धाद्धातोर्विधीयमानं णेरणावित्यात्मनेपदं कथमिति न चोदनीयम् । तथा हि-सौकर्याति-

---

[c]) A °सारेण नैवं कि°. A इत्यशेषः.

का. ६२. A °दत्तादौ. A यदा दे°.

( 59 ) A °वक्षा कर्मणः. D कर्तरि. A कर्माणि. A °क्ष्यन्ते. A करोति देवदत्त इति भवति विवक्षणात्. A एतत् सा°.

का. ६३. A ण्यन्तत्वेनाभि°.

( 60 ) [a]) B प्रैषं. A तद्विव°. D rep. the Kā. from कर्म to अभिधीयते and the commentary from कर्तृव्या° ... निवृत्तप्रेषणं. A °न्व्यापेक्षा. A om. प्रयोजकस्य. A °कता-सौक°. A प्रतिपा°. A तच्चक°. A कार्यते. DH °मेवेणेति. A °यन्ताद्याका°. [b]) A अण्यन्ते तत्स°. I °जकधर्मसं°. A °दनात् क°. A °प्रैषाध्यादोषोऽपि न इति प्रतीयते. D om. प्रतीते ... अवगम्यत इति. A °क्षणात्. A णिच् स्वयं निव°.

शयप्रतिपादनाय कर्मणो वास्तवः प्रैषोऽध्यारोपित इति प्रतीते तस्मिन् प्रयोजकत्वस्याविवक्षा, कर्मकर्तृप्रतीतिसामर्थ्यात् तु भूतपूर्वप्रेषणावस्थावगम्यत इति तद्विषयो णिच् न निवर्तते । c) एवं कर्मकर्तृप्रसङ्गेन णेरणाविह्यत्र विचारितम् ।

"त्यदादिषु दृशोऽनालोचने कञ् च" (P. III. 2.60)

इत्यत्र वार्तिके

"कृदर्थानुपपत्तिस्तु" (Vā. on P. 3.2.60)

इति चोदितम् । कर्तरि कृदिति वचनात् कर्त्रा प्रत्ययार्थेन भाव्यम् । स चात्र नोपपद्यते । सदृशलक्षणं ह्यर्थं तादृशादयः शब्दाः प्राहुः, न तु दर्शनक्रियायाः कर्तारमिति वार्तिकार्थः । तत्रोक्तम् ।

"इवार्थे चायं तद्धितः" (Vā. on 3.2.60)

इति । इवे प्रतिकृतावित्यत्र प्रकरणेऽयं तद्धितसंज्ञः प्रत्ययो वक्तव्यः । तथा च स इव तादृश इत्याद्यर्थसिद्धिरित्यर्थः । एवं वार्तिककारेण सिद्धन्तितम् । d) भाष्यकारस्तु कृदर्थानुपपत्तिरिति चोद्यं यथान्यासमेव परिहर्तुं

"कर्मकर्तृत्वात् सिद्धम्"

इति । तत्र दृशः कर्तृस्थभावकत्वात् कर्तृव्यापारदर्शनमात्रवाच्यतया प्रैषस्याभावात् कथं कर्मकर्तृत्वसंभवः । प्रेषणाध्यारोपे तु णिच् स्यात् । अण्यन्तश्च सूत्रे दृशिरुपात्तः ॥६३॥

अत्र

निवृत्तप्रेषणं कर्म स्वक्रियावयवे स्थितम् ।
निवर्तमाने कर्मत्वे स्वे कर्तृत्वेऽवतिष्ठते ॥

इत्यनेन न्यायेन कर्मकर्तृत्वं केचित् समर्थयमानाः प्राहुः ।

**सदृशादिषु यत्कर्म कर्तृत्वं प्रतिपद्यते ।**
**आपत्त्यापादने तत्र विषयत्वं प्रतिक्रिये ॥ ६४ ॥**

(61) a) सदृशतादृशादिषु शब्देषु व्युत्पाद्येषु **यत्कर्मकर्तृत्वं प्रतिपद्यते** यत्कर्मणः कर्तृत्वमुक्तं तत्र दृशेर्विषयभावविषये हि **आपत्त्यापादने क्रिये** वाच्ये इति

---

c) I °त्रोक्तं विचा°. A °पपत्तिरिति. A कर्तरि प्र°. A प्राहुः। ननु दर्शनक्रियायां. BIO अत्रो°. The usual from of this Vārttika is "इवार्थे तु तद्धितः". d) The sentence 'कर्मकर्तृत्वात् सिद्धम्' is not found in the present text of the Mahābhāsya. Instead, we have: अथवा युक्त एवायं कृदर्थः। कर्मकर्ताऽयम्। Secondly, "कर्मकर्तृत्वात् सिद्धम्" reads more like a Vārttika than a Bhāṣya passage. A चोद्यम्. A दृशेः. D om. न्यायेन ... प्राहुः.

का. ६४. D om. सद ... त्त्यपादने.

(61) a) A °शादिश°. A याभाव°. A °पयेच्छापत्त्या°. A ins. इति before वाच्ये.

तदाश्रयेण कर्मकर्तृत्वसमर्थना । तथा हि पश्यतीति कोऽर्थः । विषयं घटादिकं दर्शनविषयभावमापद्यमानमापादयतीति । [b]) तत्र विषयस्य परिच्छेद्यत्वेन व्यापार आपत्तिः, कर्मभूतस्य तद्विषयमापादनं कर्तृव्यापारो दृश्यर्थो न केवलः । तत्र कर्तृव्यापारे आपत्तिलक्षणो विषयव्यापारो न्यग्भवतीति तत्सन्निधौ स्वव्यापारे स्वातन्त्र्यं विषयस्य तिरोभवति । [c]) यदा तु योग्यदेशावस्थितः स्पष्टतरालोकमध्यपरिवर्ती विषयः तदा सुदर्शनो भवन् स्वयमभिव्यक्तदर्शनः कर्तृविनियोगमपाकरोतीति स्वव्यापारे स्वातन्त्र्यविवक्षायां कर्म भूत्वा कर्ता सम्पद्यत इति भवति कर्मकर्तृविषयः ।

एतत्तु नोपपद्यत इत्याह ।

**कुतश्चिदाहृत्य पदमेवं च परिकल्पने ।**
**कर्मस्थभावकत्वं स्याद्दर्शनाद्यभिधायिनाम् ॥ ६५ ॥**

(62) [a]) इह दृशेः कर्तृस्थं दर्शनमात्रं वाच्यं पश्यतीति । न ह्यतो विषयभावापत्तिरवगम्यते । किं तु विषयज्ञानमेव धात्वर्थः । विषयभावापत्तिर्हि सर्वस्य धात्वर्थस्यास्तीति विशिष्टमेव दर्शनं दृशेरभिधेयं न्याय्यम् । [b]) तच्च दर्शनं विषयप्रतिष्ठमित्यस्मात् कुतश्चित् सामर्थ्यात् विषयाक्षेपद्वारेण विषयभावापत्त्यादिवाचिपदाध्याहारे विषयगतव्यापारप्रत्यायनात्तदुपसर्जनकर्तृव्यापारवाचित्वकल्पने दर्शनासनाद्यभिधायिनामपि कर्मस्थभावकत्वमेव स्यादिति न कश्चिद्धातुः कर्तृस्थभावक्रियो नाम स्यात् ।

[c]) अथैतदयुक्तमिति प्रतिपादयितुमाह

आपद्यमानमापादयतीत्येवं विचक्षणतया यतः कुतश्चित् पदमध्याहृत्य भवतेदमुपकल्प्यते । तदेवं सति **दर्शनाद्यभिधायिनां** दृश्यादीनां धातूनां कर्मस्थभावकत्वं स्यात् । आदिग्रहणादासनाद्यभिधायिनामासिप्रभृतीनामपि । न चैतदुपपन्नं कर्तृस्थभावकत्वाद्दृश्यादीनामिति । अत्र **कर्मस्थभावकत्वं स्यात्** इत्यभिदधता कर्तृस्थभावकत्वं यदुपपन्नमेषां

---

[b]) B आपत्तिः. D °न्निध्यै. [c]) A °तरोलोक°. A °दर्शनो भवत् स्वयं दर्शनकर्तृविनियोगमुपक°. AD om. एतत्तु नोपपद्यते इत्याह.

का. ६५. H °स्थ रममेवं. D °ल्पोते. D कर्मत्व°. H °वकं स्या°.

(62) [a]) B न ह्येको. I °वोत्पत्ति°. A °त्वर्थोऽस्ती°. [b]) A तव दर्शं°. A विषये भावोत्पादिपदाध्याहारेण. B दर्शनाद्यभि°. I दर्शनविषयसनासना°. Here all manuscripts and A have the following sentence: इहापि पतितग्रन्थो हेलाराजकृतिः फुल्लराजकृत्या सन्धीयते । According to this, it is clear that form this point onwards, Helārāja's commentary was not available and, therefore, Phullarāja's commentary is being given. The portion beginning with the words अथैतद्युक्तमिति प्रतिपादयितुमाह is the commentary of Phullarāja on the Kārikā कुतश्चिदाहृत्य पदं etc. [c]) A आपाद्य°. A °श्चिदध्या°. B तदैव. BIO °तीनामिति. A तदेव. A om. कथं वा कर्मस्थ भावकत्व.

तदेवं विघटेतेत्युक्तं भवति ॥ ६५ ॥

अथ कथं कर्तृस्थभावकत्वं कथं वा कर्मस्थभावकत्वं विज्ञायेतेत्याशङ्क्य प्रसङ्गाद् व्याख्यातुमाह ।

**विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता ।**

(63) [a]) यत्र कर्तरि कर्मणि वा विशेषः कश्चित् परिदृश्यते तत्रैव क्रिया व्यवस्थितेति बोद्धव्यम् । सपरिस्पन्दसाधनसाध्या क्रिया, अपरिस्पन्दसाधनसाध्यो भाव इति विशेषमनपेक्ष्य सूत्रकाराभिप्रायेण क्रियापि भावोऽभिधीयत इति टीकाकारस्याभिप्रायः । तथा च

लक्षणहेत्वोः क्रियायाः (P. 3.2.126)

यस्य च भावेन भावलक्षणम् (P. 2.3.37)

इत्यादावभेद एव सूत्रकारस्य क्रियाभावयोश्चेतसि वर्तते ।

अन्ये त्वेतन्नेच्छन्तीत्याह ।

**क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकाश्यते ॥ ६६ ॥**

[b])**अन्येषां** मते **क्रियाव्यवस्था शब्दैरेव प्रकाश्यते** । एतदुक्तं भवति । येऽपि कर्मस्थभावकाः पच्यादयस्तत्रापि कर्तर्यपि परिश्रमादिको विशेषः परिदृश्यते । ततो नैतद्व्यवस्थापकम्, विशेषदर्शनं यत्र तत्र क्रियेति । तस्माच्छब्दैरेव च यत्र विशेषः प्रकाश्यते प्रतिपाद्यते तत्रैव क्रिया स्थितेति वक्तुं युक्तम् । शब्दप्रमाणकानां हि शब्द एव यथा यथार्थमभिधत्ते तथैव तस्याभिधानमुपपन्नम् । न तु वस्तुमुखप्रेक्षितया । शब्दश्च पश्यति घटमित्यादौ दृशिक्रियाविषयमविशिष्टमेव प्रत्याययति । काष्ठं भिनत्तीत्यादौ तु भिदिक्रियाविषयं सविशेषमभिधत्त इति तद्वशेनैव कर्तृस्थभावकत्वं कर्मस्थभावकत्वं चाभिधानीयम् । [c]) एवं च दृश्यते स्वयमेवेति न भवत्येवेति मन्तव्यम् । यत्त्वपरिस्पन्दसाधनसाध्यो भाव इत्यादि लक्षणमभिदधाय कर्मस्थः पचतेर्भाव इत्यादिकमभिदधति तदप्यव्यवस्थितमिव लक्ष्यते । तथा च पीलुपाके घटं पचतीति घटस्यानलसंपर्कादवयवक्रियाद्वारेणावयवसंयोगविनाशपूर्वकं पूर्वपूर्वकार्यविनाशे उत्तरोत्तरकार्यद्रव्यविनाशात् सपरिस्पन्दपरमाणुविषयपाकक्रियापि । ततश्चाव्यवस्थितमेवैतत् ॥ ६६ ॥

---

(63) [a]) °रिदर्श्यते. DH °स्पन्दसाध्या. I om. इति. A क्रियया भा°. A °न्ये त्वेवं ने°. [b]) A om. अन्येषा ... प्रकाश्यते. I पचत्यादयः. A तथापि. A क्रिया तत्रेति ; DH क्रियते. A ins. हि after एव. A यथार्थम्°. I om. तु. A °त्यादि दृशि°. A °यं विशि°. A om. कर्मस्थभावकत्वं. [c]) BI स्वयमिति. A °योगे वि°. A पूर्वकार्यवि°. A °शात् परि°. A °विषयपरि क्रि°. B तमिवै°.

[d]) एव तावत् प्रथमसूत्रलक्षितं निर्वर्त्यविकार्यप्राप्यभेदेन त्रिधा भिन्नं कर्म व्याख्याय तत्प्रसङ्गेन च निर्वर्त्यविकार्यविषयं मतभेदेन निवृत्तप्रेषणण्यन्ताण्यन्तधातुविषयमध्यारोपितप्रेषणं च कर्मकर्तारं प्रदर्श्य प्राप्यविषयस्य प्रदर्शनपूर्वकं प्रत्याख्यानमुक्त्वा तत्प्रसङ्गेनैव कर्मस्थभावकत्वकर्तृस्थभावकत्वे मतभेदेनैव व्यवस्थाप्येदानीं सूत्रान्तरनिर्दिष्टान्यपि कर्माणि व्याख्यातुमुपक्रमते । तत्राकथितसूत्रे ।

"कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम् देशश्च ।" (Vā. on P. 1.4.51) इत्युक्तं तावदनारंभणीयमिति प्रतिपादयितुमाह ।

**कालभावाध्वदेशानामन्तर्भूतक्रियान्तरैः ।**
**सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते ॥ ६७ ॥**

( 64 ) [a]) अकर्मकाणां कथं कर्मणा योगः स्यादिति कालादीनां तत्संप्रयोगे कर्मत्वं वक्तव्यमुपजायते । अत्रोच्यते । नात्र कर्मसंज्ञा वक्तव्या यस्मात् कालादीनामकर्मकैर्धातुभिर्योगे कर्मत्वमुपजायत एव । कथमिति विशेषयितुमाह **अन्तर्भूतक्रियान्तरैः** इति । अन्तर्भूतं प्रधानक्रियापेक्षया क्रियान्तरं येषामिति ते तथा । तैः **योगे** संबन्धे सति । अतश्च क्रियान्तरापेक्षया तेषां कर्मत्वं सिद्धमेवेति किमुपसंख्यानेन । तथा च मासमास्ते, गोदोहमास्ते, क्रोशं स्वपिति, कुरून् स्वपितीत्यादौ मासादीन् व्याप्यास्त इति व्याप्यज्ञायामासनादिक्रियायां धातुर्वृत्तः । [b]) व्याप्यदिक्रिययाप्तुमिष्यमाणत्वात् कालादीनां स्फुटमेव कर्मत्वमिति यत्नान्तरेण नार्थः । यद्येवमिदानीमासिप्रभृतयः कालभावाध्वकर्मभिः सकर्मकाः सम्पन्नाः, ततश्च तेभ्यः कालादिष्वेव कर्मसु लकृत्यक्तखलर्थाः प्राप्नुवन्ति न भावे । तत्र मासमास्यते देवदत्तेनेति भावे लकारो न स्यात् । मासमासितव्यम्, मासमासितम्, स्वासं मासम् इति च कृत्यक्तखलर्था भावे न स्युः । "भावे चाकर्मकेभ्यः" इति वचनात्तत्रापीष्यते । तस्मात्कालादिकर्मसद्भावादकर्मकत्वं कथम् । सकर्मकत्वे भावे लकारः कथमिति । उच्यते । द्विविधं कर्म, अन्तरङ्गं बहिरङ्गं च । तत्र द्रव्यकर्मान्तरङ्गम्, तेनैव च पूर्वं संबन्धः । बहिरङ्गं कालादिलक्षणं कर्म । यद् वक्ष्यते ।

शक्तिप्रमाण........

इत्यादिश्लोकेन । तत्र सकर्मकत्वाकर्मकत्वव्यपदेशोऽन्तरङ्गेणैव न्याय्यः । तथा चोक्तमकर्मकाणामित्युच्यत इत्यादिना भाष्येण ।

---

[d]) O om. °प्राप्यभेदेन ... तत्प्रसङ्गेन च निर्वत्य°. A निर्वर्त्यविष°. A °प्रे षणाण्यन्त°. A कर्मस्वभा°. A °कर्तृस्वभा°. BI °देनैवभव°. DH °ष्ठामपि.

( 64 ) [a]) A तत्प्रयोगे. H कर्मकत्वं. BO सिद्धमिति. I. मासान् व्याप्य. [b]) I om. इदानीम्. I om. कर्मभिः. D भावे मस्यः. O इष्यन्ते. A सकर्मकत्वव्यपदे°. A.°न्तरङ्गतामेवाह.

एवं च लादिभिरप्यन्तरङ्गे भाव्यमित्यन्तरङ्गबहिरङ्गतामेवाह 'आधार' इति ।

[c]) गोदोहं स्वपिति । यावता कालेन गवां दोहः समाप्यत इति । क्रोशादिः पुनः स्वकालपरिमाणेन क्रियान्तरं परिच्छिनत्ति । देशोऽपि कुतश्चिदवधेः प्राप्यमाणतया परिच्छिन्नकालस्वापादिविशेषहेतुरिति भिन्नाः कालादयः । एतेषां कालादीनां सर्वैरेवाकर्मकैः सकर्मकैश्चापि धातुभिर्योगे प्राकृतमेव कर्मत्वमुपजायत इति नैषां कर्मसंज्ञोपसंख्येयेत्यर्थः । तथा हि । न द्वितीयाविधानार्थमेव कर्मसंज्ञात्र, अपि तु लाद्यर्था अपि । तथा च

"कालाध्वनोरत्यन्तसंयोगे" (P. 2.3.5)

इत्यत्र वार्त्तिकम्

"अत्यन्तसंयोगे कर्मवल्लाद्यर्थम्" (Vā. on P. 2.3.5)

इति । लकृत्यखलर्था अपि संज्ञाफलमिष्यन्त इत्यर्थः ।

[d]) अत्र क्रियान्तरस्य व्याप्तिलक्षणस्याप्यास्यादिधातुभिरङ्गीकृतत्वाद् व्याप्तिक्रियाविषयभावोपगमनेन मासादि प्राप्यं कर्मेप्सिततममेवेति प्राकृतमेवैतत् कर्म यथा घटं करोति शकटं करोतीति भाष्य उक्तम् । तथाहि, मासमास्ते, गोदोहमास्ते, क्रोशं स्वपिति, कुरून् स्वपितीति व्यापनाङ्गमासनादि धातुभिरभिधत्ते मासं व्याप्यास्ते, मासमासनया व्याप्नोतीत्यर्थः । एवमन्यत्र यथायोगं योज्यम् । तद्यथा वलाहकाद्विद्योतते विद्युदिति निःसरणाङ्गे विद्योतने धातुर्वर्तते तथात्र प्राप्त्यङ्गेऽर्थे धातोर्वृत्तिः । क्रियान्तरमेवेदमन्तर्भूतं व्याप्तिकं कालादिविषयम् । देवदत्तः किं करोति, आस्त इत्यत्र तु व्याप्तिरहिते धातुरासनमात्रे वर्तते । तदेतद् यथाह

एकदेशे समूहे वा व्यापाराणां पचादयः ।
स्वभावतः प्रवर्तन्ते तुल्यरूपसमन्विताः ॥

पचति, पच्यते स्वयमेवेति तथात्र बोध्यम् । [e]) एवं चोपसंख्यानस्य प्रत्याख्यानादकर्मकग्रहणमनर्थकम् । सकर्मकाणामपि मासमोदनं पचतीत्यादौ मासादेर्व्याप्तिविषयत्वेन

---

[c]) Before गोदोहं स्वपिति, the words 'इतः प्रकाश एव' occurs in all the manuscripts and A. I think that they mean that form this point onwards, the commentary of Helārāja प्रकाश i.e. प्रकीर्णप्रकाश is being resumed. The words 'आधार' इति mark the end of Phullarāja's commentary on the Kārikā: कालभावाध्व etc. A कौशलादिः. BO परिणामेन. A °च्छिनत्ति इति कालादीना. A नैषा. A कर्म च लाद्यर्थम्. [d]) BIO तत्र. I कटं. I om. शकटं करोति. A व्याप्तितां गोदोहमासासनादिधा°. A यथा. B °णाङ्गे. B °प्सित्वं का°. A तदेतदाह. A °पसमाश्रिताः. [e]) D om. कर्मतासिद्धिः ... द्विकर्मकत्वे. BIO °दिरेवासनया क्रियाप°. A व्याप्त इति.

भवति न च भवति तेनाकर्मकाणाम्। न चैतत् कर्म क्वचिदपि न भवति। " (M.Bhā. on P. 1.4.52)

इति। [c]) परिहारत्रये को विशेषः। उच्यते। शब्दकर्माकर्मकाणामित्यत्र अविवक्षितकर्मका अकर्मका आश्रीयन्ते। एवं ह्यास्ते शेते इति क्रियामात्रविवक्षायां कालादिभिरप्यकर्मकत्वं संभवति। तथैव पचादीनामप्यविवक्षया कर्मसंबन्धेऽपाकृते अणि कर्तुर्णौ कर्मसंज्ञाप्रसङ्गः। तस्माद्यस्यात्यन्तमसंबन्धः कर्मणा सोऽकर्मकः। स च यदि धात्वर्थ आश्रीयते तदा तस्य क्रियात्मनो विवक्षावशेन कर्मसंबन्धासंबन्धयोर्भेदे कालादिभिरप्यकर्मकत्वे वचनस्य चरितार्थत्वं भवेत्। तस्मादविद्यमानं कर्मास्येति धातुरन्यपदार्थत्वेनाश्रीयते। गत्याद्यर्थत्वेनाणौ णाविति च तस्यैव विशेषणत्वेन प्रक्रमात्। अर्थद्वारके च धातोः कर्मयोगेऽयोगे च रूपस्याविशेषात् अकर्मकत्वं नोपपद्यते, कालादिकर्मभिः सर्वेषां धातूनामवियोगात्। एवं च विशेषणसामर्थ्याद् विशिष्टा एव धातवो द्रव्यकर्मसमन्वयरहिताः समाश्रीयन्ते। द्रव्यकर्मविषयेऽकर्मका इति पूर्वपरिहारार्थः। [d]) द्वितीये तु परिहारे वर्तिपदार्थस्य कर्मणः साक्षात् क्रियोपकारकत्वेनान्तरङ्गत्वं विशेषः समाश्रितः। तृतीये तु परिहारे भवति न भवतीत्यभिधानान्निषिध्यमानस्य संबन्धस्य विशेष आश्रीयते। येन कर्मणा कदाचित् संबन्धो भवति तेनैव द्रव्यकर्मणा अकर्मकाणाम्, न नित्यसंबद्धेन कालादिकर्मणेत्यर्थः। द्रव्यकर्मापेक्षत्वाच्च सकर्मकाकर्मकव्यपदेशस्य।

"उदश्चरः सकर्मकात्" (P. 1.3.53)

इत्यनेन मासमुच्चरति धूम इत्यात्मनेपदं न भवतीत्याहुः॥ ६९॥

न च कालादिकर्मैव भिन्नकक्ष्यम्, अपि तु

**सर्वं वाकथितं कर्म भिन्नकक्ष्यं प्रतीयते।**
**धात्वर्थोद्देशभेदेन तन्नेप्सिततमं किल॥ ७०॥**

(67) [a]) गां दोग्धि पयः, पौरवं गां याचते, गामवरुणद्धि व्रजम्, माणवकं पन्थानं पृच्छति, वृक्षमवचिनोति फलानि, इत्यादि सर्वमेवापादानादिविशेषकथाभिरकथितम्। द्रव्यकर्मापि गवादि पयःप्रभृतिप्रधानकर्मापेक्षयोपायभूतं नान्तरीयकत्वाद् भिन्नकक्ष्यम्। धात्वर्थस्य हि दोहादेः उद्देश एव भेदो विशेषः तेन हेतुना गवादीप्सा-

c) BIO °कत्वंसमव इति. I तथैव च. A °प्रसङ्गात् तस्मात्°. A तस्य चरिता°. A गत्यर्थत्वे°. A णाविति सैव विशेषणीयत्वेन. A अथ पाकं पच् धातोः. A कर्मयोगे च रू°. A °संबन्धरहिताः. d) A रङ्गत्वविशेषमाश्रितः. A °वतीत्यभिनिषि°. A श्रीयते न कर्म°. A कर्मणा नित्यसंबन्धो न काला°. A कर्मापेक्षितत्वा°.

(67) a) H गौरवं. DH गोचरयाचते. I संपृच्छ°. A °थितं। द्रव्य°. DH पयः प्रभवति. A °रीयकम्। धा°. A दोहोद्देश एव भेदो. I °थोऽन्तरी°.

प्रकर्परहितम्। पयःप्रभृति किलोद्दिश्य धात्वर्थः प्रवृत्तः। तत्र तदुपायभूता गवादयो नान्तरीयकाः। [b]) धात्वर्थेन वोद्देशो विषयीकरणं तस्य भेदः पूर्वापरकालजम्। पूर्वं हि धात्वर्थेन प्रधानं पयःप्रभृति विषयीकृतं पश्चान्निमित्तभूतं गवादि। धात्वर्थं वा दोहादिकमुद्दिश्य यस्माद् गवादयो भेदेनोपायत्वेन प्रवर्तन्ते, अतस्ते भिन्नकक्ष्याः। 'किल' इत्यस्मिन् पक्षेऽरुचिं सूचयति। तथा चाभिन्नमेव कर्मेति सिद्धान्तयिष्यति। [c]) ननु कालादीनां द्रव्यकर्मायत्तत्वाद् भवतु भिन्नकक्ष्यत्वम्, गवादौ तु विपर्ययात् कथमेतत्। तथा हि, गवाद्यायत्तानि पयःप्रभृतीनि कर्माणि। तथा चोक्तम्—

"गुणकर्मणि लादिविधिः पूर्वं गुणकर्मणा भवति योगः।
मुख्यं कर्म प्रेप्सुर्यस्माद्गव्येव यतते प्राक्।
तस्माच्छुद्धस्य दुहेर्भवति गवा पूर्वमेव संबन्धः॥
गोर्दुहिना पयसस्तु प्राक्, तस्माल्लादयस्तस्मिन्।"

(M. Bhā. on P. 1.4.51)

इति। सत्यमेतत्। प्रधानाप्रधानकृतस्त्वत्र कक्ष्याभेदः॥ ७० ॥

तथा हि।

**प्रधानकर्म कथितं यत् क्रियायाः प्रयोजकम्।**
**तत्सिद्धये क्रियायुक्तमन्यत्त्वकथितं स्मृतम्॥ ७१ ॥**

(68) [a]) यदुद्दिश्य फलभूतं क्रियाप्रवर्तने साधनानि सज्जीभवन्ति यदवासावुदासते तदीप्साप्रकर्षगृहीतं प्रधानं कर्तुरीप्सिततममिति कर्मसंज्ञया प्रथममेव कथितम्। तच्च पयःप्रभृति तदर्थं तु यदनीप्सितमपि नान्तरीयकं क्रियया समन्वेति तदनवाप्तविशेषमकथितकर्माप्रधानत्वाद् भिन्नकक्ष्यमित्यर्थः। तद्यथा गवादि। एवमप्राधान्येऽपि चोपायत्वात् प्रथमं क्रियायोगे लादिविधौ निमित्तत्वाय कल्पते। [b]) अनपेक्षिते तु पयसि गौरेव प्रधानम्, क्षीरविच्छेदस्तु तस्य मा भूदित्येवमनर्थ्यपि क्षीरेण सम्प्रति गोसंस्कारार्थं दोहे प्रवर्तत इति।

---

[b]) °र्थेन चोद्दे°. A °वादीत्यन्वर्थं. A तथा भिन्नभवमिति सि°. [c]) A तदादौ. A °वाद्यपेक्षाविषयः पयः प्रभृतीति कर्मणिः. A योगात्. A मुख्यकर्म°. A यः स्याद्. A °स्याद् दुह्याद-यस्तमिन्. A °कृतः. कक्ष्या°,

का. ७१. I कथितं कर्म.

(68) [a]) A °भूत क्रि°. I °र्तते. A यदावातान्युदा°. A °तमं स°. A °ज्ञाया. A यतश्च पयः. A तदेवाप्रविशेषं कर्म कथितं कर्म प्र°. A °वादिः। पूर्वं प्रा°. [b]) A विप्रतिषेधे अ°. A संज्ञाभावात्. A °मेतत्। अपा°. BI °भिरस्पृष्टं. A निमित्तभावेन. A स्थितत्वात् भिन्न°. A °क्ष्यत्वेऽकथितयो. A णोरभेदा°. D rep. कर्म ... °संज्ञाकथितं.

कर्मतासिद्धिः। मासमोदनपाकेन व्याप्नोतीत्यत्रार्थः। एतदर्थं चात्र सर्वग्रहणं व्याख्यातम्। कालादिकर्मणा पचत्यादीनां द्विकर्मकत्वेऽपि प्रधाने द्रव्यकर्मणि लादिविधिरुक्तः

प्राधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्।

इति। सत्यपि वास्यादीनां व्याप्तिक्रियान्तर्भावे कट आस्त इत्यादौ कटादेरासनया व्याप्तिर्नास्ति, अपि तु मासादिरेवासनादिक्रियापरिच्छेदायोपादीयमानो व्याप्यत इति तस्यैव कर्मता न तु कटादेरुपश्लिष्टमात्रस्याधिकरणस्येति सर्वं सुस्थम्॥ ६७॥

कथं पुनः कालादिकर्माप्रधानं द्रव्यकर्म तु प्रधानमित्याह।

**आधारत्वमिव प्राप्तास्ते पुनर्द्रव्यकर्मसु।**
**कालादयो भिन्नकक्ष्यं यान्ति कर्मत्वमुत्तरम्॥ ६८॥**

(65) [a]) कर्तृकर्मव्यवधानेनाधारः क्रिया धारयति यथा, एवं मासादिरपीत्याधारच्छायां भजते। तथा हि उदिते जुहोति, रात्रौ भुङ्क्ते इति प्रयोगः। क्रोशं शेते, 'कुरून् स्वपिति' इति च स्फुटमेवाधिकरणत्वमध्वदेशयोः कर्तृधारणात्। मासमोदनं पचतीत्यादौ द्रव्यकर्मविषये च द्रव्यकर्मधारणं स्फुटमेव। व्याप्तिविवक्षायां तु कर्मत्वमाधारभावस्यापगमनादिति इव शब्दः। [b]) यद्वा कर्तृकर्मव्यवधानेन यथाधारः क्रियायोगं भजते तथा द्रव्यकर्मव्यवधानेन कालादीत्युपमार्थः। द्रव्यकर्मणा च पूर्वं क्रियायोगः। तद्द्वारेण तु कालादिकर्मणेति भिन्ना कक्ष्या अवस्थास्य कर्मत्वस्य। तथा हि

शक्तिप्रमाणसंख्यादेर्द्रव्यधर्माद्विशिष्यते।
क्रियासु काल्योगोऽतः प्राग्योगो द्रव्यकर्मणा॥

इत्युक्तम्। कठिनस्य हि पाक्यद्रव्यस्य चिरेण निष्पत्तिः, महापरिमाणस्य बहुसंख्याकस्य च विपरीतस्य त्वचिरेणेति द्रव्यकर्मापेक्षः कालादिविशेषः। [c]) एवं गोदोहं स्वपिति, इषुपातं पचतीत्यत्रापि वाच्यम्। क्रोशमधीते स्वाध्यायम्, कुरून् पञ्चालानधीते इत्यत्राध्ययनप्रचयापचयायत्तावध्वदेशयोर्वृद्धिह्रासाविति विप्रकृष्यते कालादिकर्म क्रियासंबन्धं प्रति द्रव्यकर्मापेक्षया। अत एवोत्तरकालभवमेतेषां कर्मत्वम्। समस्तसाधनसंबन्धे हि वृत्ते क्रियायाः परिच्छेदहेतवः कालादयोऽपेक्ष्यन्ते इति भिन्नकक्ष्यास्ते

'अकथितं च' (P. 1.4.51)

---

(65) [a]) A भजते. DH °क्षते. I has जुहोति after रात्रौ. B has तत्र न instead of कुरून्. A द्रव्यविषये. DH °र्माधार°. A °स्यावगम°. [b]) HO भिन्नकक्ष्या. A शक्तिः प्र°. A °योगात्तु. A °नपाकस्य द्र°. DH नस्य पाकस्य. BO वाक्यस्य. H om. चिरेण ... विपरीतस्य. [c]) BIO have पचति after गोदोहं. A °चयोपपत्ता°. A °दिक्रियासं. A वृत्तेः; I प्रवृत्ते. A °च्छेदकाः; DH °च्छेदवः. I वक्ष्यन्ते.

इत्युत्तरेण योगेन कर्मसंज्ञां लभन्ते, नेप्सिततमत्वेन, ईप्साप्रकर्षाभावात्। [d]) दुह्यादिपरिगणने चाकथितसूत्रे

" कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम् देशश्च। (Vā. on P. 1.4.51)

इत्यत्रैवोक्तम्। गुणप्रधानसन्निधौ च प्रधानमेव कार्येण युज्यत इति द्रव्यकर्मणि लादिविधिः। मासमोदनः पच्यते, पक्वः, पक्तव्यः, सुपचः क्रोशमधीतोऽनुवाक इत्याद्युदाहार्यम्। द्वितीया तु भिन्नशब्दोपादाना कालादिकर्मण्यपि भवति। एको हि लादिर्गुणप्रधानभूतं कर्मद्वयमशक्तोऽभिधातुमिति प्रधाने कार्यसम्प्रत्ययः। भिन्नरूपप्रातिपदिकद्वयात्तु विभक्तिरुत्पद्यमाना कर्मद्वयमपि प्रत्याययति।

यतश्च कालादीनां सर्वधातुविषयं भिन्नकक्ष्यं च कर्मत्वम्,

**अतस्तैः कर्मभिर्धातुर्युक्तोऽद्रव्यैरकर्मकः।**
**लस्य कर्मणि भावे च निमित्तत्वाय कल्पते॥ ६९॥**

(66) [a]) यत्रास्ति द्रव्यकर्म तत्र तदपेक्षया कालादिकर्मणोऽप्राधान्याल्लादिस्तत्र न भवति। यत्र तु द्रव्यकर्म नास्ति तत्र कालादावेव कर्मणि लादिः। लग्रहणस्योपलक्षणार्थत्वाच्च लकृत्यक्तखलर्थाः आस्यते मासः, आसितव्यः, आसितः स्वास इत्यादि। अकर्मकव्यपदेशश्च धातूना द्रव्यकर्माभावनिमित्तः, कालादिकर्मणः सर्वत्र संभवात्, संभवव्यभिचाराभ्यां विशेषणयोगात्, इति कालादिकर्मसंभवेऽप्यकर्मकव्यपदेशस्य द्रव्यकर्माभावनिमित्तस्याव्यावृत्तेर्भावे लकारः सिद्ध्यति, मासमास्यते भवतेत्यादि। मासमासितो देवदत्त इति चाकर्मकत्वात् कर्तरि क्तः। [b]) गत्यादिसूत्रे चाकर्मकत्वाश्रया प्रयोज्यस्य कर्मसंज्ञा सिद्ध्यति मासमासयति देवदत्तमित्यादौ। अत एव तत्र

" अकर्मकग्रहणे कालकर्मणामुपसंख्यानम्" (Vā. on P. 1.4 52)

" सिद्धं तु कालकर्मणामकर्मकवद्वचनात्" (Vā. on P. 1.4.52)

इति वार्त्तिकार्थो न्यायसिद्धः। तथा च भाष्यम्।

" न च केचित् कालभावाध्वभिरकर्मकाः। त एवं विज्ञास्यामः क्वचिद्ये अकर्मका इति। अथवा येन कर्मणा सकर्मकाश्चाकर्मकाश्च भवन्ति तेनाकर्मकाणाम्। न चैतेन कर्मणा कश्चिदप्यकर्मकः। अथ वा यत्कर्म

---

[d]) BO समासमो°. A °मधीयते. A कर्माज्यम°. A प्रधानकार्य°. B प्रत्याय°; I प्रतिपादयति.

का. ६९. B धातुयु°. D कल्पतो.

(66) [a]) I लादिल°. B मासाः. A om. आसितः. A °र्मकत्व व्य°. H °भावनि°. A °समाश्रितो. [b]) B इत्यादिसू°. BI °मित्यादि. H °मित्याह. A एव न च तत्र. A भाष्ये. A om. च after न. O °भि कर्मकाः. A अत एव वि°. A तेन कर्मणा न चैतेन. B न चैतत्. A च न भवति. D om. न च भवति. A ins. कर्मणा after तेन.

अपादानमुत्तराणि ( Vā. on P. 1.4 1 )

' गां दोग्धि ' ( M. Bhā. on the above )

इत्युदाहरणमुपपद्यते विप्रतिषेधेन। अन्यथाकथितकर्मत्वेऽपादानादिसंज्ञा प्राप्त्यभावात् कथं विप्रतिषेधोदाहरणमेतद्भवेत्। अपादानादिविशेषकथाभिरसंस्पृष्टं ह्यकथितं कर्म। तदेवं निमित्तनिमित्तिभावेनावस्थितत्वाद् भिन्नकक्ष्यत्वे कथिताकथितयोः कर्मणोर्भेदादप्राप्ता गवादीनां कर्मसंज्ञा

अकथितं च।

इत्यनेनारभ्यत इति स्थितम् ॥ ७१ ॥

इदानीम्

" नीवह्योर्हरतेश्चापि गत्यर्थानां तथैव च।

द्विकर्मकेषु ग्रहणं द्रष्टव्यमिति निश्चयः।" (M Bhā. on P. 1.4.51)

इति भाष्योक्तं व्याचष्टे।

**दुह्यादिवन्नयत्यादौ कर्मत्वमकथाश्रयम्।**

**आख्यातानुपयोगे तु नियमाच्छेष इष्यते ॥ ७२ ॥**

(69) [a]) अजा नयति ग्रामम्, एधान् वहति नगरम्, हरति भारं संवाहम्। गत्यर्थग्रहणेन गतिबुद्धीत्यादिना येषां द्विकर्मकत्वं ते लक्ष्यन्ते। ' तथैव च इत्यनेनानुक्तसमुच्चयार्थेन जयत्यादयो गृह्यन्ते, जयति शतं शतानीकम्, गर्गान् दण्डयति शतमिति। अत्रेप्साप्रकर्षयुक्तमजादिकर्म कथितं प्रधानं पयोवत्। [b]) ग्रामादि त्ववधिस्थानीयत्वात् गुणकर्म गवादिवदेव नान्तरीयकत्वादकथितकर्मैव द्रष्टव्यम् परिगणनलक्षणेन तु नियमेनाख्यातानुपयोगे कर्मसंज्ञया व्यावर्त्यते। नटस्य शृणोतीत्यादौ नटादिरुपयोगे ह्याख्यानापादानमित्यनुपयोगे विशेषकथानाक्रान्तत्वाद् भवेदकथितकर्मेति परिगणनलक्षणानियमाच्छेषोऽयं षष्ठीविषयः ॥ ७२ ॥

तदेवं प्रधानेतरभावेन कर्मभाव उक्तः। केचित्तु प्रधानमेकमेवेदं कर्मेत्याहुः। तथाहि

**अन्तर्भूतणिजर्थानां दुह्यादीनां णिजन्तवत्।**

**सिद्धं पूर्वेण कर्मत्वं णिजन्तं नियमस्तथा ॥ ७३ ॥**

---

का. ७२. D °न्नायत्या. A °ख्यातमुप°. D इष्यतो.

(69) [a]) A अजा नयति. A सुवाहं. AD om. गतिबुदी ... स्थानीयत्वात्. [b]) ins. गतिवत्तद् before गुणकर्म. A गवादितदेव. A °कर्मैव द्रव्यं परिगणने। न तु नियमेना. A °ज्ञायां व्यावर्तते. A त्यादौ च यदि उ°. A om. ह्याख्यातापादानमित्यनुपयोगे. A °थित कर्मे°. A °क्षणात् निय°. A न मेवेदं क°.

का. ७३. A °जन्तनियमास्तथा.

(70) [a]) अन्तर्भूतो वाच्यतया णिचोऽर्थः प्रयोजकव्यापारः प्रैषलक्षणो येषां दुहियाचिप्रभृतीनां तेषां प्रयोगे गां दोग्धि पय इत्यादौ "कर्तुरीप्सिततमम्" इत्यनेनैव गत्यादीनामपि सिद्धा कर्मसंज्ञा। यथा "गमयति ग्रामं देवदत्तं यज्ञदत्तः" इत्यत्र णिजन्तविषये प्रयोज्यस्य प्रयोजकव्यापारेणाप्यमानत्वादिति [b]) 'गतिबुद्धि' इति च नियमार्थं सूत्रं गम्यादीनामेव ण्यन्तानां प्रयोज्यः कर्म, नान्येषां पच्यादीनामित्यण्यन्तविषयेऽत्र न प्रवर्तते। तथा हि गौः पयः क्षरति, देवदत्तः तां क्षरन्तीं क्षारयति, इति दुहेरर्थः। तत्र क्षरणेनाप्यमानत्वात् पयः कर्म, क्षारणेनाप्यमानत्वाद् गौः। यद्यपि चार्थेन रूपेण पयः प्रधानभूतम्, उपायभूता तु गौः तथाप्याभिधेयकेन क्षरणोपसर्जनस्य क्षारणस्य शब्दार्थत्वाद् गौरेव प्रधानं कर्मेति तत्रैव लादयः, दुह्यते गौः, पयः दोग्धव्या, दुग्धा, सुदोहा, इति। "अप्रधाने दुहादीनाम्" इत्यार्थेन रूपेणाप्राधान्यमुच्यते [c]) यद्यप्यपायविवक्षां विना क्षारणं नोपपद्यते तथापि

"अपादानमुत्तराणि" (Vā. on P. 1.4.1)

इति कर्मसंज्ञैवात्र भवति परत्वात्। यदि ह्यकथितसूत्रेण कर्मसंज्ञात्रोच्येत तदापादानत्वात् कथितत्वेनासौ न स्यात्। पूर्वसूत्रेणैव तु कर्मसंज्ञायामुभयसंभवे परत्वाद् 'अपादानमुत्तराणि, "गां दोग्धि" इत्युक्तम्। तथा चात्रापादानविवक्षावर्णनमसमीचीनम्। [d]) एवं पौरवं गां याचते, दापयतीत्यर्थः। पौरवो गां ददाति, तं प्रयुङ्क्ते याचकः श्रद्धोत्पादनेन इति याचेर्ण्यर्थः प्रैषो वाच्यत्वेनान्तर्भूतः। याचनस्य गौः कर्म, प्रैषस्य तु पौरवः। 'गामवरुणद्धि व्रजम्' इति प्रविशन्तीं प्रवेशयतीत्यर्थः। प्रवेशस्य तु व्रजः कर्म, प्रैषस्य तु गौः। यदा तु स्थापयतीत्यर्थः तदा व्रजस्याधिकरणता, उभयसंज्ञाप्रसङ्गे तु परत्वात् कर्मसंज्ञोक्ता, अधिकरणं कर्म गेहं प्रविशतीति प्रवेशोपसर्जनमत्र स्थानमर्थः गेहं प्रवेशनेन व्याप्य तिष्ठतीति। निमित्तनिमित्तिभावेन प्रवेशस्थाने प्रतीयेते। तत्र प्रवेशापेक्षया कर्म स्थानापेक्षयाधिकरणमित्युभयप्राप्तौ परत्वात्कर्मोदाहृतम्। [e]) माणवकं पन्थानं पृच्छति

---

(70) [a]) A प्रेरणा येषां. A °दुह्यादिष°. A तथा. A °दत्तो यज्ञदत्तं [b]) A °दिति नियमार्थ.. A °षये न प्र°. A तदेव. D om. क्षारयतीति. A ins. क्षरणोपसर्जनस्य क्षरणस्य शब्दार्थत्वात् गौरेव प्रधानं कर्मेति तत्रैव लादयः before क्षरणेनाप्यमा°. A °भूतस्तु गौः. A °व्यभिधायनेन. A om. क्षरणोपसर्जनस्य ... दुह्यते. B दुह्यन्ते. A °मित्यर्थेन. A °धानमुच्य°. [c]) A °क्षया विनाकारेण. DH °क्षायां विना कारणं. A °संज्ञा वात्र. A °सूत्रे कापि संज्ञा नोच्यते. A °दानमुत्तराणीति कर्मसंज्ञैवाकथितत्वात् कथितत्वेनासौ°. A °सूत्रेण तु. A चापादानविभावनेति समी°. [d]) A पौरवा गा°. A °चकश्रद्धो°. A °वाच्यान्तर्भू°. A तत्र दानस्य. A °पस्य पौ°. ADH om. व्रजः कर्म प्रैषस्य (before तु). A °करणत्वादुभय°. A °शनेन व्याप्त एतीति. I प्राप्य ति°. A °शस्थानं प्रतीयते. A om. कर्मस्थानापेक्षया (before अधिकरणं). [e]) A पृच्छाति। माणकप्रयुङ्क्तेतमाख्या°. A आचिख्यापयतीत्यर्थः A एव यो गां दित्सति. A इत्यर्थावगम्यते. A °संज्ञाऽत्र. A °पतर्थेमः. A प्रेषणस्य. A तदानीं कर्म°. A °व्यापारविवक्षया कर्मसंज्ञायात्र बाध्यत इति°.

इति आचष्टे पन्थानं माणवकः, तं प्रयुङ्क्ते आख्यापयतीत्यर्थः। आचिख्यासति वा माणवकः, तं प्रयुङ्क्ते आचिख्यापयिषतीत्यर्थः। एवं पौरवो गां दित्सति, तं प्रयुङ्क्ते याचक इत्यप्यर्थोऽवगम्यते। एवं भिक्षेरप्यर्थो वेदितव्यः। वृक्षमवचिनोति फलानि, मुञ्चति वृक्षः फलानि, तं मोचयतीत्यर्थः। अपायविवक्षायामपि 'अपादानमुत्तराणि' इति कर्मसंज्ञैवात्र। माणवकं धर्मं ब्रूते, प्रतिपादयतीत्यर्थः। तत्र प्रतिपत्तेर्धर्मः कर्म, प्रैषस्य तु माणवकः। 'माणवकमनुशास्ति धर्मम्' इति। शिक्षते धर्मं माणवकः, तं शिक्षयतीत्यर्थः। कर्मणाभिप्रेयमाणस्य तु माणवकस्यात्र संप्रदानसंज्ञा न भवति। ददातिकर्मत्वाभावात् सामान्येन तु भाष्यकारमतेन संप्रदानसंज्ञाया प्रधानव्यापारविषयया कर्मसंज्ञयात्र संप्रदानसंज्ञा बाध्यत इति वक्तव्यम्। [f]) यद्वा कर्तुर्यदीप्सिततमं कर्म तेनाभिप्रेयमाणस्य संप्रदानस्य संप्रदानत्वम्। यथोपाध्यायाय गा ददातीति। गौर्हि दातुर्वल्लभा। तत एव गुणवते दीयते। धर्मस्तु कर्तुर्नाभिमतः, पूर्वमेव सिद्धेः। तेन तु माणवकोऽनुग्रहीतुमभिप्रेत इति प्रयोज्यस्यात्रेप्सिततमं कर्म, न प्रयोजकस्येति न संप्रदानसंज्ञाया विषयोऽयमित्यन्ये। एवं नयत्यादावपि पूर्वसूत्रेणैव कर्मत्वम्। अजा नयति ग्रामम्, प्रापयतीत्यर्थः। प्रापणेन प्रधानेन संबद्धाजा प्रधानं कर्मेति

"प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम्"

(Vā. on P. 1.4.51)

इति न्यायसिद्धम्, अजा नीयते ग्रामम्, नेतव्या नीता, सुनयेति। एवमन्यत्रापि यथायोगमुदाहार्यम्। [g]) सत्यपि चात्र ण्यर्थान्तर्भावे गत्यादिनियमेन प्रयोज्यस्य कर्मसंज्ञा न व्यावर्त्यते सजातीयापेक्षत्वान्नियमस्य, अन्यत्र ण्यन्त एव तेन निवारणात्। अत्र च प्रैषो ण्यर्थो धातुनैव स्वीकृत इति णिच् न भवति ॥ ७३ ॥

[h]) ननु च वास्तवेन रूपेण पयआदेः प्राधान्यात्तस्यैवेप्सिततमत्वं न्याय्यम्, न तु गवादेः प्रतीयमानोपसर्जनभूतक्रियापेक्षमीप्सिततमत्वं युज्यते प्रधानसन्निधाने गुणस्येप्साप्रकर्षविषयत्वाभावात्। न च कारकप्रकरणे

'साधकतमं करणम्' (P. 1.4.42)

इति तमब्ग्रहणात् प्रकर्षो न विवक्ष्यते इति शक्यते तत्र वक्तुम्, 'ईप्सिततमम्' इति साक्षात् प्रकर्षविवक्षार्थं तमप्श्रुतेरुपादानात्। लिङ्गस्य त्वन्यत्र कृतार्थत्वम्। गङ्गायां घोष इत्यादावधिकरणसंज्ञा यथा स्यादिति। श्रुत्या हि लिङ्गबाधा। 'श्रुतिलिङ्ग-

---

[f]) A कर्तुरीप्सि°. A °माणस्य संप्रदानत्वं. AI °स्येति स संप्र°. A °संज्ञविष°. A पूर्वेणैव. A °वन्धादजा. [g]) A °पेक्षत्वनिय°. A अत्र प्रै°. [h]) ननु वा°. A तमप उपा°. B कमश्रुतेरु. D तमस्पृशते. A ins. च before गङ्गायाम्. BIO °विद्धिसक्ता तत्क°.

वाक्यप्रकरणस्थानसमाख्याना पूर्वं पूर्वं बलीयोऽर्थविप्रकर्षादिति न्यायविद्भिरुक्तत्वात् कथं गवादेः पूर्वेण कर्मसंज्ञेत्याशङ्क्याह—

**करणस्य स्वकक्ष्यायां न प्रकर्षाश्रयो यथा ।**
**कर्मणोऽपि स्वकक्ष्यायां न स्यादतिशयस्तथा ॥ ७४ ॥**

(71) [a]) यथा कारकान्तरापेक्षया लब्धातिशयस्य करणसंज्ञाया सजातीयकरणान्तरापेक्षया प्रकर्षो नाश्रीयते, येन सर्वस्यैव करणकार्यं प्रवर्तते, अश्वेन यथा दीपिकया याति, पादाभ्यां यथा व्रजति, बलेन पादेनादत्त इति । अन्यथा अश्वादेरेव प्रकृष्टतमस्य भवेदिति । तथा कर्मणोऽपि । [b]) करणादीनामपि क्रियायामुपयोगादीप्सिततमत्वमिति कारकान्तरापेक्षयासादितेप्साप्रकर्षविषयभावस्य कर्मान्तरापेक्षया तदतिशयो नाश्रीयते इति सिद्धा निमित्तनिमित्तिभावावस्थितस्यापि सर्वस्य कर्मणः पूर्वेणैव योगेन कर्मसंज्ञेति नास्त्यकथितकर्मेत्येकीयमतेनोपन्यासः ॥ ७४ ॥

एतत्तु न युक्तमित्याह ।

**कर्मणस्त्वाप्तुमिष्टत्व आश्रितेऽतिशयो यतः ।**
**आश्रीयते ततोऽत्यन्तं भेदः पूर्वेण कर्मणा ॥ ७५ ॥**

(72) [a]) इह साधनभावस्य सर्वकारकविषयत्वाद् युक्तं यत्कारकान्तरापेक्षया लब्धातिशयसाधनभावं करणं स्वकक्ष्यागतं प्रकर्षं नाद्रियेत । कर्म त्वीप्साप्रकर्षभावं कारकान्तरापेक्षया प्रतिपत्तुमसमर्थम् । न हि कारकान्तराणीप्सितानि । कर्त्रा क्रियया यदाप्तव्यं तदीप्सितम् । कारकान्तराणि तु क्रियायै करणादीन्याप्तव्यानि, न तु क्रियया । [b]) तस्मात्तुल्यजातीयापेक्षत्वादतिशयस्य कर्मण आप्तुमिष्टत्व ईप्सितमित्येवमाप्तुमभिप्रेतत्वे आश्रीयते । तमप उपादानादतिशयो यस्मादङ्गीक्रियते तस्मादीप्सितार्थान्तरापेक्ष एवासौ प्रकर्षोऽभ्युपगन्तव्य इति स्वकक्ष्यागत एव सः । [c])तथा च पयःप्रभृति गवादीप्सितापेक्षया प्रकृष्टमीप्सितं पूर्वयोगस्य विषयो गवादेस्तु पूर्वेणासिद्धायां कर्मसंज्ञायामकथितमित्यनेन सिद्धिरित्येष एव पक्षो न्याय्यः । ततश्चभिन्नकक्ष्यं कर्मद्वयमेव तत् । स्वकक्ष्यापेक्षेऽ-

---

का. ७४. B कारणस्य

(71) [a]) H om. यथा ... °करणान्तरापेक्षया. I °पेक्षाया. A लब्धप्रक°. A °स्यैव कार्यं प्र°. A अनेन यथा दी°. A om. यथा before व्रजति. A स्वादेरेव. [b]) A °तममिति. A °न्तरेऽपक्षयात् अति°. A °भावस्थितस्या°. A सर्वस्यैव. A मास्त्वकथि°. DH °मतो नास्याप°.

का. ७५. A आश्रितो. A °त्यन्तभेदं पू°.

(72) [a]) A °भावकरणं. I नाश्रीयेत. B °कर्षविषयभा°. A °काणामीप्सि°. BO °कारक णिप्सि. [b]) A °मिष्टत्वे ईप्सित इत्येव A °प्रेतत्वं आ°. A °क्ष्याकृत. [c]) A °थित इत्य°. A व्याप्यः. A °द्वयमेतत्.

नाश्रिते तु कर्मणः प्रकर्षे तमपश्रुतिरनर्थिका स्यात्। [d]) तथा चेप्सितमात्रस्य कर्मसंज्ञायां

'वारणार्थानामीप्सितः' (P. 1.4.27)

इत्यत्र यवेभ्यो गां वारयति, कूपादन्धं वारयति, अग्नेर्माणवकं वारयतीत्युदाहरणं न स्यात्। यवादेरपि कर्मसंज्ञाप्रसङ्गात्। ततश्चैतत् सूत्रं निर्विषयं भवेदिति विषयविभागार्थं कर्मापादानयोः स्वकक्ष्यागतः कर्मणोऽतिशयः सिद्धान्तितः। तथा च वार्तिकम्—

"वारणार्थानां कर्मानर्थक्यं कर्तुरीप्सिततमं कर्मेति वचनात्।"

(Vā. on P. 1.4.27)

भाष्यमपि। [e]) यत्तु कथितं पुरस्ताद् ईप्सितयुक्तं च तस्य सिद्धयर्थमीप्सिततमग्रहणम् इति वारणार्थानामित्यनेन कथितमिति 'अकथितं च' इत्यनेनान्धादेरीप्सितेन कूपादिना युक्तस्य कर्मसंज्ञा न सिद्धयतीति 'ईप्सिततमम्' इत्यनेन सिद्धयतीत्यर्थः। यत्पुनरीप्सितमात्रमपादानादिसंज्ञाभिरकथितं तस्याकथितसूत्रेण गवादेः कर्मसंज्ञेति भाष्येऽभिहितम्। ईप्सितमेव तु यत् स्यात् तस्य भविष्यत्यकथितेनेति ॥७५॥

यत् पुनरेतदुक्तं दुह्यादीनां णिजन्तवत् सिद्धं पूर्वेण कर्मत्वमिति तत्राप्याह।

**णिजन्ते च यथा कर्ता सक्रियः सन् प्रयुज्यते।**
**नयत्यादौ तथा कर्ता निष्क्रियोऽपि प्रयुज्यते ॥ ७६ ॥**

(73) [a]) गमयति ग्रामं देवदत्तमित्यादौ णिजन्ते प्रकृतिप्रत्ययवाच्ये द्वे क्रिये भिन्ने प्रतीयेते इति तदपेक्षं द्वयोः कर्मत्वं युज्यते। गां दोग्धि पय इत्यादौ तु प्रकृतिवाच्यैकैव क्रियेति कथं कर्मद्वययोगः। न चाप्यन्तर्भूतणिजर्थत्वेन तदुपपत्तिः। णिजर्थस्यात्रायोगात्। प्रैषो हि णिजर्थः। स च प्रवृत्तक्रियस्य सव्यापारस्य कर्तुरुपपद्यते। तथा हि तस्य स्वतन्त्रस्य प्रयोजको यो हेतुः तद्व्यापारो णिजुक्तः। [b]) अत एवाप्रवृत्तक्रियाणां करणादीनां प्रयोजकस्य स्वतन्त्रस्य कर्तुर्हेतुसंज्ञा न भवति। तदेवं गवादेर्निष्क्रियत्वान्न तद्व्यापारेणाप्यमानत्वात् पयआदेः कर्मता, अपि तु दोहेन देवदत्तव्यापारेणैव गोपयसोर्द्वयोरपि आप्यमानत्वमित्यतिशययोगात् पयआदेरेव पूर्वेण कर्मत्वम्, गवादेस्त्वकथितमित्यनेनारभ्यते ॥ ७६ ॥

---

[d]) B °ततमास्य. O °ततमस्य. A °दाहरणं। तस्मात् गवा°. A °गार्थः. [e]) B यस्तु. A °ततममिति। वारणा°. A °णार्थानामित्यननाथारादे°. A °तमित्यने°. A °दानसंज्ञा°. A °सञ्ज्ञेत्यपि. A °क्त नयत्या°.

का. ७६. A सम्प्रयुज्यते.

(73) [a]) A °जर्थस्यायोगात्. A °रुपलभ्यते. [b]) A °वृत्ति कि°. B तद्द्वारेण. A मानत्व. A कर्मणः. A °शयायोगात्. A °तेनैवार°. B °ड्क्ते नम°.

ननु च यथा गच्छन्तं संप्रयुक्ते गमयतीति प्रयोगः तथा क्षरन्तीं क्षारयति दोग्धि इत्यर्थ इत्याशङ्क्याह ।

**भेदवाक्यं तु यत् ण्यन्ते नीदुहिप्रकृतौ च यत् ।**
**शब्दान्तरत्वान्नैवास्ति संस्पर्शस्तस्य धातुना ॥ ७७ ॥**

(74) [a]) गच्छन्तं प्रयुङ्क्ते इत्यादिना गमयतीत्यादौ ण्यन्ते प्रकृतिप्रत्ययार्थयोर्विभागप्रदर्शनाय यद् वाक्यम्, ग्रामं प्राप्नुवन्तीमजां प्रयुङ्क्ते, क्षरन्तीं गा प्रयुङ्क्ते इत्यादि च नयति दोग्धि इत्यादौ प्रकृतिविषये प्रकृत्यर्थप्रदर्शकं वाक्यं तत्सर्वं गमयतीत्यादेर्ण्यन्तात्, नयति, दोग्धि इत्यादेश्च प्रयोगाच्छब्दान्तरं भिन्नार्थमेव । न ह्येषोऽत्र धात्वर्थः परमार्थतः, अदूरविप्रकर्षेणार्थमात्रकथनमेतत् । यथा राजपुरुषादौ राज्ञः पुरुष इत्यादि। [b]) तथा हि गच्छन्तं प्रयुङ्क्ते इत्यादौ वाक्ये प्रयोज्यकर्तुर्निदर्शनं गमयतीत्यादौ ण्यन्ते प्रयोज्यक्रियामात्रं प्रतीयते । प्रयोज्यस्तु स्वशब्दोपादानो देवदत्तमिति । यत्र चैतद् भेदवाक्यं विदूरं ण्यन्ते तत्र नयत्यादीनां सुतरां विदूरता । न ह्यत्र वाक्यार्थो धातूपादानः कश्चित् । अतस्तस्य वाक्यस्य वाक्यार्थस्य वा दुहादिधातुना नास्ति संबन्धः । तस्मान्नात्र ण्यर्थान्तर्भाव इति क्रियाद्वयाश्रयेणापि कर्मविशेषसमर्थनमसमीचीनम् । तदेवमेकैवेयं विलक्षणा कर्मद्वयविषया क्रियेति

सर्वं चाकथितं कर्म भिन्नकक्ष्यं प्रतीयते ।
धात्वर्थोद्देशभेदेन तन्नेप्सिततमं किल ॥

इत्येष पक्षोऽवस्थापितः । [c]) अप्राधान्येऽपि चाकथितकर्मणोऽन्तरङ्गत्वात् प्रथमं क्रियायोगाल्लादिविधिरुक्तः । नयत्यादौ तु प्राधान्यमजादेरिति तत्रैव लादयः । ण्यन्ते तु ण्यर्थस्य प्राधान्यात्तेनाप्यमानत्वात् कर्तैव प्रधानं कर्मेति तत्रैव लादयः । ततश्च

प्रधानकर्मण्याख्येये लादीनाहुर्द्विकर्मणाम् ।
अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः ॥

इति न्यायसिद्धमिदमुदाहृतम् ॥ ७७ ॥

---

का. ७७. BI °न्तरत्वं नैवा°.

(74) [a]) BI °प्नुवतीम°. A °र्शकवाक्यं. B om. अत्र (before धात्वर्थः). A om. परमार्थतः ।. A आदरवि°; I आदूरवि°. [b]) B °त्यादिवा°. A प्रयोगक°. BI ins. तु (before ण्यन्ते). A °भेदक वा°. A विदूरण्यन्ते. I तस्या वाक्यार्थस्य. BI °हादिना धा°. A ण्यन्तान्तर्भा°. A °र्थनं समी°. A तदेतदेकै°. [c]) A वास्तवेऽन्तरङ्ग°. B °धान्यं ते. A °द्धमुदा°.

इदानीं सिद्धान्तमुद्घाटयति ।

**यथैवैकमपादानं शास्त्रे भेदेन दर्शितम् ।**
**तथैकमेव कर्मापि भेदेन प्रतिपादितम् ॥ ७८ ॥**

(75) [a]) ध्रुवमपाये (P. 1.4.24)

इत्यनेनैव सर्वत्रापादानसंज्ञा भाष्येऽपि प्रतिपादिता । भीत्रार्थादिविषयेऽपि बौद्धापायस्य भावात् । अबुधबोधनार्थं हि

'भीत्रार्थानाम्' (P. 1.4.25)

इत्यादिना भेदेन कथनम् । तथा च वक्ष्यति ।

निर्धारणे विभक्ते यो भीत्रार्थानां च यो विधिः ।
उपात्तापेक्षितापायः सोऽबुधप्रतिपत्तये ॥

इति । एवं कर्मापीप्सिततममेकमेव, कर्तुः क्रिययाप्यमानत्वस्य सर्वत्र भावात् । मन्दबुद्ध्यनुग्रहाय तूत्तरसूत्रप्रपञ्च इति कारिकार्थः । यद्यपि च पयःप्रभृत्यर्थं गवादेरुपादानं तथाप्यस्त्येव धात्वर्थेन तस्याप्यमानत्वम् । तद्यथा तण्डुलानोदनं पचतीति । अत्र तण्डुलानां विक्लित्तिविशिष्टा हि विक्लेदना पचेरर्थः । तत्र विक्लित्त्याख्यगुणद्वारेण तण्डुला अपि कर्म विक्लेदनस्य, साक्षात्त्वोदनम् । तण्डुलान् विक्लेदयन्नोदनं निर्वर्तयतीत्यर्थः । [b]) इत्थं च गुणप्रधानभूतैकधातुवाच्यक्रियाभेदाश्रयेणात्र यथा कर्मभेदः तथा क्षरणोपसर्जनक्षारणार्थतायां दुहेर्गोपयसी सममेव कर्मभावमनुभवतः । तथा च ण्यर्थान्तर्भावोऽपि युक्तः । ण्यन्तेऽपि प्रकृत्यर्थविशिष्टस्य प्रत्ययार्थस्य प्राधान्यान्निष्क्रियत्वं स्वतन्त्रस्य । न ह्यत्र णिच् क्रियते येन

सक्रियस्य प्रयोगस्तु यदा स विषयो णिचः ।

इति न्यायोऽनुवर्ण्येत । धातुवाच्यस्तु ण्यर्थः । तद्यथा साधयतीति ण्यर्थः पचतिवाच्यः, भेदवाक्यं तु भवत्यदूरविप्रकृष्टं भिन्नार्थमत्यन्तविशेषापेक्षया । सामान्यपेक्षया त्वेकार्थमेव राजपुरुषवृत्तिवाक्यवत् । [c]) तथा च प्रतीयत एवैतद्वाक्यार्थोऽत्र प्रयोगे । न चापि गवादीनां निष्क्रियत्वं न्याय्यं क्रियासमवायाभावे कारकत्वाभावात् । आरभ्यमाणेऽप्यकथितयोगे कर्मसंज्ञा न स्यात् । प्राक् प्रयोगान्निष्क्रियत्वमिति चेत् ण्यन्तेऽपि समानमेतत् ।

---

का. ७८. A यथ चैक°.

(75) [a]) BO बोध्यापाय°. BI भेदकथनम्. B °क्षितोऽपायः. A न हि (instead of तत्र). [b]) A सममेककर्म°. A सक्रियप्रयो°. A णिच् इति. B °वाच्य तु. B °कृष्टभि°. DH om. मत्यन्तविशेषापेक्षया त्वेकार्थ°. A om. सामान्यापेक्षया. [c]) A एवैकत्र तद्वाक्या°. A दध्योदनस्येप्सि°. A तमग्रह°. A करकभ्यहितत्वे हि दघ्न°; HD °करभ्यंज्ञानत्वे.

यथा च तत्र संभावितक्रियस्य कर्तुः प्रयोजक इति तद्व्यापारोपपत्तिः तथात्रेति न किंचिदव्यर्थम्। तमब्ग्रहणस्य च प्रत्याख्यानादीप्साप्रकर्षानाश्रयणम्। यत्तु तमब्ग्रहणस्योदाहरणं 'दध्ना भुञ्जीय' इति तत्र समकक्ष्यतया दध्योदनयोरीप्सितत्वे तमब्ग्रहणमकिंचित्करम्। संस्कारकत्वे हि दध्नस्तत्संस्कृतस्यौदनस्यैवेप्सिततमत्वमिति नास्त्येतदुदाहरणम्। [d]) तथा च भाष्यम्।

"तस्याप्योदन एवेप्सितः, न तु गुणेष्वस्यादरः"

(M. Bhā on P. 1 4.49)

इति। यदपि कर्मापादानयोर्विषयविभागप्रदर्शनार्थं तमब्ग्रहणमित्युक्तं तत्रापि वारणार्थानां वारयितव्यानां वारणमर्थयन्त इति वारणयोग्यानां यदीप्सितं तदपादानमित्येवं व्याख्यानाददोषः। तथा हि वारयितव्याः प्रतिषेद्धव्याः गवादयः; तेषामीप्सिता यवादय एवापादानम्। तदेवमीप्सितमेव सर्वं कर्म। इत्थं च दुह्याद्युदाहरणार्थं न परिगणनमेतत्। नटस्य शृणोतीत्यादौ नटादि शृणोतिक्रियाया निमित्तमात्रं न तु तयेप्सितत्वेन विवक्ष्यत इति कर्मसंज्ञाभावः। शृणोतिक्रियायां च सव्यापारो नटः कारकमुपयोगग्रहणादपादानसंज्ञाया व्युदस्यते। न चान्या संज्ञास्य विहितेति शेषोऽयं षष्ठीविषयः। हेतुतृतीयायास्त्वयमविषयः

अनाश्रिते तु व्यापारे निमित्ते हेतुरिष्यते।
द्रव्यादिविषयो हेतुः कारकं नियतक्रियम्॥

इति वचनात्॥ ७८॥

ननु निर्वर्त्यादिभेदः कर्मणोऽभिहित इति कथमेकमेव कर्मेत्याशङ्क्याह।

**निर्वर्त्यो वा विकार्यो वा प्राप्यो वा साधनाश्रयः।**
**क्रियाणामेव साध्यत्वात् सिद्धरूपोऽभिधीयते॥ ७९॥**

(76) [a]) इह साधनाश्रयः शक्त्याधारो निष्पन्नरूपो नामपदैरुच्यते। आख्यातपदैस्तु साध्यस्वभावः क्रियात्मार्थोऽभिधीयत इति क्रियाद्रव्ययोः सिद्धसाध्यस्वभावरूपं लक्षणं शब्दप्रतिपाद्येन तद्रूपेण कथ्यते। यद् भाष्यम्—

---

[d]) The current text of the M. Bhā. is: तस्याप्योदन एवेप्सिततमः। न तु गुणेष्वस्यानुरोधः (See M. Bhā. (a) Nirnaya Sāgara Edition, on P. 1.4.49.). A प्रतिषेधयितव्या. A नटश्च. A om. शृणोतीत्यादौ नटादि. A om. तया (after तु). A °दानसंज्ञया व्यु°. DH °स्त्वयमविशेषः.

(76) [a]) A °श्रयः शक्त्या°. I puts क्रियात्मा (before साध्य°). A °भावरूपं शब्द°. BI °पाद्येन रूपेण. A यद् भाष्ये, क्रिया चेद्यदि भाष्यते. A द्रव्यत्वमिति. BIO °धारमपि लक्षण. A °भेदः स्वतः.

" क्रिया चैव हि भाव्यते, स्वभावसिद्धं द्रव्यम् "

( M. Bhā. on P. 1.3.1 )

इति । तथा च कटं करोति, तण्डुलानोदनं पचति, सूर्यं पश्यति इति नामपदैः कर्म शक्त्याधारमविलक्षणं सिद्धतया प्रत्याय्यत इति नास्ति तस्य स्वरूपभेदः स्वगतः । [b]) क्रियार्थत्वाच्च वस्तुतः साधानानां क्रियाधर्मेण व्यपदेशः । निर्वृत्तिविपरिणतिप्राप्तिलक्षणा हि क्रियाः स्वसामर्थ्यायत्तमुपकारं कर्मणि दर्शयन्त्यो विभिन्नव्यपदेशनिमित्ततामासादयन्ति । एवं च कृत्वा शाब्देन रूपेण सिद्धत्वात् कर्मणः साधनभावोऽप्युपपद्यते । क्रियाविशेषावेशितव्यपदेशभेदानाश्रये तु क्रियाविषयकारकनिमित्ततयेप्सितमित्येव सामान्याख्यया सर्वं कर्म कथ्यत इति सिद्धम् ॥ ७९ ॥

गतमदः । इह कथमीप्सितत्वम्, ' विषं भक्षयति ', ' चोरान् पश्यति ' इत्याशङ्क्याह ।

**अहितेषु यथा लौल्यात् कर्तुरिच्छोपजायते ।**
**विषादिषु भयादिभ्यस्तथैवासौ प्रवर्तते ॥ ८० ॥**

(77) [a]) वाय्वादिधातुवैषम्यनिमित्तेषु यथाऽऽतुरस्य हितमिति भोजननियमासहिष्णोरभिलाषो भवति तथा स्वाम्यादिभयपरिपीडितस्य क्षेत्रियव्याधिदुःखार्तस्य वा परं विषभक्षणमेव ज्याय इति मन्यमानस्य भवति विषं भक्षणेनेप्सितमिति

' तथायुक्तं चानीप्सितम् । ( P. 1.4.50 )

इत्येतदपि कर्म पूर्वेणैव सिद्धम् । तदाह भाष्यकारः ।

" य एष मनुष्यो दुःखार्तो भवति सोऽन्यानि दुःखान्यनुनिशम्य विषभक्षणमेव ज्यायो मन्यते । " ( M. Bhā. on P. 1.4.50 )

इति । '**लौल्यात्**' इति । न प्रेक्षापूर्वकारिताघटिना सर्वत्रेप्सा, अपि तु प्रकारान्तरेणापि सम्भवतीत्यर्थः । [b]) भक्षणक्रियाविषयभावापत्तिरेवात्रेप्सितत्वं तथायुक्तग्रहणादेवावसीयते । सूत्रारंभेऽपि परोपहितं चाविज्ञातविषभावं भक्ष्यमाणमीप्सितमेव । प्रवृत्त्यनुमेया हीप्सा सर्वत्र समानैव । भयादपि च पराशयानुवर्तनार्थं भक्ष्यमाणमीप्सितमेव विषम् । एवं दृशिक्रियया चोरादीप्सितमेव । यदीप्सितादन्यन्नैवेप्सितं नानीप्सितं वृक्षमूलादि

---

[b]) A निवृत्ति°. A स्वग्रामव्यावृत्तमुपकारकं कर्म निदर्श°. A °त्ततामामादयन्ति. A शब्देन. H om. निमित्ततामासादयन्ति ... °वेशितव्यपदेश. BO विश्यीकार°. HI °विषयिकर°.

का. ८०. I कर्तुरीत्सोप°.

(77) [a]) B °भर्थपीडि°. A क्षत्रियस्य व्या°. A वरं. D °कारिता सर्वत्रे. [b]) A °मेया वेप्सा. A चोराः. A om. ईप्सितमेव । यदपि. A °विषयभावतासेव. A तमग्रहणं. A °र्पणमाभिसन्निहित°.

तदपि पूर्वमनभिसंहितमपि तदानीमुपसर्पणवेलायामीप्सितमेव, अन्यथोपसर्पणक्रियविषयभावमेव नोपेयात्। तमवग्रहणं च प्रत्याख्यातमिति श्रमापनोदनार्थं ग्रामगमनेऽप्यन्तरा वृक्षमूलोपसर्पणमपि संहितमिति सिद्ध्यतीप्सितमात्रस्य कर्मसंज्ञा पूर्वेणैव। संज्ञान्तरपूर्वकमपि कर्मेप्सितमित्येव सामान्यलक्षणेन सिद्धम्। [c]) ग्राममधिशेते, नगरमुपतिष्ठति, इत्यादावुपसर्गसंबन्धे सकर्मकत्वाद्धातूना परत्वात् कर्मसंज्ञायामधिकरणं कर्म गेहं प्रविशतीत्युक्तम्। अनुपसर्गत्वेऽधिकरणसंज्ञा भवति। अक्षान् दीव्यति ' इति विजिगीषोपसर्जनपानवचने दीव्यनावीप्सितत्वमक्षाणाम्, क्रीडार्थत्वे तु 'अक्षैर्दीव्यति' इति करणताक्षाणामित्युभयसिद्धौ समावेशार्थं सूत्रम्—

'दिवः कर्म च' (P. 1.4.43)

इति। तदुक्तं वार्तिके

'गतिदिविहेतुमत्सु च ग्रहणम्'

इति। असति समावेशार्थे सूत्रे कर्मसंज्ञाया अवकाशो 'मनसा दीव्यति' इति। मनसादेव इति कर्मण्यण्प्रत्ययः। करणसंज्ञायास्तु देवनोऽक्ष इति करणे ल्युडिति परत्वाद् द्वितीयां बाधित्वा तृतीयैव स्यात्।

'मनसस्तृतीयायाः' (P. 6.3.4)

इत्यलुकि, करणसंज्ञाया अप्यवकाशो मनसादेव इत्येतदेवोदाहरणम्। [d]) सूत्रारंभे तु चकारसहिते संज्ञाद्वयसमावेशान्यथानुपपत्त्या द्वितीयापि सिद्ध्यति। एवं क्रुधद्रुहोरप्यनुपसर्गयोः सम्प्रदानता उपसृष्टयोस्तु परत्वात् कर्मतेत्येवंजातीयमेव कर्म प्रागेव प्रतिपादितमस्माभिः पुनरपि स्मारितम्॥ ८० ॥

गतमेतत्। इदमिदानीं चिन्त्यते। इह कर्मद्वययोगे प्राधान्यमार्थमाश्रित्य प्रधाने लादिरुक्तः। द्वितीया तु प्रातिपदिकद्वयादप्युत्पद्यत इति तत्र गुणप्रधानभूतक्रियाद्वयविषयायामपि कर्मशक्तावेकस्या लादिनोक्तत्वेऽपरशक्त्यभिधानाय द्वितीया कस्मान्नोत्पद्यत इत्याशङ्क्याह।

**प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक्।**
**शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते॥ ८१ ॥**

---

[c]) A °मभिशे°. BIO °संज्ञा अधि°. A °प्सितत्वेनाक्ष॰°. A क्रियार्थत्वे. A om. सूत्रं ... समावेशार्थे सूत्रे. A °ज्ञायाभव°. A °तीत्यादि. DH °कर्मत्वपराप्र°. A करणसंज्ञायां तु. The actual sūtra P. 6.3.4. is "मनसः संज्ञायाम्". A °ज्ञाया अव°. [d]) A द्वितीया तृतीयापि. A प्रधानमर्थ°. A पदिकादिद्व°. A °विषयायामपि शक्तौ एकस्या लादिनोक्तायां पर°.

( 78 ) इहार्थानामेकवाक्योपात्तानां समन्वयो भवति । तत्र द्वयोः प्रधानयोः समत्वान् मिथोऽङ्गाङ्गिभावो नोपपद्यते, नापि द्वयोर्गुणयोः

" गुणानां च परार्थत्वादसंबन्धः समत्वात् स्यात् " ( Mī. Sū. 3.1.12.22 )

इति । गुणप्रधानभावेन तु समन्वयोपपत्तावेकवाक्यता भवतीत्याह—

' प्रधानेतरयोर्यत्र '

इति ॥ ८१ ॥

तत्र प्रधानानुयायित्वाद् गुणानामप्रधानक्रियाविषयकर्मशक्त्यभिधाने द्रव्यस्य गुणक्रियाविषयाप्यभिहितवत् प्रकाश्यत इति प्रधानानुरोधं सामान्येनोक्तं व्याख्यातुमाह ।

**प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते ।**
**यदा गुणे तदा तद्वदनुक्तापि प्रकाशते ॥ ८२ ॥**

( 79 ) प्रधानक्रियावाचिनो धातोरुत्पन्नेन प्रत्ययेन लादिना यदा प्रधानक्रियाविषया कर्मशक्तिः प्रत्याय्यते तदा गुणक्रियाविषयापि साक्षाद् अनुक्तापि तद्वत् प्रकाशते इतीयमनुवृत्तिर्व्याख्याता । अत्रोदाहरणमाह ।

**पचावनुक्तं यत्कर्म क्त्वान्ते भावाभिधायिनि ।**
**भुजौ शक्त्यन्तरेऽप्युक्ते तत्तद्धर्मः प्रकाशते ॥८३ ॥**

( 80 ) [a] ' पक्त्वौदनो भुज्यते ' इत्युदाहरणम् । अत्र क्त्वाप्रत्ययस्य तुमर्थग्रहणानुवृत्त्या भाष्यकारमतेन भावे विधानम् । वार्तिककारो हि

' आ च तुमुनः समानाधिकरणे ' ( Vā. on P. 3.4.26 )

इति पपाठ । यथावकाशं

' शकधृष....' ( P. 3.4.65 )

इत्यादिसूत्रविधीयमानाद् आ तुमुन्प्रत्ययादनुप्रयोगधातुना समानाभिधेया णमुलादयः प्रत्यया वक्तव्या इति वार्तिकार्थः । तेन ' स्वादुंकारं भुज्यते यवागूर्देवदत्तेन इति णमुला कर्माभिधानाद्यवागूशब्दाद् द्वितीया न भवति । देवदत्तशब्दाच्च तृतीया भवति । अन्यथा

( 78 ) A om. तत्र. I °विषयशक्त्यभि°. A गुणस्य क्रियाप्यभि°.

का. ८२. B om. यदा गुणे ... प्रकाशते.

( 79 ) B om. प्रधानक्रिया ... प्रत्यायते. A °विषया साक्षा°. A °तीयमनुक्ति.

का. ८३. DH °वनुक्तो.

( 80 ) [a] A °कारोऽस्त्या च तुमुनः. A °करणा इति यथावकाशं. A स्यादिविधीय°. A णमुलापत्तौ. A दत्ते तृतीया.

कृत्त्वात् कर्तरि णमुलुत्पत्तौ देवदत्तशब्दात्तृतीया न स्यात् । [b]) अनेनैव न्यायेन 'पक्त्वौदनो भुज्यते' इत्यत्रापि क्त्वाप्रत्ययो 'भुज्यते' इत्यनुप्रयोगधातुना समानाभिधेये कर्मण्येवोत्पद्यत इति नास्ति कस्याश्चिदपि शक्तेरनभिधानमिति वार्तिककारमतेनेदमुच्यते । भाष्यकारस्तु 'पक्त्वौदनं गम्यते ग्रामः'' इत्यत्रानेन न्यायेन द्वितीया न स्यादिति वार्तिकं प्रत्याचष्टे । तुमर्थग्रहणानुवृत्त्या णमुलादीनां भावे विधानं मन्यते । तुमर्थो हि भावः । कृत्त्वात्कर्तरि सिद्धे सेक्त्वाप्रभृतीना तुमर्थ इति वचनात् कर्तुरपकर्षः । न चान्यस्तुमुनोऽर्थो निर्दिष्ट इत्यनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे भवन्तीति स्वस्याः प्रकृतेरर्थो भावः सिद्धः । एवं क्त्वान्ते 'पक्त्वा' इत्यस्मिन् भाववाचिनि पचिक्रियाविषयौदनस्य कर्मशक्तिरनुक्ता । [c]) भुजिक्रियाविषयायां कर्मशक्तौ लेनाभिहिताया तथैव तद्धर्मः तस्य प्रधानस्यैव धर्मः प्रत्यायितत्वलक्षणो यस्य **तद्धर्मः प्रकाशते** इति द्वितीया न भवत्योदनात् । 'पक्त्वौदनं भुङ्क्ते इत्यत्र पचिक्रियापेक्षादेव देवदत्तात् कर्तुस्तृतीयाप्यस्मान्न्यायान्न भवति । पक्त्वौदनं गम्यते ग्राम इत्यत्र तु गमिप्रत्ययेनौदनगता कर्मशक्तिर्नाभिहितेति भवति द्वितीया । यद्यपि च साधनैकार्थसमवेताया संख्याया भुज्यत इति विभक्तिरुत्पद्यते तथापि पचिविषयकर्मोपाधिसंख्यानभिधानाद् भवेद् द्वितीयेति न्यायोऽयमुद्धोष्यते । एकत्वादिष्वपि हि विभक्त्यर्थेष्यवश्यं कर्मादयोऽङ्गत्वेनापेक्षणीयाः ॥ ८३ ॥

उदाहरणान्तरमाह ।

**इषेश्च गमिसंस्पर्शाद् ग्रामे यो लो विधीयते ।**
**तत्रेषिणैव निर्भोगः क्रियते गतिकर्मणः ॥ ८४ ॥**

(81) [a]) 'इष्यते ग्रामो गन्तुम्' इत्युदाहरणम् । अत्रेषेरुभे कर्मणी, गमेर्ग्राम एवेति ग्रामस्येषिविषयाया कर्मशक्तावभिहिताया ग्रामविषयापि तद्वत् प्रकाशते । तत्र गमनार्थमेषणम् । तथा च क्रियायां क्रियार्थायामुपपदे तुमुन्निति फलभूतात्र गमिक्रिया प्रधानं नेषिरिति शङ्कायामुदाहरणान्तरमिदम् । आख्यातपदवाच्ये ह्यर्थे निर्वर्त्यत्वात् प्रधानता वर्तते । [b]) पक्त्वा भुज्यत इत्यत्र स्वार्थमपि प्राधान्यमस्ति । पाकस्य भोजनार्थत्वात् । '**गमिसंस्पर्शाद्**' इति । इषेर्द्रव्यान्तरसंबन्धः क्रियान्तरमुखेनैव सर्वदा भवति । तदिह दर्शनादिमुखेन ग्रामे इच्छा, अपि त्वेकवाक्योपात्तगमिद्वारेणेत्यर्थः । **निर्भोगः** चर्वणम्, आख्यानम्, इति यावत् । '**इषिणैव**' इति । इषिप्रत्ययेन लकारेण कर्मणि

---

[b]) A °भिधेय एककर्म°. A °र्तिकं व्याचष्टे. A °धानं गम्यते. A °द्धेत्काम भृ°. A °कर्षो न चान्यस्तुमु°. A °र्थोऽनिर्दि. [c]) B °क्रियाया कर्म°. B °हितायास्तथैव. BI यस्य तत्कर्म. A om. अस्मान्न्यायात्. B om. साधनैकार्थसमवेतायां. A °दयो गत्वा नापेक्षणीया.

का. ८४. DO लोऽभिधीयते.

(81) [a]) A फलभूतावगमः प्रधानं. A °ह्यर्थे नियतत्वात्. [b]) B द्रव्यान्तरसंबन्धः.

विहितेन । तन्त्रेण हि शक्तिद्वयमप्यभिदधाति प्रत्यय इति वाक्यपदीये निर्णीतम् ॥८४॥

मतान्तरेणाप्यत्रोपपत्तिमाह ।

**पक्त्वा भुज्यत इत्यत्र केषांचिन्न व्यपेक्षते ।**
**ओदनं पचतिः सोऽसावनुमानात् प्रतीयते ॥ ८५ ॥**

(82) [a]) केषांचिन्मतेऽत्र वाक्ये पचिक्रियौदनं नापेक्षते । प्रथमान्तस्यौदनस्य पक्त्वेति संबन्धाभावात् । भुज्यते इत्यनेनैव संबन्धो भवत्योदनस्येत्येकैव कर्मशक्तिः, सा चाभिहितेति कैदमुपतिष्ठते प्रधानशक्त्यभिधाने गुणक्रियाशक्तिरभिहितवत् प्रकाशत इति । यदि तर्हि पचिनौदनस्यासंबन्धः पक्त्वान्यत् किंचिदोदनो भुज्यत इत्यर्थः स्यात् । तथा च विवक्षितमोदनपाकस्य भुज्यङ्गत्वं न प्रतीयेतेत्याशङ्कयाह 'सोऽसावनुमानात् प्रतीयते' इति । स इति परामृष्टस्यौदनस्य बुद्ध्या साक्षात्कृतस्यासाविति प्रत्यक्षानुकारेण प्रतिनिर्देशः । साक्षात्पचिसमन्वयायोग्योऽप्योदनः सामर्थ्यात् पचेरपेक्षणीयत्वेन प्रतीयते । [b]) किं सामर्थ्यमिति चेत् एकवाक्यत्वमिति ब्रूमः । श्रुतसंबन्धो ह्यश्रुतसंबन्धपरिकल्पनाल्लघुः । एतच्च सत्येव गुणप्रधानभावे नान्यथेति पूर्वोक्त एव न्यायोऽत्राश्रयणीयः, इति पूर्वोक्तमेव दर्शनं न्याय्यम् । अत एवारुच्यान्यमतत्वेनोपन्यासः किल । भुजिः पाकमपेक्षत इति सन्निहितेनैवाकाङ्क्षा पूरयितव्या । पाकस्य भुज्यपेक्षया पूर्वकालस्येति गुणप्रधानभावोपपत्तावेकवाक्यतोपपत्तिः ॥ ८५ ॥

न केवलं कर्माख्यकारकविषयोऽयं न्यायः, यावत् कारकान्तरेऽपीति व्याप्त्यर्थमुदाहरणान्तरमाह ।

**तत्राभिनिविशौ कर्म यन्तिङन्तेऽभिधीयते ।**
**क्त्वान्तेऽधिकरणत्वेऽपि न तत्रेच्छन्ति सप्तमीम् ॥ ८६ ॥**

(83) 'भुक्त्वा नगरोऽभिनिविश्यते' इत्यत्राभिनिविशश्चेति नगरस्याभिनिविशेराधारस्य कर्मसंज्ञाया तिङन्तेऽभिनिविश्यत इत्यत्र प्रधानभूते विषयेऽभिहिता कर्मशक्तिः । भुक्त्वेति क्त्वान्तविषयेऽधिकरणशक्तिरपि गुणत्वात् स्वकार्यं सप्तमीविभक्तिलक्षणं न प्रयुङ्क्ते । सप्तम्या ह्यत्र प्रधानक्रियाविषया कर्मशक्तिर्न प्रतीयेतेति प्रधानोप-

(82) [a]) DH अत्र वाच्ये. D rep. °शङ्कयाहासोसावनुमानात् प्रतीयते । A °मृष्टस्यौदनबुद्ध्या. A °थयोग्यौदनः. [b]) A सत्येन गुण°. A °र्वोक्तमेव. A om. अरुच्या. 'पूर्वकालतेति' would be better than 'पूर्वकालस्येति', but there is no manuscript authority for it. A कर्मण्यर्थं कारक°.

(83) [a]) A नगरमभिनिविशत. BI क्त्वान्ते. B सप्तमील°. A °म्या चात्र. A प्रतीयत. A न्यायः. A कार्ये उदा°. A °हारविवक्षितस्य. A °त्वमापाद्यते.

रोधो गुणेन कृतः स्यात् । न चैष न्याय्यः । प्रधानानुयायित्वाद् गुणानां प्रधानविरोधिनि स्वकार्ये उदासत एव । प्राधान्यं च सर्वत्र तिङन्तार्थस्य शाब्दव्यवहारविश्रान्तिस्थानस्य वाक्यार्थभूतस्य । अनेनैव न्यायेन नगरेऽभिनिविश्य भुङ्क्ते इत्यत्र भुज्याश्रयेणधिकरणत्वेन नगरस्याभिनिविशिकर्मत्वमपोद्यते ॥ ८६ ॥

[b]) गतमेतत् । इह कथं कर्मत्वं ' गुडं भक्षयति ' इति । गुडो हि निर्वृत्तो भक्षणक्रियागतं न कंचन विशेषमाकाङ्क्षति न तयेप्सितम् । अपि तु भक्षणक्रियाया आश्रयविशेषप्रदर्शनार्थमुपादीयत इति क्रियार्थमेतद् द्रव्यं न तु द्रव्यसंस्कारार्था क्रिया, दन्तावचूर्णनादि न भक्षणक्रियाफलम्, अपि त्वन्नादनादिरूपाभ्यवहारलक्षणस्य भक्षणस्य । प्रीतिस्तृप्तिलक्षणा फलमिति नास्ति क्रियांकृतोऽत्र कश्चनोत्पत्त्यादिविशेषः । तदुक्तं वार्तिके ।

" ईप्सितस्य कर्मसंज्ञायां निर्वृत्तस्य कारकत्वे कर्मसंज्ञाप्रसङ्गः, क्रियेप्सितत्वात् "
( Vā. on P. 1.4.49 )

इति । [c]) निर्वृत्तस्य इति निर्वर्त्यकर्मतां प्रतिक्षिपति । उपलक्षणं चैतत् । विकाराद्यभावात् कर्मान्तरतापि नास्ति । निराकाङ्क्षस्य वेत्यर्थः । ' कारकत्वे ' इति क्रियासिद्धौ निमित्तभावमाह । भक्षणक्रियानिष्पत्त्यर्थं गुडस्योपादानात् । अत एव भक्षणाय गुड इति क्रियैव सन्दर्शनादिभिराप्यमानत्वादीप्सिता कर्म, न तु द्रव्यम् । भक्षणमात्रं हि गुडस्येप्सितं न तु भक्षणप्रत्याख्यानेनान्यस्तत्कृतो विशेषः । अत्र वार्तिके परिहार उक्तः ।

' न वोभयेप्सितत्वात् ' ( Vā. on P. 1.4.49 )

इति ॥ ८६ ॥

तत्र कथं गुडादेरीप्सितत्वमित्येतद् व्याख्यातुमाह ।

**यन्निर्वृत्ताश्रयं कर्म प्राप्तेरप्रचितं पुनः ।**
**भक्ष्यादिविषयापत्त्या भिद्यमानं तदीप्सितम् ॥ ८७ ॥**

( 84 ) [a]) निर्वृत्तो निष्पन्नोऽत एव निराकाङ्क्षः आश्रयो गुडादि द्रव्यं यस्य

---

[b]) A °डोऽभिनिर्वृत्तः. DH गुडोऽभिनिविश्य भुङ्क्ते वृतो भक्षण°. A °ङ्क्षतिति तथेप्सितम्. A °शेषदर्शना°. A om. द्रव्य न तु ( after एतत् ). A °नादिना लक्षणक्रियाकलत्व अपि त्वन्नादिना रूपात् । एवं भावलक्षणस्य भ°. A एतदुक्तं. A °प्रसङ्गात्. [c]) A om. इति ( after निर्वृत्तस्य ). A चेत्यर्थः A कारक च. I निमित्ताभा°. A लक्षणक्रिया°. A क्रियासन्दर्श°. A °प्सितं कर्म. A °र्तिकपरि°.

( 84 ) [a]) A निवृत्तो. A °कारक्षितामनां का°. BIO प्रचयोपच°. A °तेनाप्य यु°. H °तेनार्थ मु°. A °मता व्यु°. I °कार्थो गृ°. B °तीयार्थेनो°. A °पर्यीभावा°. A विशेष्यमा°. BI स्यात् ( instead of भवेत् ).

तदेवं चतुर्भिः प्रकारैरकर्मकव्यपदेशाः शास्त्रे भवन्ति। एवमन्येऽपि प्रकाराः संभवन्तीत्याह।

**भेदा य एते चत्वारः सामान्येन प्रदर्शिताः।**
**ते निमित्तादिभेदेन भिद्यन्ते बहुधा पुनः॥ ८९॥**

(86) [a]) य एते सकर्मकाणामपि धातूनामकर्मकत्वनिबन्धनभूता भेदाश्चत्वारोऽभिहितास्ते निमित्तादिभेदेनानेकप्रकारा जायन्ते। निमित्तं सहाय उपसर्गादिः। आदिशब्दाद्देशकालादयः। तद्यथा चरतिः देशान्तरगमनवचनः सकर्मकोऽप्यूर्ध्वप्रवृत्तिलक्षणेऽर्थान्तरे प्रयुक्तोऽकमको निमित्तस्य शब्दान्तरप्रयोगस्य सामर्थ्याद्भवति। 'बाष्प उच्चरति', 'धूम उच्चरति' इति। उच्छब्दवशाद्धातुरयमूर्ध्वप्रवृत्तावकर्मकः। आदिग्रहणात् क्वचिदात्मनेपदप्रयोगादकर्मकत्वाभिव्यक्तिः 'उत्तपते' 'वितपते' इति। 'भासते' इत्यर्थः। 'यावद्भुक्तमुपतिष्ठते', भोजनकालं यावदुदीक्षते इत्यर्थः।

'अकर्मकाच्च' (P. 1.3.26)

इत्यात्मनेपदम्। 'सर्पिषो जानीते', 'मधुनो जानीते', इति। तेनोपायेन प्रवर्तन इति ज्ञानपूर्विकायां प्रवृत्तावत्र धातुर्वर्तते।

'अपह्नवे ज्ञः' (P. 1.3.44)

इत्यनुवृत्तौ

'अकर्मकाच्च' (P. 1.3.45)

इत्यात्मनेपदम् [b]) वाक्यसामर्थ्यात् क्वचिदकर्मकत्वाभिव्यक्तिः। तद्यथा 'नदी वहति' इति। नदीलक्षणकर्तृविशेषसामर्थ्यात् स्यन्दनवचनतायामकर्मकत्वम्। एवं 'वायुर्वहति' इति। तथा कर्मकर्तृविषये कर्मणः कर्तृत्वप्रतीतिवशादेकदेशवचनतायां धातोरकर्मकत्वं 'पच्यते ओदनः स्वयमेव' इति। एवं च कृत्वाकर्मकव्यपदेशनिमित्तं शास्त्रमत्र विषये प्रवर्तते

'मुचोऽकर्मकस्य गुणो वा' (P. 7.4.57)

इति। 'मोक्ष्यते वत्सः स्वयमेव' इति। एवमर्थान्तरे वृत्तिर्धातोरकर्मकत्वनिबन्धनं निमित्तादिभेदेन भिद्यते। धात्वर्थेनोपसंग्रहेऽपि निमित्तादिभेदेन भेदः। तद्यथा—क्वचित् क्रिया स्वरूपसामर्थ्यलक्षणान्निमित्तात् तिरोहितभेदत्वे कर्मणोऽन्तर्भावेऽकर्मकव्यपदेशो

(86) [a]) A एतेकर्मण्यपिधा°. A °त्वासे विहिताः. A शब्देन सालादयः. A सकर्मक उद्रोर्ध्वगतिवृत्ति°. A प्रवृत्तो. A om. वितपते. [b]) D om. विशेषसामर्थ्यात् ... विषयेकर्मणः कर्तृत्वं °विषयकर्मणः. A °लक्षणानिमित्ताति°. A °भेदत्वेन क°. A °न्वाख्यानि°.

जीवत्यादौ । क्वचिदन्वाख्यानव्यवस्थया निर्धार्यमाणरूपभेदस्याप्यन्तर्भावः । तद्यथा पुत्रीयतौ पुत्रकर्मणः । परमार्थतोऽत्र पुत्रलक्षणं कर्म क्रियाशरीरानुप्रविष्टं भेदेनासत्येन प्रक्रियायामन्वाख्याननिमित्तमाश्रीयते [c]) तथा च वक्ष्यति

पुत्रीयतौ न पुत्रोऽस्ति विशेषेच्छा तु तादृशी ।
विनैव पुत्रानुगमाद्या पुत्रे व्यवतिष्ठते ॥

इति । आचारक्यचि त्वत्रोपमानकर्मान्तर्भूतमुपमेयकर्मणा तु सकर्मकत्वम् । 'पुत्रीयति छात्रम्' इति । 'मुण्डयति माणवकम्' इति तु सामान्यकर्मान्तर्भूतं विशेषकर्मणा तु सकर्मकत्वम् । एवं 'मिश्रयति तिलान्' इत्यादौ । बाष्पायते, ऊष्मायते, रोमन्थायते इत्यादौ विशेषकर्मण एव निर्धारितरूपस्यान्तर्भावः । पचेः पार्थिवं भिदेश्च सावयवं कर्म प्रसिद्धम्, न त्वन्तर्भूतम् । तस्य स्वशब्देनापि वचनात्, पचति पाक्यम्, 'भिनत्ति भेद्यम्' इति । अन्तर्भावे तु स्वशब्देन निर्देशो न स्यात् । न हि भवति 'जीवति प्राणान्' इति । 'जलं वर्षति' इति तु भवति । अन्तर्भावाच्च कर्मणो 'नमस्यति देवान्' इत्यत्र नमःशब्दयोगे चतुर्थी न भवति । [d]) तथा च वार्तिके

'नमसः क्यचि द्वितीयानुपपत्तिः' ( Vā. on P. 3.1 19 )

इति चोदयित्वा

'प्रकृत्यन्तरत्वात् सिद्धम्' ( Vā. on P. 3.1.19 )

इति परिहृतम् । अनेनैवाशयेन धात्वन्तरमेव नमस्यतिशब्दः पूजार्थो न संभवत्येवात्र नमःशब्दोऽवयवकल्पनाद्वारेण त्वेवं व्युत्पाद्यत इत्यर्थः । भाष्यकारस्त्वन्वाख्यानवेलायां नमसः प्रकृतित्वेन परिग्रहात् संभवं मन्यमानः पुनश्चोदयति ।

'ननु नमस्यतिशब्दे नमः शब्दोऽस्ति, तेन योगे चतुर्थी प्राप्नोति'
( M. Bhā. on Vā. above )

इति । परिहरति च

'अर्थवतो नमःशब्दस्य ग्रहणम्, न च नमस्यतिशब्दे नमःशब्दोऽर्थवान्'
( M. Bhā on Vā. bove )

इति । सुब्धातुवृत्तिरियम् । अत्र चोपसर्जनार्थः प्रत्ययार्थे गुणीभूत इति नमो देवेभ्य इत्यत्र प्रधानभूतनमःशब्दयोगे सावकाशत्वादत्र चतुर्थी न भवतीति भाष्यार्थः ।

---

c) A om. तादृशी ... पुत्रीयति छात्रमिति । A °गमादपुत्रे. A क्वचित् पुत्रोपमा न कर्मा°; A उपकार्थकर्मणा. B सामान्यकर्मणान्त°. A धूमायते ( instead of ऊष्मायते ). A न च भवति.
d) A वार्तिकान्तररीत्या चोदयित्वा. A °शब्दो यावत्कल्पना°. A °द्वारेणेत्येवं, A °कारस्त्वन्वा°, A °हरति वार्थवतो°. A श्रुत्यानुवृत्तिरिय. A °त्वात् चतु°.

कर्मणः कर्मशक्तेरिति निर्वर्त्यकर्मताव्युदासः। विकारानाकाङ्क्षणाच्च विकार्यतापि व्युदस्ता। 'प्राप्तेरप्रचितम्' इति। प्राप्तेर्भक्षणक्रियासंबन्धाद्योऽपि प्रचयापचययोर्विशेषस्तेनाप्रयुक्तमप्रचितमिति प्राप्यकर्मतापि व्युदस्ता पूर्वपक्षे। आद्येन हि कारिकार्धेन पूर्वपक्षवार्तिकार्थः संगृहीतः। द्वितीयेनार्धेनोत्तरवार्तिकव्याख्यानम्। भक्षिभुज्यादिक्रियाविषयभावापत्त्या भिद्यमानं विशिष्यमाणं गुडादीप्सितं प्राप्यमेतत् कर्मेत्यर्थः। तथा हि, न भक्षणादिक्रियैवात्रेप्सिता। एवं हि लोष्टमपि भक्षयित्वा कृती भवेत्। b) नापि गुडः क्रियान्तराश्रयत्वेनेप्सितः, अपि तु भक्षणाश्रयत्वेनेत्युभयमाश्रयाश्रयिभावेन समुदितमीप्सितम्। यस्य हि गुडभक्षणमीप्सितं तस्य गुडोऽपीप्सितः। भक्षणक्रियासंबन्ध एव चात्र क्रियाकृतो विशेषः प्राप्यकर्मताया विशेषान्तरस्यानाकांक्षणात्। अन्यथा निर्वर्त्यविकार्याभ्यां को विशेषः स्यात्। भक्षणस्य प्रीत्यतिशयोऽत्र फलम्। स च गुडस्य तत्संबन्धे सति घटत इत्ययमेव विशेषः। क्रियाकृतः स्वानुरूपफलप्रसवयोग्यता हि संस्कारः। ननु च तृप्तिलक्षणाया प्रीतौ गुडोऽङ्गमिति कथं प्रधानकारकरूपं कर्मत्वमस्याः। उच्यते। तृप्त्यङ्गतायां गुडस्यायमितिकर्तव्यताविशेषो यद्भक्षिक्रियाविषयीकरणे तां प्रति प्राधान्यम्, नान्यथा तृप्तिः सम्पादयितुं शक्या। तदस्य तृप्त्यङ्गभावेऽयं प्राथमकल्पिको व्यापारः। तद्यथा गुरुः सेव्यमानो धर्मोत्पत्तावङ्गतामेति, तच्चास्य परिचरणक्रियाविषयभावगमनमन्तरेण न घटनामेतीति गुरुं शुश्रूषत इति प्राधान्योपपत्तिः। c) तदेवमत्र पूर्वपक्षे द्रव्येप्सापह्नवेन क्रियामात्रस्येप्सा दर्शिता। अतस्तदानुगुण्येन परिहारे द्रव्यस्यापीप्सा प्रदर्शिता। यदि तर्हि क्रियाविषयभावमात्रगमनेन कर्मतासिद्धिः तथा सति सर्वत्र क्रियामात्रेऽपि सकर्मकता स्यात्। ततश्चाकर्मकव्यपदेशाः शास्त्रे विरुध्येरन्। न च विरुध्यन्ते। न ह्यवश्यं क्रियामात्रे बाह्यविषयसंभवः। काचिद्धि क्रिया कर्तर्येव विश्राम्यति। न तु बाह्यभावमपेक्षते। तद्यथा आस्ते, शेते इत्यादि। द्व्यर्थः पचिरिति वचनात् सर्वधातुविषयेऽपि भावनालक्षणे व्यापारे धात्वर्थ एवात्र भावनापर्यवसानात् स एव भाव्यः। 'आसनं करोति' शयनं करोति इति। अत एवात्र बाह्यभावविषयः प्रश्नो नास्ति किमिति। d) यत्र बाह्यभावनिष्ठा भावना तत्र तेन बाह्येन भाव्येन कर्मणा सकर्मकत्वम्। तत्र च किमित्यनुयुज्यते। पचति किमोदन-

---

b) A °न्तरत्वेनेप्सि°. A °व्ययभावमाश्र°. A प्राप्यकर्मणो. A °न्तरस्यानपेक्षणात्. A °याकृतस्वानुरूपफलप्रभवयो°. A प्राप्तौ. A गुडोऽयमिति. A तृप्तौ जाताया गुड°. A गुडस्थासत्य इति°. B प्रथमकल्पितो. c) A °प्सराहित्येन. A om. अतस्तदानुगुण्येन परिहारे द्रव्यस्यपीप्सा प्रदर्शिता. A एकत्र भाव°. d) A बाह्यजानिष्ठा; DH बाह्यतानि°; A om. व्यभिचरतीति तदपेक्षोऽयं विभागः। अतश्च शुद्धाया भावनाया धात्वर्थः कर्म, धात्वर्थाविशिष्टाया तु बाह्यं कर्म. A om. पचति पाकेनौदनं A °हारसंज्ञा. B बाह्यसद्भावे.

मित्यादि । धात्वर्थस्य हि सर्वत्राव्यभिचाराद् भाव्यत्वेऽपि न तेन सकर्मकाकर्मकविभागः शक्यक्रियः [ कालादिकर्मणेव वाह्यं तु कर्म व्यभिचरतीति तदपेक्षोऽयं विभागः । अतश्च शुद्धाया भावनाया धात्वर्थः कर्म, धात्वर्थविशिष्टायां तु वाह्यं कर्म । अत एव वाह्यनिष्ठायां भावनायां धात्वर्थः करणमिति न्यायविदः । तेनौदनं पचति, पाकेनौदनं भावयतीति वाक्यार्थः । यद्यपीह दर्शने भावना धात्वर्थ एव तथापि फलपर्यन्तासौ कर्तृव्यापाररूपा दीर्घतरावयवक्रियामात्रात् पृथग्व्यवहारसहा । एवं सर्वत्र योज्यम् ॥८७॥

क्वचित् पुनर्वस्तुनो वाह्यकर्मसद्भावेऽप्यकर्मकव्यपदेशो भवतीत्याह ।

**धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् ।**
**प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥ ८८ ॥**

(85) [a]) प्रसिद्धादर्थादन्यत्रार्थे यदा धातुर्वर्तते तदा तत्रास्य कर्मसमन्वयरहित-क्रिया वाच्या प्रतीयते । तद्यथा वहतिर्देशान्तरप्रापणवचनः सकर्मकः प्रसिद्धो भारं वहतीति । स यदा नदी वहतीत्यत्र स्यन्दनक्रियामभिधायी तदा स्यन्दनस्य जलस्रुति-रूपस्य नद्यात्मभूतत्वात् किमित्यनुयोगाभावादकर्मक इति धात्वर्थमात्रापेक्षयेयं भावना वहति स्यन्दनं करोतीति । यदापि धात्वर्थक्रियायां कर्मान्तर्भवति तदाप्यकर्मकत्वम् । तद्यथा 'जीवति' इति । 'प्राणान् धारयति' इति ह्यत्र धात्वर्थ इति प्राणलक्षणस्य कर्मणोऽन्तर्भावः [b]) एवं 'म्रियते' 'प्राणान् जहाति' इति । तथा 'अस्ति' 'आत्मानं बिभर्ति' इति । यत्राव्यभिचारेण प्रतिनियतस्य कर्मणः प्रतीतिस्तत्राप्यकर्मिका क्रियेति व्यवहारः । तद्यथा 'वर्षति' इति । अत्र हि यथा वर्षणक्रियायामव्यभिचाराद्देवः कर्ता प्रतीयते तथा कर्मापि जललक्षणमिति प्रसिद्धेरकर्मकत्वाश्रयः कर्तरि क्त उदाहृतः 'वृष्टो देवः' इति । यत्त्वप्रसिद्धं कर्म तेन सकर्मकत्वमेवास्याः क्रियायाः, 'रुधिरं वर्षति' 'शरान् वर्षति' इति । 'पांसवो वृष्टाः' इति कर्मणि क्तः । [c]) विद्यमानोऽपि वा यत्र कर्म-संबन्धः क्रियामात्रप्रतिपादनतात्पर्यान्न विवक्ष्यते तत्राप्यकर्मकत्वं संभवति । तद्यथा नेह पच्यते, नेह भुज्यते इति । क्रियाप्रतिषेधतात्पर्याद्भावे लकारः । दीक्षितो न ददाति, न पचति, न जुहोति इति कर्मणोऽविवक्षा । अत्र किमिति नापेक्ष्यते । क्रियाप्रतिषेधता-त्पर्यात् ॥ ८८ ॥

---

(85) [a]) A तदास्य कर्म°. BHO °न्तरप्रास्तिव°. A °क्रियामभिश्वत्ते. H °जलश्रुतिरू°. A °भात्रोपक्षयेऽयं भा°. A om. इति (before प्राणान्). A ह्यत्रार्थ. A प्राणलक्षस्य. [b]) A °प्यकर्मका. DH कर्मणि क्त. A पंतीति लाजान् वर्षति. A उपलो वृ°. [c]) B तत्रान्यकर्मकत्वं. BI भवति. H om. लकारः ... तात्पर्यात.

[e]) प्रसिद्धेरपि यत्राकर्मकत्वं तत्राप्यवान्तरो भेदो देशकालवशाज्जायते । तद्यथा दक्षिणापथे पूर्वाह्णे 'पच्यताम्' इत्युक्ते यवागूकर्मकः पाकोऽवगम्यते । अपराह्णे पुनरोदनसाधनः । मांसभूयिष्ठे तु देशे मांससाधनः पाकः प्रसिद्धः । क्रियास्वरूपसामर्थ्यात् क्वचित् प्रसिद्धं नियतं कर्म, 'वर्षति' इति जलं प्रतीयते । कर्तृसामर्थ्यादपि कर्म प्रसिद्धम्, यथा 'दुर्जनः करोति' इत्युक्ते उपघातलक्षणं कर्म गम्यते । सुजनः करोति' इति तदुपकारोऽवगम्यते । गोष्ठीभेदेन देशभेदेन चापरिमिता प्रसिद्धिरनुगन्तव्या, कियदुदाह्रियते । अविवक्षापि क्वचित् सादृश्यमात्रप्रतिपादनपरतया वाक्यस्य कर्मणो दृश्यते । तद्यथा "अनुवदते कठः कलापस्य" इत्यत्र कठकलापयोर्भाषणसादृश्यं प्रतिपाद्यमिति कर्म न विवक्षितम् । तथा कर्मशक्तिविशेषप्रतिपादने 'देवदत्तः किं करोति' इति प्रश्ने 'पचति' 'ब्रवीति' इति कर्मसंबन्धो न विवक्ष्यते । क्रियाप्रबन्धाव्युपरमप्रतिपादनेऽपि न विवक्ष्यते कर्म 'पचत्येव ददात्येव' इति यथायोगमनुसरणीयं प्रयोगजातमिदम् ।। ८९ ।।

इति भूतिराजतनयहेलाराजकृतौ प्रकीर्णप्रकाशे कर्माधिकारः ॥

---

[f]) इह स्वादिविधिवाक्ये यथाऽऽनुपूर्व्या विभक्तिप्रत्ययाः सन्निविष्टास्तदनुसारेण तदर्थानां कारकाणां विचारः । तत्र द्वितीयार्थे कर्मणि विचारिते तृतीयार्थः करणं पूर्वं विचार्यते । कर्ता तु षष्ठ्या अप्यर्थ इति साधारणत्वान्न्यूनत्वेन पश्चाद्विचारयिष्यते । तत्र क्रियासंसिद्धौ सामग्र्याः साधनत्वात् कोऽतिशयः करणस्य येन तत् साधकतमं स्यादिदित्याशङ्क्य लक्षणमाह ।

**क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम् ।**
**विवक्ष्यते यदा तत्र करणत्वं तदा स्मृतम् ॥ ९० ॥**

(87) [a]) सन्निपत्योपकारिषु सर्वेष्वपि साधनेषु यद्व्यापारानन्तरभाविनी क्रिया लक्ष्यते तदवाप्तातिशयं साधकतमं करणम् । तद्यथा छेदने दात्रमनुप्रविश्य छेद्यमवयवविभागं साधयत् प्रकृष्टोपकारतामासादयत्यधिकरणादिकारकान्तरेभ्यः । एवं दर्शने चक्षुः प्रणिधीयमानम् इत्याद्युदाहर्तव्यम् । [b]) साधनव्यवहारस्य च बुद्ध्यवस्थासमाश्रयत्वाद् '**विवक्ष्यते**' इत्याह । विवक्षोपारूढ एव ह्यर्थो व्याकरणेऽङ्गम्, न बाह्यवस्तुसत्तेत्यर्थः । तथा च बलेन लुनाति, 'आलोकेन पश्यति' इत्यादावनादृत्य दात्रादिकं

---

[e]) A °सिद्धानियतं. A वर्षति जल प्र°. A °न्तव्या यदुद°. I कठकालापक°. A कर्मविशेष प्र°. [f]) I om. कारकाणां. B सूत्रे ( for तत्र ). A °रणत्वात्। न त्वेतस्य स्व निरूपयिष्यते.

का. ९०. H om. यदा ... स्मृतम्.

(87) [a]) H om. सन्निपत्यो° ... लक्ष्यते. A तदेव सातिशयं. A °विश्यं छेद्यावयववि. A प्रकृष्टामुप°. [b]) A °हारस्य च बाह्यवस्तुसमाश्र°. A °रूढा एव ह्यपेता व्या°. A °स्तुसत्ये इत्य°. A बलेन आलोकेन.

बलादि साधकतमत्वेन विवक्षितं करणम्। तत्र साधनान्तराणां वास्तवेऽप्याधारादिभावे बुद्ध्यान्यथात्वम्, यथा स्थाल्या पच्यत इत्यादौ। करणस्य तु रूपमेव विवक्षाधीनमिति

'साधनव्यवहारश्च बुद्ध्यवस्थानिबन्धनः'

इत्युक्तेऽपि 'विवक्ष्यते' इति पुनरुक्तम् ॥ ९० ॥

एतदेवाह।

**वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम्।**
**स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः ॥ ९१ ॥**

(88) [a]) इदमेव नियतजातीयं वस्तु करणमित्येवं निरूपयितुं न शक्यते। यस्मान्न वस्तु व्यवस्थितं करणतया नियतमस्ति। प्रज्ञाताधिकरणभावा अपि हि स्थाली तनुतरकपालत्वाच्छीघ्रतरपाककार्यसाधनतयाऽनुभवत्येव वैवक्षिकं करणभावम्। [b]) तथा हि प्रयोगः करणतृतीयान्तः 'स्थाल्या पच्यते' इति लोके प्रसिद्धः। आर्द्रेन्धनापेक्षया हि सुसन्निवेशा स्थाली क्रियासिद्धौ प्रत्यासीदति ॥ ९१ ॥

यतश्च क्रियासिद्धौ प्रकृष्टोपकारकं करणमतस्तत्र कर्तृणां संरभ इत्याह।

**करणेषु तु संस्कारमारभन्ते पुनः पुनः।**
**विनियोगविशेषांश्च प्रधानस्य प्रसिद्धये ॥ ९२ ॥**

(89) प्रधानस्य क्रियालक्षणस्यार्थस्य प्रसिद्धये प्रकृष्टोपकारकस्य करणस्यैव फलार्थिनः संस्कारमुत्तेजनादिकमसकृद्व्यापारणं चारभन्ते। उपायद्वारेणोपेये प्रवृत्तेः। तत्र काष्ठानामुपधानं संस्कारः। पुनः पुनश्चोपस्थापनं विनियोगः। दात्रस्य तीक्ष्णताधानं संस्कारः। उद्यमननिपातने विनियोगः। चक्षुषोऽञ्जनादिः संस्कारः, प्रणिधानं विनियोगः, इत्याद्यन्यत्रापि यथायोगं वक्तव्यम् ॥ ९२ ॥

इह कथमुपकारप्रकर्षः "अश्वेन पथा दीपिकया याति" इति बहूनामेककालं विवक्ष्यत इत्याह।

**स्वकक्ष्यासु प्रकर्षश्च करणानां न विद्यते।**
**आश्रितातिशयत्वं तु परतस्तत्र लक्षणम् ॥ ९३ ॥**

---

(88)[a]) A °तीय उक्त क°. A तयाभीष्टतममस्ति. I °तर पाककार्य°. B वैवक्षितं. [b]) A °यान्तस्याल्या°. B °प्रसिद्धौ.

का. ९२. A °विशेषाश्च.

(89) A °पारेण चार°. A प्रवृत्तेऽत्र. IO °पधमानं. A °श्चोपपस्थानं. A °निपतने. A दीपकादिकैः यातीति। बहुना मेकःकरणं वि°.

का. ९३. I अतीतातिशय°. D लक्षणे.

(90) [a]) स्वस्यां कक्ष्यायां करणभावावस्थायां सजातीयापेक्षः प्रकर्षोऽत्र तमप्प्रत्ययवाच्यो नाश्रीयते, अपि तु साधनसामान्यस्यानुगतस्य कारकान्तरापेक्ष एव प्रकर्षस्तमप्प्रत्ययवाच्यः करणत्वमावेदयते। साधकशब्दाद्धि कारकसामान्यवाचिनस्तमब्रुत्पन्नस्त त एव प्रकर्षं गमयति। [b]) परत इति साधनान्तरात्। एवं करणजात्यपेक्षस्यातिशयस्यानाश्रयणादश्वादीनां सर्वेषामपि साधनान्तरापेक्षया प्रतिलब्धप्रकर्षाणां करणत्वमविरुद्धम्। तथा ह्यश्वो देशान्तरप्राप्तौ कर्त्राद्यपेक्षया प्रकृष्टोपकारकः। पन्था अपि साधुश्चोराद्युपद्रवरहितः। दीपिका अपि तमःसंहतिमालोकेन निर्भर्त्सयन्ती प्रतिपद्यते साधनान्तरेभ्योऽतिशयम्॥ ९३॥

ननु कर्तृविनियोगोत्तरकालं साधनानां प्रवृत्तेस्तदपेक्षया कर्तुरेव साधकमतत्वं न्याय्यमित्याशङ्क्याह।

**स्वातन्त्र्येऽपि प्रयोक्तार आरादेवोपकुर्वते।**
**करणेन हि सर्वेषां व्यापारो व्यवधीयते॥ ९४॥**

(91) यद्व्यापारानन्तरं क्रियानिष्पत्तिस्तत्करणमित्युक्ते कर्तुः करणत्वाप्रसङ्गः। न हि कर्तृव्यापारानन्तरमेव क्रियासिद्धिः। साधनविनियोगे हि कर्तृव्यापारः। विनियुक्तेषु तु साधनेषु व्यापाराविष्टेषु सत्सु क्रिया निष्पद्यते। तत्र चाधिकरणादीनामिव कर्तुरपि व्यापारो विप्रकृष्यते क्रियासिद्धौ कर्त्रन्तरप्रयोगाभावात्। पारतन्त्र्ययोगेऽपि साधनान्तराणां प्रयोक्तारः कर्तारः विनियुक्तसाधनान्तरव्यापारव्यवधानेन क्रियां दूरादेव साधयन्ति। करणव्यापारसमनन्तरमेव तु क्रियासिद्धिः॥ ९४॥

अथ वा कर्त्रा सहातिशयचिन्ता नैव संभवतीत्याह।

**क्रियासिद्धौ प्रकर्षो वा न्यग्भावस्त्वेव कर्तरि।**
**सिद्धौ सत्यां हि सामान्यं साधकत्वं प्रकल्प्यते॥ ९५॥**

(92) [a]) इह क्रियासिद्धिविषये साधनान्तरेभ्योऽतिशयः करणस्य विवक्षितः। यदा च प्रवृत्तानि गृहीतव्यापाराणि कारकाणि तदा क्रियासिद्धिर्विषयीभवति। कर्तृ-

(90) [a]) A °वाच्यः कार°. B °शब्दाधीका°. [b]) एवं कारण°. A तथा चाश्वो°. BIO स्वष्टश्चोरा°. A °रेभ्योऽतिशयेन. A न्याय्यमित्याह.

का. ९४. A °क्तारमारा°.

(91) A रणत्वप्रसङ्गः. A °रादनन्त° A चापि करणा°. A कर्तरि व्यापारो. A °सिद्धौ प्रकृष्टतरप्रयो°.

का. ९५. DO °कर्षोऽयं न्य°.

(92) [a]) A निवृत्तानि. A °गमवति. A °विष्टव्यापा°. A °न्धनसामा°. A °देशादिव. A कृतः. A यसिद्धौ सामा°. A साधनं तत्सि°.

विनियोगे त्वपेक्षिते कर्तरि न्यग्भवन्ति। साधनान्यनाविष्टस्वव्यापाराणि स्वातन्त्र्यनिबन्धनं सामान्यभूतं साधनव्यपदेशमेव नासादयन्तीति कुतः तदपेक्षया कर्तुरतिशयः स्यात्। तदाह

'सिद्धौ सत्यां हि सामान्यं साधकत्वं प्रकृष्यते।'

इति। यत्सामान्यं साधनत्वं तत्सिद्धौ निष्पत्तौ सत्यां प्रकर्षमासादयति। [b]) निष्पत्तिश्च तस्य कर्तृविनियोगादुत्तरकालं स्वव्यापारावेशे सति। तथा च तस्यां दशायामतिशयश्चिन्त्यमानोऽधिकरणादेस्तुल्यकक्ष्यात् करणस्यैवावतिष्ठते न तु कर्तुः। स हि स्वामी प्राक्प्रवृत्ति स्वतन्त्रो न भृत्यैः सह स्पर्धते। सजातीयापेक्षो हि प्रकर्षः। कर्ता तु विजातीय एव, कारकान्तराणां स्वतन्त्रपरतन्त्ररूपत्वात्। एवं च कृत्वा कर्तरि पराधीनस्याधिकरणस्य साधकत्वातिशयः कारकान्तरापेक्षो युज्यते, भिन्नविषयत्वादिति कथमस्वाधीनं प्रकर्षवत् साधनं स्यादिति न चोदनीयम्॥ ९५॥

यदि तर्हि कर्तुः करणस्य च रूपविप्रकर्षः कथमिदानीं करणस्यापि कर्तृत्वमसिरुच्छिनत्तीत्याशङ्क्याह।

**अस्यादीनां तु कर्तृत्वे तैक्ष्ण्यादि करणं विदुः।**
**तैक्ष्ण्यादीनां स्वतन्त्रत्वे द्वैधात्मा व्यवतिष्ठते॥ ९६॥**

(93) इह यदा छिदिं प्रति सुतीक्ष्णधारत्वात् कर्तृविनियोगतिरस्कारेणासिः स्वातन्त्र्येण विवक्ष्यते तदासौ करणमेव न भवति, अपि तु यदनन्तरभाविनी क्रिया तस्यैव करणत्वं तैक्ष्ण्यगौरवकाठिन्यसंस्थानादेः। तस्यापि कर्तृत्वविवक्षायां विवक्षाप्रापितरूपभेदायत्तः करणभावः। तथा हि तैक्ष्ण्यं छिनत्ति स्वसामर्थ्येनेति शब्दभेदोपहितरूपभेदादेकमपि तैक्ष्ण्यं भेदेनैव कर्तृकरणते प्रतिपद्यते। स्वाधीनत्वेनाश्रित आत्मा कर्ता साधकतमत्वेनाश्रितः करणमिति द्वेधा व्यवस्थानम्। क्रियायाः करणाविनाभावात् करणान्तरव्यावृत्तिपरेयं चोदना। तैक्ष्ण्यमेव छिदौ साधकतमं नान्यदिति तस्यातिशयपरिपोषे तात्पर्यम्, तदेवं कर्तृकरणे भिन्ने एव॥ ९६॥

यद्येवमेकत्राप्राप्तौ संज्ञयोः

'करणं पराणि ........' (Vā on P. 1.4.1)

---

[b]) A °ष्ठते। ननु कर्तुः सद्भिः स्वामा प्राक् प्रवृत्तिः. A न नृपैः सह स्पर्शं धत्ते. A स्वातन्त्र्यपारतन्त्र्यरू°. A °नस्यापि करणस्य साधनत्वाति°. B अपकर्षवत्. I रूपत्रिकर्षः. A °दावित्याश°.

(93) A om. इह. A तदा सौकर्यमेव न°. A °भेदाय करणभावः।. BI °करणे प्रति°. A °श्रितमात्मा. A द्वे वावस्थाने. A करणाम्नव्या°. I साधनतमं. A °कदा प्राप्तौ. A करणं परमिति.

इति विप्रतिषेधः कथमुपन्यस्त इत्याह ।

**आत्मभेदेऽपि सत्येवमेकोऽर्थः स तथा स्थितः ।**
**तदाश्रयत्वाद् भेदेऽपि कर्तृत्वं बाधकं ततः ॥ ९७ ॥**

(94) [a]) विवक्षाप्रापिते सत्यपि कर्तृकरणतया रूपभेदे स एकोऽर्थः शक्त्याधारस्थितो न प्रच्यवते रूपादित्यर्थः । अत्रोपपत्तिः '**तदाश्रयत्वात्**' इति । कल्पनाश्रयत्वात् । काल्पनिको हि भेदो न वास्तविकमेकत्वं विहन्तीत्यर्थः । यद्वा तदाश्रयत्वादिति तदेकार्थाधारत्वात् कर्तृकरणसंज्ञयोरिति केचिद् व्याचक्षते । शक्तिभेदेऽपि तदाधारद्रव्यैकत्वादेकः संज्ञयोर्विप्रतिषेधविषय उपपद्यते । संज्ञा हि शक्तिविशिष्टस्य द्रव्यस्यैव । [b]) तदेवं वस्तुनि विद्यमानमेकत्वं यदा विवक्षोपादत्ते तदैकविषयत्वे विप्रतिषेधे परत्वात् कर्तृसंज्ञा करणसंज्ञां बाधत इत्युदाहृतम् 'असिश्छिनत्ति' इति । अत्र हि साधकतमत्वाविवक्षाविनाभाविनी स्वातन्त्र्यविवक्षासेरित्येकविषयत्वे उभयसंज्ञाप्रसङ्गे परत्वात् कर्तृसंज्ञा । साधकतमत्वे हि सति स्वातन्त्र्यमारोप्यते । यथा धनुषा विध्यतीत्यपायभावे सत्येव साधकतमत्वं धनुषः । तदेवं क्रिया प्रति प्रकृष्टोपकारकं करणमिति स्थितम् ॥ ९६ ॥

उपकारश्च भवताऽर्थेन क्रियते, न त्वविद्यमानेनेत्येतामाशङ्कामप्यपाकरोति ।

**यथा च सन्निधानेन करणत्वं प्रतीयते ।**
**तथैवासन्निधानेऽपि क्रियासिद्धेः प्रतीयते ॥ ९८ ॥**

(95) दात्रादयः सन्निहिताः क्रियोपकारातिशयमासादयन्तः करणतया यथा प्रज्ञायन्ते तथैव धनाभावेन मुक्त इत्यादावसन्निहितमपि धनं मुक्तिं साधयत् करणमेव प्रसिद्धम् ॥ ९८ ॥

अत्रैव सूत्रकारमतं संवादकमाह ।

**स्तोकस्य वाभिनिर्वृत्तेरनिवृत्तेश्च तस्य वा ।**
**प्रसिद्धिं करणत्वस्य स्तोकादीनां प्रचक्षते ॥ ९९ ॥**

(96) 'करणे च स्तोकाल्प ....' (P. 2.3.33.)

---

का. ९७. A °ऽर्थः गाप्यते यदा.

(94) [a]) A प्रच्यवलेपादित्यर्थः. A °कत्वं सहत इत्यर्थः. A °संज्ञाया इति केचिद्. [b]) A वस्तुविद्यमा°. A तदैवयविष°. BD वर्तृकरण°. B °ज्ञाकरणात् संज्ञां वाधक इत्युदाहृत मसि A °तमत्वाविवक्षायां भाविस्वातन्त्र्यावि°. A °यत्वेऽनुभय. A 'त मेन धनुषा तत् क्रिया प्रति°.

का. ९८. A °सिद्धिः प्रती°.

(95) A °मापादय°. I °तया तथा. BI धनमु°.

(96) A om स्तोकान्मुक्तः. A तत्र. B तदसद्वा. A स्तोकं देय वस्तु नो. A अतो मुक्तमायत्वात् स्तोक तद्देयं वस्तुनो विशिष्ट. A यदि च बहु. B °मेको न वि°. A °क्षाधीनस्य साध°.

इत्यत्रोदाहरणं स्तोकान्मुक्तः स्तोकेन मुक्त इति। अत्र सत्ववचनानामपि स्तोकादीनां धर्ममात्राभिधानतात्पर्येण प्रयोगादसत्ववचनता। तच्च धर्ममात्रं स्तोकलक्षणं सदसद्वा मुक्तिक्रियायामतिशयेनोपकारकं करणमित्युक्तम्। यस्मात् स्तोकं देयवस्तुनो निष्पन्नं न चान्यत् संभवति निष्किंचनत्वात् अतो मुक्तः; यदि वा स्तोकं देयवस्तुनोऽवशिष्टमवसितं ततो मुक्तः। यदि तु बहु देयं स्यात् न मुच्येतेति स्तोकेनाभवता मुक्तः। एवमेकेन न विंशतिरेकान्न विंशतिरिति एकाभावो विंशतिनिषेधस्य करणम्॥ ९९॥

तदेवं विवक्षाधीनत्वात् साधनव्यवहारस्य यद्यत् साधकतमत्वेन विवक्ष्यते तत्तत्करणम्। तथा च।

**धर्माणां तद्वता भेदादभेदाच्च विशिष्यते।**
**क्रियावधेरवच्छेदविशेषाद् भिद्यते यथा॥ १००॥**

(97) [a]) आश्रितमात्रं धर्मशब्देनाह। 'तद्वता' इत्याश्रयेण। तथा हि 'देवदत्तः काष्ठैः पचति' इतीन्धनगतस्य तेजसस्तदभेदविवक्षया प्रयोगः। तथा च देवदत्तकर्तृकेन्धनकरणिका चेयं पचिक्रिया। यदा तु तेजो भेदेनेन्धनाद् विवक्ष्यते तदा "एधाः पक्ष्यन्ति तेजसा" इति तेजःकरणिकेन्धनकर्तृका च पचिक्रिया। यदाप्यौष्ण्यं तेजसो भेदेन क्रियासिद्धावुपयोगवद् विवक्ष्यते तदा "तेजः पचत्यौष्ण्येन" इति भिद्यते साधनविशेषात् क्रिया। तद्यथाऽवधेर्ग्रामादेरवच्छेदविशेषाद् भेदविशेषात् क्रिया **भिद्यते** विशिष्यते 'ग्रामादागच्छति', 'ग्रामस्य समीपादागच्छति' इत्यादौ तद्वदत्रापि बोद्धव्यमित्यर्थः। [b]) सारण्यके ससीमके सस्थण्डिलके हि ग्रामशब्दाभिधेयेऽभेदेन 'ग्रामादागच्छति' इति प्रयोगः। वाटपरिक्षिप्ते तु ग्रामशब्दाभिधेये सीमादीना भेदविवक्षेति 'ग्रामस्य समीपादागच्छति' इति भिद्यतेऽवधिः। तद्भेदाच्च क्रिया विशिष्यते। एवं वैवक्षिककरणभेदादपि यथाविवक्षं च तदेव प्रधानकरणं तृतीयावद्धातुप्रत्ययेन ल्युटा घना वाभिधीयते, पचनमेधः, पचनं तेजः पचनी स्थाली, पचनमौष्ण्यम् इत्यादि यथाविवक्षमुदाहार्यं प्रयोगजातमिष्टम्॥ १००॥

इति भूतिराजतनयहेलाराजकृते प्रकीर्णप्रकाशे साधनसमुद्देशे करणाधिकारः॥

---

(98) [a]) तृतीयार्थे करणे विचारिते सम्प्रति तदर्थः कर्ता विचार्यते। तस्य लक्षणम्

---

(97) [a]) A तद्वता आ°. A यदा चौष्ण्यं. I तेजसा. A °विशेषा क्रिया°. A °पादभेदविशेषा क्रि°. A विशेष्यते. [b]) °धेये भेदे°. A एव चैव हि करणभेदाद्यपि यथाविवक्षमेव। तदेवं प्र°. A °प्रत्ययेन स्फुटं घटादावभि°. A पचनं स्थाली.

(98) [a]) A °देरन्यस्मा°. B om. स्व व्यापारे. A तत्त्वन्यतः. A कर्ता. A °मापादयति. A °राश्रकर्ता तु. A फलार्थमानेन स्वय व्यापारावेशात् अतिशयवृत्तानि. A °न्ते कर्ता तु.

'स्वतन्त्रः कर्ता' (P. 1.4.54)

इति। स्व आत्मा तन्त्रं प्रधानमस्य। करणादीनां हि परः कर्त्रैव तन्त्रं प्रधानम्। क्रियासिद्धौ तेन प्रयोज्यत्वात्। कर्ता त्वनन्यप्रयोज्यः स्वतन्त्र इत्युच्यते। तत्र करणादीनामपि स्वव्यापारे स्वातन्त्र्यात् कोऽतिशयः कर्तुरित्याशङ्कयोपपादयति।

प्रागन्यतः शक्तिलाभान्न्यग्भावापादनादपि।
तदधीनप्रवृत्तित्वात् प्रवृत्तानां निवर्तनात्॥ १०१॥
अदृष्टत्वात् प्रतिनिधेः प्रविवेके च दर्शनात्
आरादप्युपकारित्वे स्वातन्त्र्यं कर्तुरुच्यते॥ १०२॥

करणादिप्रवृत्तेः **प्राक्** एवार्थितादेरपरस्मान्निमित्तात्, न तु सहकारिभ्य एव सामर्थ्यमासादयति। फलकामो हि कर्ता करणादीन्युपार्जयते। तथा च पूर्वमेव शक्तिमान् स्वतन्त्रः। करणादीना तु कर्तृविनियोगादेव स्वव्यापारे स्वातन्त्र्यम्, न त्वन्यतः। अत एव कर्त्रा न्यग्भावमात्माधीनतामापाद्यन्ते। तदायत्तव्यापाराश्च। कर्ता तु फलार्थमीहमानः स्वयं व्यापारवान्। अतिप्रवृत्तानि च करणादीनि निवर्त्यन्ते कर्त्रा। स तु फलप्राप्तौ स्वयमेव निवर्तते।[b] चोदितासंभवे करणादीनां प्रतिनिधिरुक्तः। कर्तुः स नास्ति। कर्त्रन्तरं हि क्रियां निर्वर्तयत् प्रतिनिहितं नोच्यते। तस्याप्यर्थिनः समर्थस्यापर्युदस्तस्याधिकारात्। **प्रविवेके च** कारकान्तराणामभावे दृश्यते कर्ता, तद्यथा अस्ति, भवति, विद्यत इत्यादौ। यद्यप्यत्राधिकरणादयः संभवन्ति तथापि नान्तरीयकास्ते शब्दव्यापारादप्रतीयमानाः। ततश्चाकर्तृकायाः क्रियाया अभावात् संभूयकारिभ्योऽपि विशिष्यते कर्ता। एतेन हेतुकलापेन कर्तुः करणापेक्षया क्रियासिद्धौ विप्रकृष्टोपकारकत्वेऽपि स्वातन्त्र्यं प्राधान्यनिबन्धनमुच्यत इति तस्यैव कर्तृसंज्ञा, न तु करणादेः स्वव्यापारे स्वतन्त्रस्यापीत्यर्थः।[c] एतेन चेदं भाष्यं व्याख्यातम्—

"यत् सर्वेषु साधनेषु सन्निहितेषु कर्ता प्रवर्तयिता भवति"
(M. Bhā. on P. 1.4.23)

इति। एतच्च भाष्यं गर्भीकृतनान्तरीयकार्थं संक्षिप्योक्तमिति गर्भीकृतार्थव्यक्तीकारेणात्र व्याख्यातम्। तथा हि '**तदधीनप्रवृत्तित्वात्**' इत्यनेन साक्षात् प्रवर्तकत्वं व्याख्यातम्। सामर्थ्याक्षिप्तं च न्यग्भावनादि निर्दिष्टम्। तथा हि प्रयोक्त्रधीनत्वात् प्रवृत्तेर्न्यग्भावः करणादीनां तत्रार्थोक्तः। सा प्रवर्तना च फलार्थमिति तत्प्राप्तावतिप्रवृत्तौ निवर्तनाप्या-

---

[b]) A निर्वर्तयता. A दृश्यते कर्तरि क्रिया अस्ति°. A °काया क्रियाया मानाभावात्. A °कारिभ्यो विशि°. [c]) A om. सन्निहितेषु. I असंभवे च प्रवर्तयिता. A °कार्यसहं संक्षि°. A °र्थोक्तः। प्रवर्तना तु. A फलार्थमितिवत् प्राप्तावप्रतिप्रवृत्तौ.

क्षिप्ता । [d]) प्रवर्तयिता चावश्यं प्रवर्त्यादन्यतः शक्तिं प्राग् लभत इति तदपि व्याख्यातम् । असंभवे च प्रवर्तयितुरेवाभाव इति प्रतिनिध्यभावः सामर्थ्योक्तो विवृतः । साक्षात्समर्थस्य क्वचिदन्यानपेक्षणात् प्रविवेके च दर्शनं सामर्थ्यलभ्यं व्याख्यातमिति समस्याभिहितं भाष्यं व्यस्य व्याख्यातम् ॥ १०१, १०२ ॥

अचेतनेषु तर्ह्येवंविधधर्मकलापाभावात् कर्तृता न प्राप्नोतीत्याशङ्क्याह ।

**धर्मैरभ्युदितैः शब्दे नियमो न तु वस्तुनि ।**
**कर्तुर्धर्मविवक्षायां शब्दात् कर्ता प्रतीयते ॥ १०३ ॥**

(99) [a]) **अभ्युदितैः** उक्तैरेतैः प्रागन्यतः शक्तिलाभादिभिः प्रवर्तयितृत्वादिलक्षणैः **धर्मैः** स्वभावैरुपलक्षितः स्वतन्त्रः कर्ता इत्येवंलक्षणो नियमोऽवश्यभावः शब्दविषये समाश्रयणीयः । शब्देन यस्यैते धर्माः प्रत्याय्यन्ते स कर्ता बोद्धव्यः, न तु वस्तुविषयतया धर्माणामेषां सम्भवोऽन्वेषणीयः येनाचेतनविषये 'अग्निर्दहति', 'एधाः पचन्ति' 'स्थाली पचति' इत्यादौ 'कूलं पतति, 'नदी वहति' इत्यादौ च कर्तृत्वं न स्यात् । [b]) एते हि धर्मा यदा कर्तृलक्षणाय विवक्ष्यन्ते शब्देन च यथाविवक्षं प्रत्याय्यन्ते तदा **शब्दात् कर्ता** सुप्रतिष्ठितलक्षणः **प्रतीयत** इति करणमिव कर्तापि वैवक्षिकः प्रतिपादितः । एवं च कृत्वाचेतनेषूपचरितमपि न भवति कर्तृत्वम्, सर्वत्रास्खलद्वृत्तित्वात्प्रयोगस्य मुख्यतासंभवात् । व्याकरणे हि शब्दार्थोऽर्थः न वस्त्वर्थः । ततश्च व्याकरणान्तरे

अर्थी कर्ता

तथायुक्तश्च

इति लक्षणद्वयं चेतनाचेतनविषयतया यत् प्रणीतं तत्न कौशलमित्युक्तं भवति ॥ १०३ ॥

यदा च विवक्षाधीनं स्वातन्त्र्यं तदेदेमपि सिद्धं भवतीत्याह ।

**एकस्य बुद्ध्यवस्थाभिर्भेदे च परिकल्पिते ।**
**कर्मत्वं करणत्वं च कर्तृत्वं चोपजायते ॥ १०४ ॥**

---

[d]) A °यिता तावत् प्रवर्तन्यः प्रागमन इति तदपि°. A °थ्योक्तोऽविकृतः. A °क्षादसम°. A क्वचिदनपेक्षणात्. A दर्शनसामर्थ्यं लब्धं. A भाष्यं च °व्याख्यातम्. B भाष्यान्यस्य व्या. A अचेतनविषये. A धर्मकलापात् कर्तृता°.

का. १०३. D om. the second half of the Kārikā.

(99) [a]) A ins. प्रवर्तयितृत्वादिभिः (after शक्तिलाभादिभिः). B om. धर्मैः B om. स्वाभाविकैः. A om. स्वतन्त्रः (before कर्ता). BI इत्थंलक्षणे. B नियमादेव. B °श्रयणीयम्. [b]) A एते ध°. BO °प्रतिष्ठितः प्र°. BO om. कर्तृत्वम्. A सर्वशास्त्रवृत्तित्वात्. A न स्वार्थः. A व्याकरणात् अर्थी°. A तत्प्रणी°. A तेन कौशल°. O °दमविरुद्धं भ°.

का. १०४. A कर्मत्वं करणत्वं वा कर्तृत्वं वोपजायते.

यदुत तथा तथा सन्निवेशमात्रम्। तद्यथा सर्पस्य कौटिल्यमनर्थान्तरम्, पृथग्भूतानां चाङ्गुल्यादीनां सङ्घातो मुष्ट्यादिरित्यवस्थाविशेषमात्रसारः कार्यकारणभाव इत्यवस्थातुरभेदादवस्थास्वनुगमात् सत्त्वे जनिकर्तृतासिद्धिः ॥ १०७ ॥

इदानीं कार्यकारणयोर्भेदवादेऽपि वास्तवेन रूपेण जनिकर्तृत्वं प्रतिपादयितुमाह।

**विभक्तयोनि यत्कार्यं कारणेभ्यः प्रवर्तते।**
**स्वा जातिर्व्यक्तिरूपेण तस्यापि व्यवतिष्ठते ॥ १०८ ॥**

(104) विभक्ता व्यतिरिक्ता योनिः कारणमस्य तस्यासतो विकार्यस्य जायमानस्य कारणेभ्यः सकाशाद्व्यतिरिक्तस्योत्पत्तेः पूर्वं व्यक्तिरूपेणासत्वेऽपि जात्यात्मना सत्त्वात्तज्जातीयतया निरूप्य साधनविनियोगाज्जातिरेव कारणानां स्वाभिव्यंजकसम्पत्त्यर्थं प्रयोजिकेति सैव व्यक्त्यात्मना जायत इति व्यवहाराज्जातिरूपेण कर्तृत्वं व्यक्तिरूपेण जन्यत्वमिति अत्यन्तं व्यतिरेकाभावाज्जातिव्यक्त्योः सामानाधिकरण्यादुपपद्यत इत्यर्थः ॥१०९॥

इदानीं शब्दार्थोऽर्थ इति स्वसिद्धान्तं निगमयितुमाह।

**भावष्वेव पदन्यासः प्रज्ञाया वाच एव वा।**
**नास्तीत्यप्यपदे नास्ति न चासद्भिद्यते ततः ॥ १०९ ॥**

(105) आकारावग्रहेण ज्ञानशब्दयोः प्रवृत्तेर्निरालंबनतायोगात् प्रतीयमाने एवाकारो भावशब्दवाच्यः सदैव विषयः पदविन्यासस्थानं तयोः। तथा हि नास्तीत्यभावालंबनौ कञ्चन परपरिकल्पितं स्वयमुत्प्रेक्षितं वाकारमवलंब्य जायेते येन सदाकारावलबनाभ्यां ज्ञानशब्दभ्यामनयोर्विशेषाभावः, स्वाकारावग्रहसाम्यादिति व्यवहारे सर्वमेव भावाभावजातं समानम्। बहिर्वस्तुचर्चा तु नाङ्गम्, इयतैव व्यवहारपरिसमाप्तेरिति सदाकारावग्रहप्रवृत्तौ जायतेऽङ्कुर इति प्रयोगः सूपपाद इत्यर्थः ॥ १०९ ॥

बुद्धिशब्दविषयभावातिरेकेण व्यवहारे वस्तूनां बाह्या सत्ता न काचन विद्यत इत्याह।

**बुद्धिशब्दौ प्रवर्तेते यथा भूतेषु वस्तुषु।**
**तेषामन्येन तत्त्वेन व्यवहारो न विद्यते ॥ ११० ॥**

---

का. १०८. B विभक्ति°. A यत् क्वापि. B कारणस्य. O साजाति.

(104) A °सतोऽपि कार्यमात्रस्य. A सत्वात् सञ्जायते। या नि°. A स्वाभिषज्ञ°.

का. १०९. I °स्तीत्यव्यपदे. A °चासद् विद्यते ततः.

(105) O नितरामालंबनतायोगात्. A °त्यनालंबनैकत्वे; B °लंबनो कश्चन आकल्पिकं. A °क्षितं वाक्यमव°. A जायते. A °कारग्रहसा°. B °ग्रहसामर्थ्यादिति. A इत्यत एव. A °हारमति स°. B °विषयाभावा°. A °भावाव्यति°.

(106) अभिधानप्रत्ययावेव व्यवहार इति यथाप्रत्ययं यथाभिधानं च पदार्थतत्त्वमेषणीयम्, नान्यत् पदार्थस्वरूपमप्रतीयमानमनभिधीयमानं चाश्रित्य प्रत्यवस्थेयमित्यर्थः। तथा चार्थोल्लेखरहिताया बुद्धेरयोगात्तत्सिद्धेन तत्त्वेन जायमानः कर्ता निरूप्यते; निरूपितश्चाभिधीयते। यथा नास्तीति प्रत्यये बहिरसन्नपि पदार्थो नियतदेशकालयोर्निषिध्यमानो देशकालान्तरोपलब्धेनाकारेणावभासमानः कर्तृप्रत्ययेनाभिधीयते, तथा कार्योन्मुखतायामनागतमपि वस्तु तज्जातीयानुभववासनया बुद्धावभिमुखीभवत्समर्थहेतुवशाज्जायत इति जन्मनः कर्तृत्वेनाभिधीयत इति प्रकरणार्थः ॥ ११० ॥

इदानीं संबन्धसमुद्देशोक्तं न्यायं चेतसि सन्निवेश्याद्वैतनयेन जन्मनाशासंभवं प्रतिपादयति।

**आकाशस्य यथा भेदश्छायायाश्चलनं यथा।**
**जन्मनाशावभेदेऽपि तथा कश्चित्प्रकल्पितौ ॥ १११ ॥**

(107) निष्प्रदेशस्याप्याकाशस्य नित्यस्य संयोगिपदार्थप्रविभागेन देशाध्यारोपाद् भेदपरिकल्पनेत्युक्तम्। भासामभावरूपायाः छायायाश्च निष्क्रियत्वेऽपि वारकद्रव्यक्रियानुगामितया सक्रियत्वाध्यारोपः। एवमभावस्य पूर्वं निराकृतत्वात् जन्मनि कारणव्यापारस्य च निषेधाद् विनाशेऽपि तदनुपपत्तेरावेदितत्वात् निर्हेतुकविनाशप्रतिषेधाच्चाभिन्नस्याद्वयस्य तत्त्वस्य नित्यस्य जन्मनाशायोगादविद्यावशात् प्रतिभासमात्रनिष्ठजन्मनाशवशेन परिकल्पितभावाभावरूपतया व्यवहार इति संबन्धसमुद्देश एव विस्तरतो निर्णीतम्। एवं च भावाभावव्यवहारवज्जायत इत्यर्थोऽविचारितरमणीयः सिद्ध इत्यर्थः ॥ १११ ॥

नाशस्य कल्पितत्वमुपपादयितुमाह।

**यथैवाकाशनास्तित्वमसन्मूर्तिनिरूपितम्।**
**तथैव मूर्तिनास्तित्वमसदाकाशनिश्रयम् ॥ ११२ ॥**

(108) [a]) व्यापकस्याकाशस्य सर्वत्र भवतो वस्तुतो न क्वचिदभावः। ततश्चासदप्याकाशनास्तित्वं परिमितदेशघटादिमूर्त्यवष्टंभवशेन कल्प्यते। यत्र हि घटादयस्त-

(106) A ins. तत्र (before यथाप्र°). I अन्वेषणीयं. A नान्यपदा°. D rep. °त्ययावेव ... स्वरूपमप्र (before तीयमानमनभि°) A om. निरूप्यते (after कर्ता). A यद्वाना°. A °ब्धेन नानाका°. A °तायामभिगतमपि वस्तु. B °खीभवन् स°. BL निवेश्य.

(107) A नित्यसंयो°. A °सेपो न भेद°. A तासामभाव°. A °गामितसक्रि°. A °दित वात्। निर्हे°. BIO इत्यप्यविचारि°. A तत्र कल्पि°.

का. ११२. A °मसदाकाशनिश्रयम्.

(108) [a]) A °मूर्तिवत् सभवतो न क°. A पटादीनां. A °नमपि। स्वस्वभा°. A °दसत्वभावत्वे. A °दिति आपादकाकाश°.

(100) [a]) 'हन्त्यात्मानमात्मना' इत्येकस्यैवात्मनो विवक्षाप्रापितरूपभेदाधीनः कारकत्रययोगो दृश्यते। स वास्तवे कारकव्यवहारे न घटनामेति। न ह्येकस्य वस्तुनो युगपद् भिन्नानेकरूपता शक्यावसातुम्। न चामूर्तस्यात्मनः शस्त्रादिव्यापारजन्यवधसंभवः। विवक्षा तु शब्दनिबन्धना न विहन्यतेऽत्र। [b]) तथा हि बुद्धेरवस्था प्रतिभासनानात्वम्, तदनुसारेण विवक्षया भेदपरिकल्पः। शस्त्राद्युद्यमननिपतनव्यापारवान् हन्तीति कर्ता। आत्मैवात्र विषयभावापतितस्तथैव कर्म। सौकर्यातिशयविवक्षायां शस्त्रादिव्यापारस्य निरासे करणत्वमात्मनः। कर्मकरणे ह्यन्यत्र भेदेन दृष्टे इति तन्निरासाय कर्तैवात्र तथोच्यते भेदेन। अत एव वार्तिके कर्मवद्भावोऽनेन न्यायेन प्रत्याख्यातः।

सिद्धं तु प्राकृतकर्मत्वात्। ( Vā.on P. 3.1.87 )

आत्मसंयोगेऽकर्मकर्तुः कर्मदर्शनात्। ( Vā. on P. 3.1.87 )

इति।

" हन्त्यात्मानम्, आत्मना हन्यत इति॥ १०४॥

( M. Bhā. on the above )

अन्यदपि शाब्दे कर्तृत्वे सिद्ध्यतीत्याह।

**उत्पत्तेः प्रागसद्भावो बुद्ध्यवस्थानिबन्धनः**
**अविशिष्टः सताऽन्येन कर्ता भवति जन्मनः॥ १०५॥**

(101) [a]) 'अङ्कुरो जायते' इति जनिकर्तृत्वं सतोऽसतो वा। तत्र

यदि सज्जायते कस्मादथासज्जायते कथम्।

इत्यादिना पूर्वं वास्तवरूपाश्रयेण सदसत्पक्षभेदेनापि जनिकर्तृत्वमयुक्तमित्युक्तम्। उपचारसत्ताश्रयेण तूत्पत्तिः सिद्धान्तिता

उपचर्य तु कर्तारम्....

इत्यादिना। तत्र वैवक्षिके कर्तृत्वे उपचारार्थोऽपि न कश्चिदित्युच्यते। तथा हि विवक्षारूपाया बुद्धेः शब्दनिमित्ताया येऽवस्थाविशेषाः प्रतिनियतशब्दनिबन्धनाः तदाश्रयेणात्र क्रियान्तरकर्तृत्वतुल्यं जनिकर्तृत्वं सिद्धम्। विवक्षाप्रापितसन्निधाने ह्यर्थेऽङ्कुर

---

(100) [a]) A °भेदाद्धेतो. A वास्तवैकाकारव्यवहारे न घटेत. A °वस्थातुम्. BI शास्त्रादि°. B °जन्यफल°. A संभवविवक्षा तु शब्द°. A °न्यते। तत्र. [b]) A तयोर्हि. A प्रतिहासं नानात्वं. A भेदं परिकल्प्य. A °व्यापारं द्रव्याणि हन्तीति. A °तितस्तत्रैव. A °पारनिरासे. A ह्यत्र. A कर्मकर्तुः. A °दित्यात्मानमात्मना हन्तीति. A अन्यदपि शब्दऽकर्मकत्वं सि°.

(101) [a]) BO जनिक्रियाक°. A °तृत्वमुक्तामित्यु°. A सिध्यति उप°. A अत्र वै°. I °चारोऽर्थो. B तथा हि तथा विव°. A °न्तरकर्तृकत्व तु°. B °न्तरतुल्य°. I प्रदर्शयति.

इति शब्दः प्रयुज्यते । स च सदेव वस्तु दर्शयति । [b]) ततो 'जायते' इति पदसमवधानावधारितजन्मनोऽस्य कुतः सत्त्वमिति बुद्ध्या निश्चितसत्त्वस्य क्रियासिद्धावुपगृहीतसामर्थ्यस्य बाह्येन रूपेण जन्मेति वाक्यार्थोऽवतिष्ठते । ततश्च येन रूपेण सत्त्वं न तेन कर्तृत्वं येन च कर्तृत्वं न तेन सत्त्वमिति नेयं वास्तवी व्यवस्था अपि तु शाब्दयेवेत्यर्थः । शब्दार्थ एव चार्थ इत्यस्खलद्वृत्तित्वात् प्रयोगस्य मुख्यतैव सर्वत्र । नोपचारार्थः कश्चित् ॥ १०५ ॥

वस्तुवृत्तचर्यायामपि चाङ्कुरो जायत इति प्रयोग उपपन्न इत्याह ।

**कारणं कार्यभावेन यथा वा व्यवतिष्ठते ।**
**कार्यशब्दं तदा लब्ध्वा कार्यत्वेनाथ जायते ॥ १०६ ॥**

(102) कार्यमुखेन कर्तृता जन्म च सदसत्पक्षभेदेन नोपपद्यत इति बुद्ध्यवस्थासनाश्रयेण पूर्वमुपपादितम् । इदानीं कारणमुखेन प्रतिपाद्यते । अत एव पक्षान्तरसूचको वा शब्दः । तत्र कारणात् पृथगेव कार्यमाजायते इति पूर्वपक्ष उक्तः । परिणामदर्शने त्वभेदपक्ष इदं कथ्यते । कार्यकारणयोः प्रकृतिविकाररूपतया 'क्षीरं दधि सम्पद्यते,' बीजमङ्कुरो जायत इत्यभेदेन व्यवहारादेकस्यावस्थातुरवस्थाविशेषस्वीकरणमात्रं सतत्त्वमिति कार्योन्मुखताया विशिष्टविकाराभिनिर्वृत्तिप्रक्रमे विशिष्टोत्तरावस्था विशेषगतवाचकाध्यासात् । कारणमेव सद्रूपं कर्तृ भवदुत्तरावस्थासाधनलक्षणं जन्म प्रतिपद्यते इति युज्यते 'जायतेऽङ्कुर' इति प्रयोग इत्यर्थः ॥ १०६ ॥

युक्तं चैतद्यदुत कारणमेव कार्यभावेनावतिष्ठत इति स्वसिद्धान्तेनैतदुपपदयितुमाह ।

**यथाहेः कुण्डलीभावो व्यग्राणां च समग्रता ।**
**तथैव जन्मरूपत्वं सतामेके प्रचक्षते ॥ १०७ ॥**

(103) पूर्वं सदसत्पक्षभेदेन कार्यकारणभावासंभवं प्रतिपाद्य

अत्यद्भुता त्वियं वृत्तिः (Vā. III. सं. 81)

इत्यादिना विवर्तनयेन सिद्धान्तितम् । तत्र चेयानेव जन्मार्थो विचार्यमाणोऽवतिष्ठते

---

[b]) A °जन्मनाऽस्य. I om. न (before तेन). A om. च (before कर्तृत्वं). A इत्यसकृदुक्तत्वात्. A वृत्तवर्या°.

का. १०६. O वाच्यवति°. I ततो ल°.

(102) A °सदसत् प्रश्नभे°. A °पक्ष उक्तम्. A सतन्त्रभिति. B °मिनिश्वत्ति°. B °ष्टोऽन्तरावस्था. A सदुपकर्तृ°. A यदुत्तरकारण°.

(103) A त्वाद्भुतास्वियं चति ; B °न्तर्भूता त्वियं स्तुति ; I °ह्यान्यभूता त्वियं°. A तत्र तेषामेव.

त्रासदाकाशमिति व्यवहारः । एवं मूर्तीनामपि घटादीना क्वचिन् नास्तित्वं भावतोऽविद्यमानमपि सत्स्वभावस्य स्वरूपविनाशायोगादसत्स्वभावत्वे कदाचिदप्यभावादिति न्यायादाकाशस्यान्तराले दर्शनादध्यवसीयते । [b]) अन्तराले हि मूर्तीनां सत्तायास्तिरोधाने गगनमेव तद्रहितमवधारयन्तोऽर्वाग्दर्शना नास्तीत्यध्यवस्यन्ति । आविर्भावं च सत्तायाः स्वदेशे व्यवस्यन्तो जन्म प्रतिपद्यन्त इत्येतत् प्रकरणादवगन्तव्यम् । तथा च द्वयोरपि जन्मनाशयोः कल्पितत्वमुपपादितं भवति । यथाध्यवसायं च व्यवहाराद्जन्मनिरोधा एव पदार्थाः सिद्धाः । न ह्याकाशमभावो वस्तुतः पदार्थानामभावाभावे च सदैवावस्थानाज्जन्मार्थोऽपि न कश्चित् ॥ ११२ ॥

इदानीं वास्तवेऽपि जन्मनि प्रकारान्तरेण जायत इति प्रयोगं समर्थयितुमाह ।

**यथा तदर्थैर्व्यापारैः क्रियात्मा व्यपदिश्यते ।**
**अभेदग्रहणादेष कार्यकारणयोः क्रमः ॥ ११३ ॥**

( 109 ) 'कारणं कार्यभावेन' इत्यादिना कार्यकारणयोर्वास्तवमभेदमाश्रित्य समर्थितम् । अधुना तूपचरिताभेदाश्रयेणोच्यते । यथा हि पचेर्विक्लित्तिः प्रधानार्थ इति तदर्थैः गुणव्यापारैरधिश्रयणोदकासेचनादिभिः कर्त्रादिगतैस्तादर्थ्यादभेदमध्यारोप्य प्रधानक्रियारूपमुच्यते, अधिश्रयणोदकासेचनतण्डुलावपनैधोपकर्षणक्रियाः प्रधानस्य कर्तुः पाकः, काष्ठानि पचन्ति आ विक्लित्तेर्ज्वलन्तीति करणस्य पाक इत्यादिना तथा कार्यार्थित्वात् कारणस्यैवैषानुपूर्वी क्रमोऽभेदेन व्यवहारे । तथा च कारणमेवाङ्कुरशब्दाभिधेयं सत्कर्तृ कार्यात्मना जायत इति युज्यते व्यपदेष्टुमित्यर्थः ॥ ११३ ॥

ननु च कार्यकारणयोरभेदाध्यारोपेऽपि जन्मनः कर्तृत्वं कार्यस्यैव युज्यते न तु कारणस्य सिद्धत्वादित्याशङ्क्य प्रकृतिविकारविषये पर्यायेण कर्तृत्वं कार्यकारणयोः प्रयोगभेदेनावस्थापयितुमुपक्रमते ।

**विकारो जन्मनः कर्ता प्रकृतिर्वेति संशये ।**
**भिद्यते प्रतिपत्तॄणां दर्शनं लिङ्गदर्शनैः ॥ ११४ ॥**

( 110 ) [a]) इह प्रकृतिविकारविषये सामानाधिकरण्यं दृश्यते क्षीरं दधि सम्पद्यत

---

[b]) A ध्यवस्यन्तीति । A °र्भावसत्तायाः. A स्वदेशेऽवश्य ते. A °हारजन्मनि°. A °भावभावे.
का. ११३. A °ग्रहणादेव.

( 109 ) A °योर्व्यावहारिकम°. A प्रधार्थ्या. A तदर्थे. A °व्यापारेऽधि°. A °गतैस्तदभेदमध्या°. A °षणः क्रियाः. A आविक्लिद्यन्ते. A °रणस्यैवानुपूर्वी. A जन्मतः. A °षयपर्यायेतः.

( 110 ) [a]) A °विषयसामा°. A अत्र सं°. A यदा रूपभेदेन. D om. °त्वम् । अपा° ... विकारकर्त°.

इत्यादौ । अत्र च संदेहः । तथा हि गुणप्रधानभावस्य समन्वयान्यथानुपपत्त्यवश्यंभावात् किमत्र प्रकृतिः प्रधानं विकारोऽङ्गम्, उत विपर्ययः । तत्र प्रधानस्य कर्तृत्वं जनिं प्रति । अङ्गस्य तु प्रधानद्वारको जनिसंस्पर्श इति सामानाधिकरण्यम् । यदा तु भेदेन निर्देशो बीजादङ्कुरो जायत इति तदाऽसंशयमेव विकारस्य कर्तृत्वम् । अपादानतया प्रकृतेर्निर्देशात्, जनिकर्तुः प्रकृतिरिति । [b]) तत्र विकारकर्तृकाणामाशयः—आत्मलाभस्य जन्माख्या, असता चात्मा लब्धव्यः । तथा च विकार इति स एवात्र कर्ता युक्तः । प्रकृतिकर्तृकास्तु मन्यन्ते, असतो हि विकारस्यात्मलाभं प्रत्याभिमुख्यायोगात्तल्लक्षणे जन्मनि कर्तृतानुपपत्तिः । आत्मलाभोन्मुखता हि जन्म सिद्धान्तयिष्यते । प्रकृतिरूपेण चात्मनो लब्धत्वादुत्तरावस्थालक्षणात्मलाभोन्मुख्यमवतिष्ठन इति तत्र प्रकृतेरेव कर्तृत्वमुचितमिति । ॥ ११४ ॥

तदेतद्दर्शनद्वयं लिङ्गदर्शनैः प्रयोगभेदस्वभावैर्विषयविभागेनावस्थापयितुमाह ।

**क्लृपि सम्पद्यमाने या चतुर्थी सा विकारतः ।**
**सुवर्णपिण्डे प्रकृतौ वचनं कुण्डलाश्रयम् ॥ ११५ ॥**

(111) [a]) 'क्लृपि सम्पद्यमाने चतुर्थी वक्तव्या' इति वार्तिकस्यायमर्थः- सम्पादनक्रियाकर्तरि चतुर्थी विधेयेति । प्रयोगमूलत्वाच्च स्मृतेर्विकारवचनाच्चतुर्थी श्रूयमाणा विकारस्यैव सम्पत्तिक्रियाकर्तृत्वमावेदयते । मूत्राय सम्पद्यते यवागूरिति यवागूर्मूत्रं जायत इत्यत्र । प्रकृतेरत्र विकारद्वारेण क्रियासमन्वयो न साक्षात् । भेदविवक्षाया तु जनिकर्तुः प्रकृतिरित्यपादानपंचम्येवात्र कारकविभक्तिः, यवाग्वा मूत्रं जायत इति । [b]) अभेदविवक्षा तु चतुर्थ्या अवकाशः । अत एव तत्र संदेहे सत्ययं निर्णयो व्यधायि । तथा पुनरावृत्तः सुवर्णपिण्डः पुनरपरयाऽऽकृत्या युक्तः खदिराङ्गारसवर्णे कुण्डले भवत इत्यत्र भाष्यप्रयोगे सुवर्णपिण्डस्य प्रकृतित्वेऽपि न तद्गतमेकत्वं दृश्यते, अपि तु विकाररूपकुण्डलद्वित्वाश्रयं भवत इति द्विवचनं कर्तृप्रत्ययरूपं दृश्यत इत्यस्मादपि लिङ्गाद् विकारस्य कर्तृत्वावसायः ॥ ११५ ॥

लिङ्गान्तरं विषयभेदेन प्रकृतिविकारयोः कर्तृत्वानुमापकमाह ।

**वाक्ये सम्पद्यतेः कर्ता संघच्व्यन्तस्य कथ्यते ।**
**वृत्तौ संघीभवन्तीति ब्राह्मणानां स्वतन्त्रता ॥ ११६ ॥**

---

[b]) A °कारकर्तृगामा°. A असत्ता वात्मा°. A मन्यते. A om. हि. A °न्मुखतो हि. A °कर्तृत्वमुचि.

का. ११५. B साधिकारतः. O सापि कारकम्. A °पिण्डप्रकृ°.

(111) [a]) The Vārttika is only 'क्लृपि सम्पद्यमाने'. The Bhāsya on it is: क्लृपि सम्पद्यमाने चतुर्थी वक्तव्या. A °मूलत्वात् स्मृतेः. A °नाच्च चतुर्थी. A omits यवागूरिति. [b]) A °क्षाया तु. A व्यवस्थायि.

का. ११६. A सत्वं सम्प°. A प्रकृतेः स.

(112) अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि च्विर्विधीयते । तस्यार्थप्रदर्शनाय यद् वाक्यं क्रियते तत्र विकारस्य सम्पद्यकर्तृत्वं दृश्यते । तद्यथा असङ्घो ब्राह्मणाः सङ्घो भवतीति सङ्घगतैकत्वाश्रयस्य वचनस्य च दर्शनात् सङ्घ एव कर्ता । वृत्तौ तूच्यते "संघीभवन्ति ब्राह्मणा" इति । अत्र प्रकृतिभूतब्राह्मणगतबहुवचनदर्शनात् प्रकृतेः कर्तृत्वावसायः । तदेवं प्रयोगभेदेन प्ररूढं प्रकृतिविकारयोः कर्तृत्वमुन्नेयम् ॥ ११६॥

इदानीं प्रकृतेः कर्तृत्वे भाष्यकारोक्तं लिङ्गमाह ।

**अत्वं सम्पद्यते यस्त्वं न तस्मिन् युष्मदाश्रया ।**
**प्रकृतिः पुरुषस्यास्ति प्राकृतः स विधीयते ॥ ११७ ॥**

(113) 'अत्वं त्वं सम्पद्यते त्वद्भवति' (M. Bhā. on P. 1.4.108) इति भाष्य उदाहृतम् । अत्र युष्मदथा विकारः । न च तदाश्रयो मध्यमः पुरुषो दृश्यते अपि तु 'भवति' इत्ययुष्मदर्थरूपप्रकृतिगतप्रथमपुरुषदर्शनात् प्रकृतेरेव कर्तृत्वावसायः ॥ ११७ ॥

तदेतद्विषयभेदेन प्रयोगप्रामाण्यादवस्थितं कथं युज्यत इत्यत्रोपपत्तिमाह ।

**पूर्वामवस्थामजहत्संस्पृशन् धर्ममुत्तरम् ।**
**सम्मूर्च्छित इवार्थात्मा जायमानोऽभिधीयते ॥ ११८ ॥**

(114) [a]) इह न सर्वथैवानिष्पन्नं जायत इत्यभिधीयते, अपि तु **पूर्वां** कारणावस्थामविजहदत्यजदिति प्रकृतेरपि कर्तृत्वसंभावनात् । नापि सर्वात्मनोदासीनमपि तूत्तरावस्थाविशेषं **संस्पृशद्** आसादयदिति विकारस्यापि कर्तृत्वसंभावना । [b]) एवं च पूर्वापरावस्थोपाध्यवच्छिन्नमेकं वस्तु पूर्वावस्थानुगुण्येनोत्तरावस्थासादनोन्मुखं प्रतायमानरूपमिवाध्यवसीयमानं जायत इति धात्वर्थप्रत्ययार्थयोरानुगुण्यमासादयति । तथा च प्रकृतिविकारयोः सामानाधिकरण्यमुभयोरपि च कर्तृत्वमुपपद्यते ॥ ११८ ॥

यद्येवं सर्वत्रैवोभयोः कर्तृत्वं स्यादित्याशङ्क्याह ।

**सव्यापारतरः कश्चित् क्वचिद्धर्मः प्रतीयते ।**
**संसृज्यन्ते च भावानां भेदवत्योऽपि शक्तयः ॥ ११९ ॥**

---

(112) A तथा हि असङ्घो. A °तैकत्वप्रत्य°. I °च्यन्ते.

(113) I अतस्त्वं स. A °ष्मदर्थप्ररूढ°. A कर्तृत्वा°. D rep भाष्यकारोक्त ... प्रकृतेरेव कर्तृ.

(114) [a]) A न स्वयैव निष्पत्त्या जा°. I °स्था मपिजहे°. A प्रकृतेरेव क°. A °वना । नापि A °सीनोऽपि तू°. A °स्पृशन्नासादयन्निति. [b]) एवं पूर्वा°. A om. वस्तु. A प्रचीयमान रू°. A °प्रत्ययोपजन गुणमासा°. A यथैव.

(115) [a]) द्वयोरपि प्रकृतिविकृत्योरुक्तेन न्यायेनाभेदापत्त्या जनिसमन्वयसहत्वेऽपि कर्तृप्रत्ययोत्पत्तौ क्वचिद् विकारः सव्यापारः क्वचित् प्रकृतिरित्युक्तम्। एवमपि च विषयविभागेन 'जायते' इत्यत्र यथोक्तेन प्रकारेण द्वयोरपि कर्तृत्वमुपपादितम्। यतो भावानामन्यत्र भिन्ना अपि शक्तयः क्वचित् संसर्गमपि प्राप्नुवन्तीत्यर्थः। [b]) यद्वा सर्वत्रैव द्वयोरपि कर्तृत्वमेकस्य तु साक्षादिति प्रकर्षः **सव्यापारतरः** इत्युक्तः। प्रकृतिविकृत्योर्हि सामानाधिकरण्यान्यथानुपपत्त्या एकस्य जनिकर्तृत्वे नान्तरीयकमपरस्यापि तद्वेदितव्यम्। यो हि विधेयः स प्रधानभूतः प्रकर्षेण जनिव्यापारवान्, अन्यस्त्वनूद्यमानो गुणोऽप्रकृष्टव्यापारः॥ ११९॥

तथा च संसर्गः कर्तृशक्त्योर्यदि तर्हि संसर्गः त्वद्भवतीत्यत्र विकारावस्थाश्रयः पुरुषः कस्मान्न भवतीत्याशङ्क्याह।

**विपरीतार्थवृत्तित्वं पुरुषस्य विपर्यये।**
**गम्येत साधनं ह्यत्र सव्यापारं प्रतीयते॥ १२०॥**

(116) 'अत्वं त्वं सम्पद्यसे, त्वद्भवसि' इत्येवं युष्मदर्थाश्रयेऽत्र मध्यमे पुरुषे विवक्षितोऽर्थो न प्रतीयते अयुष्मदर्थः प्रकृतिः, युष्मदर्थो विकृतिरिति। अपि तु युष्मदर्थः प्रकृतिः सव्यापारा प्रत्ययोत्पत्ताविति तस्या अन्या विकृतिः प्रतीयेत। 'संपद्यसे' इति हि साधनं युष्मदर्थः सव्यापारं प्रतीयत इति तस्य फलवत्तया विकारान्तरमनुषज्येत। तथा च युष्मदर्थस्तद्विपरीतमयुष्मदर्थमात्रमापद्यत इति विज्ञायेत। तस्मादयुष्मदर्थस्य प्रकृतेः सम्पद्यमानत्वसंप्रत्ययार्थं प्रथम एवात्र पुरुषो न्याय्यः॥ १२०॥

विपरीतार्थवृत्तित्वमेव व्याचष्टे।

**त्वमन्यो भवसीत्येषा तत्र स्यात् परिकल्पना।**
**राज्ञि भृत्यत्वमापन्ने यथा तद्वद्गतिर्भवेत्॥ १२१॥**

(117) [a]) यथा 'राजन् अराजा सम्पद्यसे' इत्युक्ते राजार्थस्य प्रकृतेर्युष्मदर्थस्याख्यातपदेन प्रत्यायनात् सव्यापारस्य स्वार्थविपरीतभृत्यभावेन सम्पत्तिक्रियाकर्तृत्वं प्रतीयते तथात्र 'त्वद्भवसि' इत्युक्तेऽन्यावस्थासादने युष्मदर्थस्य कर्तृत्वावसायात् विवक्षितोऽर्थोऽयुष्मदर्थतापत्तिलक्षणो न प्रतीयेतेति तत्सम्प्रत्ययार्थं प्रथमपुरुषो ज्यायान्।

---

(115) [a]) I °रित्युक्तः. A °विभागो न जा°. A °त्वमुपादि°. [b]) B °परस्या अपि.
का. १२०. B °र्थप्रवृत्तित्वं. D °दस्याविप°. O गम्यते.
(116) A °दर्थाश्रयेन म°. A °क्षितेऽर्थे. A om. अपि तु. A तस्यान्या. A प्रतीयते संपद्यत इति. A फलवत्तायाः. A °नुषज्यते. A °रीतमस्मदर्थ°. I कस्मादयु°.
(117) [a]) A यथा राजा सम्पद्यसे. A प्रकृते. A °दभिधित्सन्नन्यद°.

न ह्यन्यदभिधित्सतान्यदभिधानीयम्। [b]) सुवर्णपिण्डः कुण्डले भवतः" इत्यत्र तु विकारस्यापि कर्तृत्वे कुण्डले सुवर्णपिण्डात्मतया परिणमेते इति विपरीतार्थवृत्तित्वं न भवति। भवतौ कर्तुरवश्यं विकारापेक्षाभावात्। च्विविषय एव हि कर्तुरवश्यं विकारान्तरावेशः कथ्यते। यस्मात् प्रकृतिविवक्षायां च्विर्विधीयते, स्वेनात्मना च सिद्धा प्रकृतिरिति विकाररूपमापद्यमाना सव्यापारा विशिष्टविकारनिवृत्तिप्रतिपत्तये विकारशब्दाभिधेया कर्त्री न्याय्या, च्व्यन्तस्य वृत्तौ हि च्व्यन्तस्य क्रियायोगे गतिसंज्ञाविधानात्। गतेः क्रियाविशेषणत्वात्। [c]) असत्त्ववचनत्वे कर्तृत्वायोगात् प्रकृतेरेव कर्त्रीत्वमुचितं विकाररूपगतिसंज्ञकच्व्यन्ताख्यविशेषणविशिष्टायां क्रियायामत्वद्भवति, सद्वीभवन्ति ब्राह्मणा इति वाक्ये तु च्व्यन्तस्य प्रकृतिविकृत्योः स्वशब्देनोपादानाद्यथाविवक्षं गुणप्रधानभावादुभयोः कर्तृत्वे नियमः। [d]) तथा हि प्रकृतेर्निजमेव तत्त्वं सम्पदौ व्यापृतं प्राधान्येन विवक्षितं भवति। कदाचित् समारोपितं विकाररूपम्। तद्यथा महद्भूतश्चन्द्रमा इत्यत्रामहदर्थप्रकृतिरूपस्य कर्तृत्वात् स एव महच्छब्देन विकारवाचिनाभिधीयत इति गौणत्वान्महदर्थस्यात्वं न भवतीत्युक्तम्। "महद्भूता ब्राह्मणी" इत्यत्र तु विकारस्यैव महदर्थस्य भवितृत्वेन कर्तृतया विवक्षितत्वात् समानाधिकरणलक्षणो भवत्येव पुंवद्भाव इत्युक्तम्॥ १२१ ॥

[e]) गतमानुषङ्गिकम्। इदमिदानीं वक्तव्यम्। 'प्रागन्यतः शक्तिलाभाद्' इत्यादिना स्वातन्त्र्यं व्याख्यातम्। तच्च प्रयोज्यकर्तुर्नोपपद्यते। स हि करणादिवत् प्रयोजकव्यापारे न्यग्भवन्न स्वतन्त्रः सत्यपि स्वव्यापारे स्वातन्त्र्ये। ततश्च स्वातन्त्र्यनिबन्धना कर्तृसंज्ञा न स्यादस्येति पाचयत्योदनं देवदत्तेन यज्ञदत्त इत्यत्र देवदत्तात् प्रयोज्यकर्तुः कर्तृतृतीया न स्यात्। तथा च वार्त्तिकम्—

"स्वतन्त्रस्य कर्तृसंज्ञायां हेतुमत्युपसंख्यानम्, अस्वतन्त्रत्वात्"

( Vā. on P. 1.4.54. )

इति। हेतुः प्रयोजकः, तद्वति प्रयोज्य इत्यर्थः। [f]) हेतुसंज्ञायास्त्वध्येषणं स्याद्विषयो यत्र नियुज्यमानस्यापि तत्प्रयोजकत्वं न विरुध्यत इति 'हेतुमति' इत्युपलक्षणं युक्तम्।

अत्र परिहारवार्तिकम्

'न वा स्वातन्त्र्यात्' ( Vā. on P. 1.4.54. )

---

[b]) A कर्तृत्वम्। कु°. A °क्षायां च्विर्वि°. A तेनात्मना. A °ररूपा साध्यमाना. A कर्ता न्याय्या. A om. च्व्यन्तस्य वृत्तौ हि. [c]) °त्ववचनेन. I कर्तृतायो°. A कर्तृत्वमुचि°. A °संज्ञत्वान्ताख्यवि°. A °यायाम्। त्वद्भवति।. A तु तस्य प्र°. A कर्तृत्वनियमः. [d]) I सतत्त्वं. B व्यावृत्तं. A °पितवि°. A °चिना विधी°. A भावित्वेन. [e]) °कर्तुस्तृतीया. [f]) °ध्येषणे स्या°. A °हारवाक्यं. I एवमवस्थिते.

इति । स्वव्यापारेऽस्त्येव प्रयोज्यस्य स्वातन्त्र्यमिति सिद्धा कर्तृसंज्ञा । नन्वेवं करणादीनामपि स्यात् । नैतदस्ति । तेषां यथास्वं करणादिसंज्ञाविधानात् । प्रयोज्यस्य तु न कदाचिदन्या संज्ञोक्तेति कर्तृसंज्ञैव । एवं स्थिते प्रयोजकायत्तत्वात् प्रयोज्यप्रवृत्तेः कथं स्वातन्त्र्यमित्याशङ्क्योपपादयति ।

**सम्भावनात् क्रियासिद्धौ कर्तृत्वेन समाश्रितः ।**
**क्रियायामात्मसाध्यायां साधनानां प्रयोजकः ॥ १२२ ॥**
**प्रयोगमात्रे न्यग्भावं स्वातन्त्र्यादेव निश्रितः ।**
**अविशिष्टो भवत्यन्यैः स्वतन्त्रैर्मुक्तसंशयैः ॥ १२३ ॥**

(118) [a]) यस्तावदप्रवृत्तक्रियः प्रयोज्यः सोऽनुमितक्रियासामर्थ्य एव प्रयुज्यते । अन्यथा प्रयोग एव न स्यात् । न ह्यशक्तः कस्यांचित् क्रियायां केनचिद् विनियुज्यते सचेतसा । ततश्चावधृतशक्तिः संभावितक्रियः कर्तैव स्वतन्त्रो विनियुज्यते । योऽपि **आत्मसाध्यायां क्रियायां** प्रवृत्तः सव्यापारः करणादिकारककलापं प्रयोजयन्नेव प्रवृत्तक्रियः सन् प्रयुज्यते विरामाशङ्कायां मा विरंसीदिति बुद्ध्या सोऽपि स्वतन्त्रः कर्तैव प्रयोज्यः स्वव्यापारे स्वातन्त्र्यादेव च **प्रयोगमात्रे** प्रयोजकप्रैषे **न्यग्भावम्** आयत्ततां **निश्रितः** प्राप्तः । [b]) क्रियासिद्धये हि प्रैषः । एवं च क्रिया सिध्यति यदि साधनान्तरविनियोगलक्षणं स्वातन्त्र्यं प्रयोज्यः प्रतिपद्यते नान्यथेति न प्रयोगेण स्वातन्त्र्यं विरुध्यते । विषयभेदाच्च प्रयोगे पारतन्त्र्यं स्वव्यापारे स्वातन्त्र्यमिति । उपाय एव च स्वव्यापारे स्वातन्त्र्यं प्रयोगे पारतन्त्र्यस्य । एवमनन्यप्रयोज्यतया स्वाधीनतया निश्चितैरपरैः समानः स्वतन्त्रः प्रयोज्यः सिद्धः । तदुक्तं वार्तिके ।

" इतरथा ह्यकुर्वत्यपि कारयतीति स्यात् । ( Vā. on P. 1.4.54. )
नाऽकुर्वतीति चेत् स्वतन्त्रः । ( Vā. on P. 1.4.54. )

इति । उदासीनस्यालसस्य । शक्तस्य प्रयोगानुपपत्तेः । सम्भावितस्वातन्त्र्य एव प्रयोज्य इत्यर्थः [c]) यद्येवं स्वतन्त्रस्य प्रयोजको हेतुरित्येव स्वव्यापारे स्वतन्त्राणा करणादीनामपि प्रयोजकस्य प्रयोज्यस्य कर्तुर्हेतुसंज्ञाप्रसङ्गः । भवतु को दोष इति चेत् ' हेतुमति ' इति तद्व्यापारे णिचूप्रसंगः । धातुनोक्तत्वात्तस्यायमदोष इति चेन्न, कर्मविषय एव प्रैषो

---

का. १२२. A संभावना क्रि°.

(118) [a]) BO °न्त्रो नियु°. A करणादिकारककार्यप्रयोजनमन्तरेवः. BI प्रवृत्तिक्रियः. A °कर्प्रपात्. A विनिश्रितः. [b]) A उपाये एव. A एवमन्य प्र°. A न कुर्वन्तीति चेत्. A °सीनस्याप्यस्याश°. [c]) B प्राधान्यस्य कर्तुः. A om. चेत् हेतुमतीति ... चेन्न कर्म. A अकर्मकत्वात् पिवयेषु करणादिविषयो नियोगो. A तत्प्रत्यय°. A °त्पद्यते. A °क्रियाभावनाभावो. A °दीनां प्रवगत्वम्.

धात्वर्थेऽन्तर्भवेत् फलार्थत्वात् कर्तृभावनाया धात्वर्थस्य कर्मणश्च तया संस्पर्शात् । अकर्मकधातुविषये तु करणादिविनियोगो वस्तुतः सन्नप्यनवधारित इति तत्प्रत्यायनाय णिजुत्पत्तेन । शब्दाद्विशिष्टसाधनक्रियाभावनामात्रं गम्यते । न तु करणादीनां कर्त्रा प्रेषणम् । [d]) किं च प्रयोज्यस्यापि हेतुसंज्ञायां तत्प्रयोजक इति स्वतन्त्रस्य प्रत्यवमर्शोऽनर्थकः । करणादिप्रयोजकव्यावृत्तये हि सः । तस्यापि तु करणादेः स्वव्यापारस्वातन्त्र्याश्रयेण प्रयोजकस्य हेतुसंज्ञायामनर्थकः प्रत्यवमर्शः । किं च हेतुसंज्ञैवानर्थिका । कर्तृमात्रस्य तस्य ' कर्तृगति णिच् ' इत्येवास्तु । तथा च ।

' भीस्म्योर्हेतुभये ' (P. 1. 3. 68.)
' भियोहेतुभये षुक् ' (P. 7. 3. 40.)
' बिभेतेर्हेतुभये '(P. 6. 1. 56.)

इत्यत्र ' कर्तृभये ' इति वचनेऽनिष्टं स्यात् । तस्मात् स्वतन्त्रस्य प्रयोजक इति करणादिप्रयोजकस्य हेतुसंज्ञाव्युदासे प्रयतनीयम् । [e]) अत्रोच्यते । तस्य प्रयोजक इति सर्वनाम्नानुभवकर्तृसंज्ञस्य स्वतन्त्रस्य परामर्शादिप्रतिलब्धकर्तृसंज्ञाना करणादीनां प्रयोजकस्य हेतुसंज्ञा न भवति । तथा हि स्वव्यापारे स्वतन्त्रत्वेऽपि करणादेः प्रधानव्यापारे पारतन्त्र्यात् कर्तृसंज्ञा न भवति । स्वतन्त्रश्रुतिसामर्थ्याद्धि प्रकृष्टं सामर्थ्यं विवक्षितम् । करणादीनां त्वनुकुर्वाणानां कारकत्वायोगात् तदन्यथानुपपत्त्यानुमीयमानं स्वव्यापारे स्वातन्त्र्यं यदि परं कारकसंज्ञायामुपयुज्येत । न तु कर्तृसंज्ञायाम्; प्रधानविनियोगेनाभिभूतत्वात् । प्रकृष्टस्य स्वातन्त्र्यस्याभावात् । ततश्च न ते कर्तरि सन्तः प्रेष्यन्ते । [f]) प्रयोज्यस्तु प्रयुक्तोऽपि साधनान्तरविनियोक्तृत्वलक्षणं प्रकृष्टं स्वाधीनत्वं नैव त्यजतीति सर्वथाऽसौ कर्तैव युज्यते । अत एवोक्तं " कर्तृत्वेन समाश्रितः " इति । भूतेन भाविना वा संभाव्यमानेन बुद्ध्याभिसंहितेन कर्तृत्वेनेति सिद्धमिष्टम् ॥ १२२, १२३ ॥

उक्तमिदं " प्रयोगमात्रे न्यग्भावं स्वातन्त्र्यादेव निश्रितः " इति । तदपि वा नास्तीत्याह ।

**निमित्तेभ्यः प्रवर्तन्ते सर्व एव स्वभूतये ।**
**अभिप्रायानुरोधोऽपि स्वार्थस्यैव प्रसिद्धये ॥ १२४ ॥**

---

[d]) A तच्छन्देन स्वातन्त्र्यस्य. I °पारे स्वा°. A °मात्रस्यैव तस्य. O तस्या. A °ऽनिष्ट स्यात्. [e]) A °नुभवात् कर्तृ°. A om. भवति. I ins. कारकत्वायोगात्तदन्यथानुपपत्त्यानुभवीत (after न). A °र्थ्यात्तु विप्रकृ°. [f]) A प्रकृष्टसाधानत्वं. A प्रयुज्यते. I बुद्धया समाहितेन. A न्यग्भावः. A निश्चित. BO संश्रित.

का. १२४. A °रोधेऽपि.

(119) [a]) स्वार्थलिप्सया सर्वः प्रवर्तमानः पराधीनतां प्रवृत्तौ नासादयतीति केवलं कस्यचित् प्रवृत्तिः कस्यचिदर्थसिद्ध्येऽप्यङ्गमित्येतावता भृत्यादेः स्वाम्याद्याशयानुवर्तनेन प्रयोज्यता कथ्यते। निर्वेशनिमित्ता हि भृत्यानां प्रवृत्तिः स्वार्थसाधनाया वीतरागाणामपि कारुण्यात् प्रवृत्तौ परार्थसम्पादनमेव स्वार्थः फलम्, इष्टलक्षणत्वात्तस्य। तदेतद् भाष्येऽभिहितम्—

" सर्व इमे स्वभूत्यर्थं यतन्ते। नेह कश्चित्
परोऽनुगृहीतव्य इति।" (M. Bhā. on P. 3. 1.26.)

इति। [b]) स्वभूत्यर्थं प्रवर्तमानेषु कः प्रयोज्यार्थ इति चोद्ये समाधानमप्युक्तम्—

" यदभिप्रायेषु सज्जन्ते " (M. Bhā. on P. 3. 1. 26.)

इति। प्रयोजकाभिप्रायः क्रियासम्पादनम्। तच्च स्वार्थफलाभिसंधानेन प्रवर्तमानोऽपि प्रयोज्यः साधयत्येव। एवं च कृत्वा

' हेतुमति च ' (P. 3. 1. 26.)

इत्यत्रोपसंख्यानानि प्रत्याख्यातानि।

' न वा सामान्यकृतत्वाद्धेतुतो ह्यविशिष्टम् ' (Vā on P. 3. 1. 26.)

इति। स्वरसप्रवृत्तित्वात् सूर्यस्य माहिष्मत्यामुद्गमनं पथिकस्याभिप्रेतं काकतालीयात् सम्पन्नमित्यभिप्रायानुवर्तनात् सूर्यः प्रयोज्यो भवतीत्यादि योज्यम्। तदाह वार्तिककारः—

' प्रवृत्तिरुभयत्रानपेक्ष्य ' (Vā. on P. 3.1.26.)

इति। [c]) मुक्तसंशयेऽपि प्रयोज्ये या प्रवृत्तिः सापि न प्रयोज्यस्य स्वार्थमपेक्ष्य, अपि त्वात्मन एवेत्यर्थः। ' कंसवधमाचष्टे ' इत्यादौ तु

' प्रत्यक्षमिव कंसादीन् '

इत्यादिना पूर्वमेव समर्थितम्। अचेतनविषयेऽपि तर्हि भिक्षा वासयति ' इत्यादौ वासाद्यानुकूल्यादभिप्रायाध्यारोपात् प्रयोजकत्वं समर्थनीयम्। एवं च योग्यतामात्रेण निमित्तमात्रं हेतुः प्रयोजक इत्युक्तं **निमित्तेभ्यः** इति। वार्तिकेऽप्युक्तम्—

---

(119) [a]) A नापादयति। केव°. A °त्यादिः स्वाभ्याद्याशया न प्रवर्तते इति न प्र°. A °धना। वीत°. A °मपि परोपकारात् प्रवृत्तेः. A फलदृष्टलक्ष°. [b]) A इति चोद्ये. A सज्जत इति. A °प्राया क्रिया सम्पादनान्तस्तदर्थः। फलाभि°. B कृर्ता. I चेत्तत्रोप°. A °कृद्धेतुतो ह्य°. A °मनं कस्याभिप्रे°. A °प्रायानुवर्णनात्. A om. योज्यम् ... नपेक्ष्य इति. [c]) A om. मुक्तसंशये ... कंसादीन् इत्यादि°. B वासयन्तीत्या°. A दासाद्यानुकूल्याभि°. A °कत्वसमर्थनाय. A om. च (after एवं). A °मात्रहेतु प्र°. A °युक्तम्। निमि°. A भिक्षाविपदर्शनादित्येवं सति न विचारः कर्तव्यः।

‘ हेतुनिर्देशश्च निमित्तमात्रम् भिक्षादिषु दर्शनात् ’
( Vā. on P. 3.1.26. )

इत्यवसितविचारः कर्ता ॥ १२४ ॥

इति भूतिराजतनयहेलाराजकृते प्रकीर्णप्रकाशे कर्त्रधिकारः ।

---

कर्तैव प्रयोजकः सन् हेतुरिति कर्तृविचारानन्तरं हेतुं विचारयति ।

**प्रेषणाध्येषणे कुर्वंस्तत्समर्थानि चाचरन् ।**
**कर्तैव विहितां शास्त्रे हेतुसंज्ञां प्रपद्यते ॥ १२५ ॥**

( 120 ) [a]) आज्ञापुरःसरा व्यापारणा **प्रेषणम्** , निकृष्टविषयो नियोग इत्यर्थः । यत्पुनरभ्यर्हितं व्यापारयति तदध्येषणम् । अभ्यर्हितविषयं प्रबोधनमित्यर्थः । **तत्समर्थानि** प्रयोज्यक्रियासम्पत्त्यनुकूलानि चेष्टितानि । अयमेव च मुख्यः प्रयोजकव्यापारो यत् प्रयोज्यक्रियासम्पत्तिसमर्थाचरणम् । व्यापकत्वाद् भिक्षादिष्वपि भावात् । अस्यैव निकृष्टोत्कृष्टविषयतया प्रेषणाध्येषणरूपेण प्रविभागः । तथा च गोबलीवर्दन्यायेन तद्विलक्षणं तत्समर्थाचरणं भिक्षाविषयमत्राभिप्रेतम् । [b]) व्यवहारभेदाद्भेदेनैषामुपादानम् । यथाभिप्रायानुविधानं प्रयोज्यत्वमुक्तं तथा स्वाभिप्रायप्रकाशनमपि प्रयोजकत्वमिति तत्समर्थाचरणमेव सर्वत्र प्रयोजकव्यापारः । ‘ **कर्तैव** ’ इति ।

‘ तत्प्रयोजको हेतुश्च ’ (P. 1.4.55.)

इति संज्ञासमावेशार्थं चकारं व्याचष्टे । असति चकारेऽत्रैकसंज्ञाधिकारात् कर्तृसंज्ञा न स्यादिति समावेशार्थोऽसौ । तदुक्तं वार्तिके ।

‘ गतिदिविहेतुमत्सु च ग्रहणम् ’

इति । [c]) **विहितां शास्त्रे** ’ इति । प्रदेशेऽस्यैव ग्रहणं यथा स्यादित्यर्थः । फलसाधनयोग्यः पदार्थो हि लौकिको हेतुर्द्रव्यादिविषयः । तस्य त्वयं विशेषः । क्रियाविषयत्वेन कारकं हेतुः प्रयोज्यप्रयोजकः । अत एव कारकत्वनिबन्धनः प्रेषणादिः स्वव्यापारोऽत्र निर्दिष्टः । तत्र

‘ हेतुमति च ’ ( P. 3.1.26. )

‘ भियो हेतुभये ’ ( P. 7.3.40. )

---

का. १२५. A °र्थानिवाच°.

( 120 ) [a]) A सज्ञापु°. I °अभ्यर्हन्तं. A °क्षादिष्वपि भवति । BI प्रैषाध्ये°. I तद्विचक्षणं. [b]) A भेदाभेदेनै°. A यथात्वमि°. A °शनं प्रयो°. B सति चका°. A तदत्रैक°. A कर्तृसंज्ञायां प्रयोज्यस्य ग्रहण. [c]) A स्वस्यैव. A तथा स्या°. A °योग्याः पदार्थाः. A तस्याप्ययं. A परिभाषितः.

इत्यत्र कृत्रिमस्य हेतोर्ग्रहणम्। तृतीयाविधौ तु

'हेतौ' (P. 2.3.23.)

इत्यत्र प्रयोजके कर्तृत्वादेव तृतीयासिद्धेर्लौकिकस्य हेतोर्ग्रहणम। पंचमीविधावपि

'अकर्तरि...' (P. 2.3.24.)

इति पारिभाषिकः पर्युदस्यते।

d)'लक्षणहेत्वोः क्रियायाः' (P. 3.2.126.)

इत्यत्रापि प्रयोज्यस्य कारकत्वात् क्रियायोगाव्यभिचाराद् विशेषणसामर्थ्याद् द्रव्यगुणक्रियाविषयत्वेन संभवव्यभिचाराल्लौकिक एव हेतुर्गृह्यते। तथा धात्वाधिकाराच्च। न हि धातुः साधनरूपे हेतौ वर्तते। एवं

हेतुहेतुमतोर्लिङ् (P. 3, 3. 156.)

इत्यत्रापि हेतोर्धात्वर्थविशेषणत्वात् साधनस्य च धात्वर्थत्वाभावात् लौकिक एव हेतुः।

'कृञो हेतुताच्छील्यानुलोम्येषु' (P. 3. 2. 20.)

इत्यत्रापि न प्रयोजको हेतुः। तत्र णिज्विधानात् कृञ इति च तिप्रहितस्य निर्देशात्। तेनात्र कृत्त्वात् प्राप्तस्य कर्तुः लौकिको हेतुर्विशेषणम्। e) तेन च विरोधाभावान्न निवर्त्यते कर्ता। योग्यतारूपेणैव च कृद्भिः कर्तुरभिधानान्निमित्तमात्रं हेतुरुपदीयमानो विशेषणं पुनः श्रुतेरवधारणं प्रकल्पयति 'हेतुरेव' इति। तेनाव्यभिचारि कारणं विद्यादि यशःप्रभृतिषु प्रतिपादितं भवति। एते चात्र हेत्वादयः कर्तृविशेषप्रतीतिसामर्थ्याद् गम्यमानाः परम्परया पदार्था एव। अन्यथा वाक्यावस्थायां प्रतीयमानाः पदार्थाधिकस्यान्वाख्यानस्य निमित्तभावं नोपेयुः। इह

f)प्रैषातिसर्ग .... (P. 3. 3. 163.)

इत्यादिसूत्रे चकारेण समुच्चितो लोट् इति प्रैषे णिज्लोटोर्विधानाद्विकल्पप्रसङ्ग इति भाष्ये चोदितम्।

पृच्छतु मा भवान्, अनुयुङ्क्तां मा भवानित्यत्र णिच् कस्मान्न भवति।

(M. Bhā. on P. 3. 1. 26.)

इति। 'मा भवान्' इत्यात्मनिर्देशेन प्रयोजकाश्रितं प्रैषं प्रदर्शयन् णिचः प्राप्तिं परिपुष्णाति। अत्र परिहारो भाष्येऽभिहितः।

'अकर्तृत्वात्' (M. Bhā. on P. 3.1.26.)

---

d) A °धात्वर्थविशेषात्. B कर्तृणिजुविधा°. A °हितनि°. A कृत्वा प्रा°. e) A °चारकारणं°. A विद्यायशः. f) A °त्यादिसूत्रकारेण. A णिल्लोटो°. A om. माभवान्. (before आत्मनि°.) A om. तद् व्यापारे° ... °प्रवृत्तस्य.

इति । स्वतन्त्रस्य कर्तुः प्रयोजको हि हेतुरिति तद्व्यापारे णिज् विधीयमानोऽत्र पृच्छिक्रियायामप्रवृत्तस्य तस्य कर्तृत्वाभावात्तत्प्रयोजकस्य हेतुसंज्ञाभावात्तद्व्यापारे प्रैषे णिज् न भवतीत्यर्थः । g) चोदकस्तु कालादेः प्रश्नाद्यशक्तस्याप्रयोज्यत्वात् प्रवृत्तस्य च नियोगानर्थक्यात् संभावितक्रियत्वेन कर्तुः प्रेपणमिदमित्याह—

" किं च भोः वर्तमानाया एव क्रियायाः कर्त्रा भवितव्यम्, न भूतभविष्यत्कालायाः " (M. Bhā on P. 3.1.26.)

इति । अत्रोत्तरम् ।

' अभिसंबन्धस्तत्र क्रियते । ' (M. Bhā on P. 3.1.26.)

इति । सामर्थ्यसम्भावितो भूतभविष्यत्क्रियाविपये क्रियाकारकभावः । तत्र च लोड्विपये प्रयोज्यक्रियैवैका सम्भाव्यत इति ' क्रियाया कर्ता भव ' इति । न त्वपरः प्रयोज्यव्यापारविपयः प्रयोजकव्यापारोऽस्ति । h) अनन्तरं भाष्यम् ।

' यच्च कर्ता कथं कर्तृप्रत्ययेनोच्यते ' (M.Bhā. on 3.1.26.)

इति । अत्रोत्तरम् ।

' कथमस्मिन्नपृच्छत्ययं पृच्छिर्वर्तते । ' (M. Bhā. on P. 3.1.26.)

इति । तत् उक्तम् ।

' अभिसंबन्धस्तत्र क्रियते, इमा क्रियां कुर्विति । ' (M. Bhā. on P. 3.1.26.)

इति । अनन्तरमुक्तम् ।

कर्त्रापि तर्ह्यभिसंबन्धः क्रियते । अस्यां क्रियायां कर्ता भवेति । ' (M. Bhā. on P. 3.1.26.)

इति । तथा च यथात्र संप्रत्यपृच्छत्यपि पृच्छिक्रियाभिसन्धानेन पृच्छिर्धातुर्वर्तते तथा तत्कर्त्राप्यभिसंबन्धात् कर्तृप्रत्ययो लोट् क्रियत इति कर्त्रापि तर्ह्यभिसंबन्धः क्रियत इत्युक्तम् । i) एवं च वदता भाष्यकारेण सम्प्रत्यकर्तृत्वादत्र णिज् न भवतीत्युक्तं भवति । तथा हि नवमेवास्याधीयमानं कर्तृत्वं न तु विद्यमानम् । क्रियायां कर्ता भवेति हि प्रेष्यते, न तु कर्तैव सन् । तेन कर्तुः सतः प्रैषः प्रयोजकसमवायी णिज्विपयः, लोट्प्रत्ययस्तु कर्त्रादिषु विधीयते । धात्वर्थोपाधिस्तु तस्य प्रैपो द्योत्यः । स च न धातु-

g) BIO काष्ठादेः A °शक्तस्य प्रयो°. A °मित्याशङ्क्याह. ' वर्तमानकालायाः ' is the text found in the Mahābhāsya itself, but no manuscript or A gives it. A °सामर्थ्यं संभा°. A कर्ता भवति. h) A कथं प्रत्यथेन. A कथमस्ति न पृच्छति वर्तते. A तदुक्तं. i) A एवं वदता. A °मानकर्तृ°. A भवेति प्रे°. I कर्त्रैव. A प्रयोजकसमवा°. A om. णिज्विषय. A कर्तैव. A om. न (before धातु°) A °त्रावतिष्ठते.

प्रत्ययवाच्यः, अपि तु सामर्थ्याद् वक्तैव प्रयोजकोऽवतिष्ठत इति तद्धर्मः प्रैपोऽवतिष्ठमानो न धातुप्रत्ययेन नियतकालतयात्रावच्छिद्यते। तथा च सम्प्रत्यपृच्छत्यपि पृच्छत्विति प्रयोगः। [j]) णिचस्तु प्रैपो वाच्य इति शब्दोपादानत्वादभिधेयधर्मो भवन् नियतकालाभिधायिना प्रत्ययेन लडादिना कालनियमेनावच्छिद्यते। शब्देन हि ण्यन्तादुत्पन्नेन कर्तृवाचिना लकारेण तृजादिना चोपात्तो यः कर्ता प्रयोजकस्तस्य संबन्धी प्रतीयतेऽसावित्यभिधेयधर्मः। द्विविधो ह्यर्थः शास्त्रेऽन्वाख्यानाङ्गभावेनोपादीयते। कश्चित् प्रयोक्तृधर्मो यथा वीप्सावाधासूयाकुत्सनादिः। अन्यः प्रतिपाद्यधर्मः। तत्रायं लोड्विषयः प्रैप आवाधादिवत् प्रयोक्तृधर्म इत्यभिधेयत्वाद् व्यावृत्तः॥ १२५॥

तदेतत् तात्पर्येण प्रतिपादयति।

**द्रव्यमात्रस्य तु प्रैपे पृच्छ्यादेर्लोड् विधीयते।**
**सक्रियस्य प्रयोगस्तु यदा स विषयो णिचः॥ १२६॥**

(121) [a]) अप्रवृत्तक्रियस्य **द्रव्यमात्रस्य** अप्रतिलब्धकर्तृभावस्य कर्तृत्वार्थ एव **प्रैपे** द्योत्ये लोडुपदिश्यते। पृच्छ्यनुयुज्यादेर्धातोः परः प्रत्ययः कर्त्रादिकारके वाच्ये। प्रवृत्तक्रियस्य तु विरामाशङ्कायां मा विरंसीदित्यभिसंधाय कर्तुरेव स्वतन्त्रस्य प्रयोजकहेतुव्यापारे णिज् वाचक उपदिश्यते। प्रत्ययार्थविशेषणपक्षो हि 'हेतुमति च' इत्यत्र सिद्धान्तितः। तथा च वार्तिकम्।

'हेतुमतीति कारकोपादानं प्रत्ययपरिग्रहार्थम्।'

(Vā on P. 3.1.26.)

इति। [b]) तदेवं णिज्लोटोर्विभक्त एव विषयः लौकिकाच्छब्दप्रयोगात् प्रैपभेदस्यात्रावधारणात्। णिज्विषयस्य प्रैपस्याभिधेयधर्मत्वेन णिज्वाच्यतया च तद्धर्मभेदाल्लोड्विषयस्य तु द्योत्यत्वेन प्रयोक्तृधर्मत्वेन च भेदात्। अत एव तुशब्दद्वयेन परस्परव्यतिरेकोऽयं द्योत्यते। द्वितीयस्तुशब्दः पूर्वस्मादपकृष्य सक्रियस्येत्यनेन सम्बन्धनीयः। पृच्छतु मा भवानित्यादौ न प्रैपकर्तुर्वाचकः कश्चिद् विद्यते। केवलमुच्चारयितैव कर्ता सामर्थ्यात् प्रतीयते इत्यभिधेयधर्मोऽत्र प्रैपो न भवति। नापि स्वरूपेणाभिधेयः लोटा तदनभिधानात् लोडन्तशब्दोच्चारणाद्धि प्रयोक्तृधर्मत्वेनावाधादिवत् प्रतीयते प्रैपो न त्वस्य वाचकः कश्चिदस्ति। [c])यदि तर्हि एवमनयोः प्रैपयोः स्फुटो भेदः कथं भाष्ये चोदितम्—

---

[j]) तृजादिनोपा°. A शास्त्रे व्याख्या°. A °नोपाधीयते. A वीप्साक्रोहेर्ष्यासुभाकु°. A °धेयधर्म°. का. १२६. B पृच्छादे.

(121) [a]) A अप्रवृत्त. A °विरंसीरि°. [b]) A om. °लोटोर्विभक्त ... ऽभिधेयधर्मत्वेन. A लोड्वाच्यतया धर्मभेदात्. A द्योतकत्वेन, A om. °व्यतिरेकोऽयं ... द्वितीयस्तु. I पूर्वमप°. A om. °धर्मोऽत्त प्रैपो ... लोडन्तशब्दोच्चारणाद्धि. A ins मात्रप्रैपात् (before प्रयोक्तृ°).

'इह कस्मान्न णिज् भवति पृच्छतु मा भवान्'

(M. Bhā on P. 3.1.26.)

इति। लोकव्यवहाराधिगम्योऽयं विभागः, शास्त्रेऽन्वाख्यानविभागो न कृत इति प्रैषमात्रं समानं मत्वा पूर्वपक्षः ॥ १२६ ॥

गतमेतत्। इह प्रयोज्यस्य प्रैपणाध्येषणादिना सर्वस्य प्रयोजकव्यापारेणाप्यमानत्वात् कर्मसंज्ञाप्रसङ्ग इत्याशङ्क्याह।

**गुणक्रियायां स्वातन्त्र्यात् प्रेषणे कर्मतां गतः।**
**नियमात् कर्मसंज्ञायाः स्वधर्मेणाभिधीयते ॥ १२७ ॥**

(122) [a]) स्वतन्त्रतामपरित्यजन्नेव प्रयोज्यः प्रयोजकव्यापारे पाराधीन्यं प्रतिपद्यते। न ह्यस्य प्रयोजकेन स्वातन्त्र्यखण्डना क्रियत इत्युक्तम्। इतरथा ह्यकुर्वत्यपि कारयतीति स्यादिति। तथा च प्रैषेऽपि स्वव्यापारे स्वातन्त्र्यात् कर्तृसंज्ञा भवत्येव। कर्मसंज्ञा तु प्रैषेणाप्यमानत्वेन प्राप्ता

'गतिबुद्धि...' (P. 1.4.52.)

इत्यादिना नियमिता। गत्यादिधातुविषय एव प्रयोज्यः कर्मसंज्ञो नान्यत्रेति पाचयत्योदनं देवदत्तेनेत्यादौ **स्वधर्मेण** कर्तृत्वेन प्रयोज्यः **अभिधीयते** इत्यर्थः। [b]) ननु प्रेषेऽपि स्वातन्त्र्यस्यानिवृत्तौ कर्तृसंज्ञैव परत्वात् स्यादिति कथं गतिबुद्धीत्यादिनियमः कथ्यते। कर्तृसंज्ञाप्रसङ्गे हि कर्मसंज्ञा आरभ्यत इति विध्यर्थता स्यात्। अत्रोच्यते–इह गुणप्रधानभूतक्रियाद्वयविषयशक्तिद्वयविषये प्रधानशक्तिरेव स्वकार्यं प्रयुङ्क्ते न गुणशक्तिरिति प्रागेव प्रतिपादितम्। तत्र धातुवाच्यः प्रयोज्यव्यापारो ण्यर्थविशेषणत्वादप्रधानं प्रयोजकव्यापारस्तु णिज्वाच्यः प्रधानम्। प्रकृत्यर्थावच्छिन्नत्वाद्धि प्रत्ययार्थः सर्वत्रैव प्रधानम्, प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत इति। अतश्चात्र प्रयोजकव्यापारस्य प्राधान्यात् तदपेक्षया कर्मशक्तिरेव स्वकार्यं प्रापयति, न तु प्रयोज्यव्यापारविषया कर्तृशक्तिः। [c]) तद्यथा-ओदनस्य विक्लित्तौ स्वातन्त्र्येऽपि न कर्तृसंज्ञा, अपि तु विक्लेदनेन देवदत्तव्यापारेणेप्सिततमत्वात् कर्मसंज्ञैव पाचयत्योदनमिति। तदेवमत्रोभयप्रसङ्गाभावे विप्रतिषेधाभावात् कर्तृसंज्ञाप्रत्प्या सिद्धैव गत्यादिविषयेऽपि कर्मसंज्ञेति नियमार्थ आरंभः। पचत्यादिविषये

[c]) The actual passage in the M. Bhā is: पृच्छतु मा भवान् अनुयुङ्क्ता मा भवान् इत्यत्र णिच् कस्मान्न भवति. A °हारमधिगम्याऽयं. A om. शास्त्रेऽन्वाख्यानविभागो न.

(122) [a]) A स्वतन्त्र नाम परि°. A ह्यकुर्वन्नपि. I °षेणोच्यमान°. A° मानत्वात् गति°. A °सञ्ज्ञोना°. [b]) A om. जपि स्वातन्त्र्यस्य ... प्रधानशक्तिः. A कार्य प्र°. I सा तु वाच्यः. A तदपेक्ष्य. BI तदपेक्षा. B प्रतिपादयति. [c]) A तथा ओ°. I °भावेऽपि प्रति°. A ins. तथा च. (before पचत्या°). B नियमो न प्र°. B अवसारितेः. °परिसारिते, A गुणक्रियायाः.

नियमेन प्रधानकार्ये प्रसारिते निष्प्रतिपक्षं गुणक्रिया स्वातन्त्र्यं स्वकार्यं कर्तृसंज्ञां प्रवर्तयत्येवेति सिद्धम् ॥ १२७ ॥

प्रयोजको हेतुरित्युक्तम्। कर्मणश्चापि फलभूतस्य क्रियां प्रत्यस्त्येव प्रयोजकत्वमिति तस्यापि हेतुत्वप्रसङ्ग इत्याशङ्क्य हेतुकर्मणोर्भेदं दर्शयति ।

**क्रियायाः प्रेरकं कर्म हेतुः कर्तुःप्रयोजकः ।**
**कर्मार्था च क्रियोत्पत्तिः संस्कारप्रतिपत्तिभिः॥ १२८ ॥**

( 123 ) निर्वृत्तिविकारप्रतिपत्तिभिर्यथाक्रमं निर्वर्त्यादित्रिविधकर्मसम्पादकत्वात् क्रियाफलं कर्मात्मसम्पत्त्यर्थं क्रियां प्रयुङ्क्ते । हेतुः पुनः क्रियार्थी साधनविनियोगे कर्तारं प्रयुङ्क्ते, न तु साक्षात् क्रियाम्। तत्परिपोषाय हि कर्तुः प्रवृत्तिः । तस्य कर्तुः प्रयोजक इति वचनात्, इति भिन्नविषयत्वाद्धेतुकर्मणोः प्रयोजकत्वस्य स्वरूपभेदः स्फुट इत्यर्थः । 'च' शब्दो हेतौ । यस्मादुत्पत्त्यादिभिरुपकारात् क्रिया **कर्मार्था** ततः कर्म क्रियायाः प्रयोजकम्। यद्धि यदर्थं तत्तस्य प्रयोजकमिति व्यपदिश्यते । तदुद्देशेन तत्प्रवृत्तेः। कारकान्तराणि तु क्रियार्थानि न तु तदर्था क्रियेति न तानि तस्याः प्रयोजकानि । न हि करणाद्यर्थं क्रियाप्रवृत्तिः। उपायमात्रं हि तत । तदयमवसितविचारो हेतुः ॥१२८॥

इति भूतिराजतनयहेलाराजकृते प्रकीर्णप्रकाशे साधनसमुद्देशे हेत्वधिकारः ॥

---

विभक्तिविधानक्रमेण साधनानां विचारे तृतीयार्थे कर्तरि निर्णीते चतुर्थ्यर्थं सम्प्रदानं विचारयितुमाह ।

**अनिराकरणात् कर्तुस्त्यागाङ्गं कर्मणेप्सितम् ।**
**प्रेरणानुमतिभ्यां वा लभते सम्प्रदानताम् ॥ १२९ ॥**

124 ) [a] ) अन्वर्थत्वात् सम्प्रदानशब्दस्य '**त्यागाङ्गम्**' इति लक्षणलाभः। त्यागो दीयमानस्य स्वत्वनिवृत्त्या परस्वत्वापादनम्। तत्र चाङ्गं निमित्तं पाण्याद्यपि

---

का. १२८. I कर्मस्था.

( 123 ) A निर्वृतिवि° A त्रिविधं कर्म सम्प°. I कर्मसंवादक°. A साक्षात् क्रिया. A तत्परिशेषाय. A °वचनाद्भिन्न°. A स्वशब्दो. A यद् यदर्थं. I कारणान्तराणि. B °तदर्थानि. A om. क्रियाप्रवृत्तिः। उपायमात्रं हि तत्। तदय.

का. १२९. I प्रेषणानु°.

( 124;) [a] ) A ins. दानं ( after त्यागो ). A om. पाण्याद्यपि ... कर्त्राप्तुमिष्टम्. A लक्षणात् परिग्रह एव त्यागः कथं°.

भवतीत्याह— **कर्मणेप्सितम्** इति । यत् त्यज्यमानं कर्म तेन करणभूतेन प्रारंभ एव कर्त्राप्तुमिष्टमित्यर्थः । तथा च

'कर्मणा यमभिप्रैति' (P. 1.4.32.)

इति लक्षणपरिग्रहः । [b]) तदेवविधं त्यागाङ्गं कथं कारकविशेषरूपां सम्प्रदानतां लभत इत्याशङ्क्य कारकत्वनिबन्धनं व्यापारं क्रियासिद्धौ निर्दिशति **अनिराकरणाद्** इत्यादिना । 'उपाध्यायाय गां ददाति' इत्यादौ त्यज्यमानं कर्म गवाद्युपाध्यायादिना संबध्यते, तदभिप्रायेणैव त्यागात् । स चोपाध्यायस्तदभिसंबध्यमानं न निराकरोति, नापि तत्त्यक्तुः 'मा त्याक्षीः' इति निराकरणं विधत्ते । यदि हि निराकुर्यात् त्याग एव न सम्पद्येत । परस्वत्वापत्तिपर्यन्तत्वात्तस्य । अनुमन्यते च दीयमानम् । तथा दीयमानं न निराकरोति बल्यादि देवतादीति तदपि क्रियाङ्गम् । [c]) याञ्चापूर्वके च दाने **प्रेरणम्** अभ्यर्थनया दाने प्रवर्तनमपि सम्प्रदानव्यापारः । तथा च त्यागोपकारित्वात् त्यागाङ्गं भवत्येव कारकं सम्प्रदानम् । ननु च दानस्य तदर्थत्वात् तादर्थ्ये चतुर्थीप्रयोगात् किमर्थं सम्प्रदानसंज्ञा । नैतन्न्याय्यम् । दानक्रियार्थं हि सम्प्रदानम्, न तु दानक्रिया तदर्था, कारकाणा क्रियार्थत्वात् सम्प्रदानार्थं तु दीयमानं कर्मेति वाक्यार्थभूताया दानक्रियाया अतादर्थ्यात् तादर्थ्ये चतुर्थ्या अप्राप्तौ तदर्था सम्प्रदानसंज्ञा न्याय्या । [d]) 'रजकस्य वस्त्रं ददाति,' 'घ्नतः पृष्ठं ददाति' इत्यादौ तु ददात्यर्थो नास्ति । त्यागो हि सः । तेन च हानात्मकेन ममताविच्छेदस्याक्षेपादेव परोपयोगाभिसंधिना परस्वत्वापादनमपि स्वीकृतम् । अत्र च तदभाव इति गौणोऽयं ददातेः प्रयोगः । देवताविषये तु दाने दातुस्तत्स्वामिकत्वसङ्कल्पो विद्यते एव । एवम् 'अरोचकिनेऽन्नं ददाति' इत्यादौ उपयोगाभावस्तु न शाब्दः। [e]) न शूद्राय मतिं दद्यादित्यत्रापि मतिसंतानस्यापक्रामतोऽस्त्येव परोपयोगः । तथा च 'उपाध्यायादागमयति' इत्यध्ययनसंतानस्यापक्रामतो भवत्यपादानमुपाध्यायः मतिसंतानस्यैकदेशस्त्यज्यमान इति स्वत्वनिवृत्त्यङ्गपरस्वत्वापादनलक्षणो मुख्य एवात्र ददात्यर्थः । अन्ये तु मतेः दातृसंबन्धानवगमाद्गौण इत्याहुः । "कन्यां ददाति" इति जन्यजनकभावाव्यावृत्तावपि स्वस्वामिसंबन्धस्य निवृत्तेर्मुख्य

---

[b]) A °विशेषरूपं लभते. A om. उपाध्यायाय ... संबध्यते. A ins. उच्यते ( before तदभिप्रायेणैव ). A ins. तदेवविध त्यागाङ्गं. (before स च° ). A क्रियते ( for विधत्ते ). A om. न. ( before सम्पद्येत ). A °करोति । बल्या. A °तादीनि. A तदविक्रियायां. [c]) A वापूर्वकेऽत्रदाने. A °भ्यर्थतया. A प्रवर्तमानमपि. I त्यागाङ्गोप°. A कारके स°. A तदर्थं. E om. दीयमानं ( after तु ). E अतादर्थ्यं. A तदर्थान्याय्या. [d]) I °तीत्यत्र. A तदर्थो. A यो हिंसते न च हाना° °तेन वचनात्मकेन. A परोपकारत्वोपयोगाभिसंबन्धेन. E °गादिसंबन्धिना. A ins. तत् (before देवता°). A दातुः अ°. A °भावस्तु शानच्. [e]) A om. न ( before शद्रा° ). A ददाति. A °विवृत्त्यपरत्व°. A मुख्य एव द°. A दानसंब°. A °कमावा व्यापकत्वादपि.

एव ददात्यर्थः [f]) "खण्डिकोपाध्यायस्तस्मै चपेटां ददाति" इत्यादौ वस्तुतोऽसत्यपि चपेटादिस्वाम्ये तदुपकारितया दातुः स्वामित्वाभिसंधिरस्त्येव। यद्यपि प्रतिकूलरूपत्वाच्चपेटायास्तदानीमुपयोगो नास्ति तथापि फलाद्द्वारेणास्त्येव परोपयोगित्वम्। चपेटासहत्वे शास्त्राभ्यासयोग्यत्वात् फलावाप्तेः। 'मृजिरस्माय विशेषेणोपदिष्टः' (M. Bhā on Vā on P.1.1.1.) इति तादर्थ्ये चतुर्थी। अविशेषेण गणे पठितो मृजिर्मार्जकशब्दार्थोऽपि भवतीत्यर्थः॥ १२९॥

तदेवं प्रथमं सम्प्रदानं व्याख्यातम्। इदानीमुत्तरं व्याख्यातुमाह।

**हेतुत्वे कर्मसंज्ञायां शेषत्वे वापि कारकम्।**
**रुच्यर्थादिषु शास्त्रेण सम्प्रदानाख्यमुच्यते॥ १३०॥**

(125) [a]) यथा संज्ञान्तरपूर्वकं कर्म प्रागुक्तं तथेदमपि संम्प्रदानमन्यपूर्वकं शास्त्रेण 'रुच्यर्थानां प्रीयमाणः' (P. 1.4.33.)

इत्यादिना व्याख्यायते। तथा हि 'देवदत्ताय रोचते मोदकः' इत्यत्रान्यकर्तृकोऽभिलाषो रुच्यर्थ इत्यभिलाषविषयभावमापद्यमानं मोदकं देवदत्तः प्रयुङ्क्ते, लौल्यात्तदानुगुण्यमाचरतीति हेतुसंज्ञायां प्रयोजकस्य देवदत्तस्य प्राप्तायां सम्प्रदानसंज्ञा कथ्यते। तथा च हेतुसंज्ञाबाधे णिचोऽभावाद्धेतुसमवायिन्या द्वितीयस्याः क्रियाया अप्रतीतेर्मोदकः स्वक्रियाया धातुवाच्यायां कर्ता भवति न कर्म। रोचते अभिलाषविषयभावमापद्यत इत्यर्थः। [b]) हेतुसंज्ञासनियुक्तायाः कर्तृसंज्ञाया अपि देवदत्तस्य बाधनात् कर्तुः क्रिययेप्सिततमत्वाभावात्। स्वातन्त्र्योपलक्षणायामपि कर्तृश्रुतौ सार्थाद्धीयत इति कर्मणि लकारसमर्थनार्थमत्र मोदकस्य कर्मसंज्ञा न भवति। यत्र हि शब्दोपात्तायां क्रियायां स्वातन्त्र्यं प्रतीयते तत्र भवेत्तदाश्रयं कर्मत्वम्। यथा हीयत इति हाने शब्दोपात्ते सार्थस्येति तदाश्रया पथिकस्य कर्मसंज्ञा। इह तु शब्दोपात्तायां मोदकक्रियायां रोचत इत्यस्मान्न देवदत्तस्य स्वातन्त्र्यं प्रतीयते, शब्दव्यापारानपेक्षाया तु वास्तवस्वातन्त्र्यस्य कारकमात्रविषयत्वात् कर्तृश्रुतिरनर्थिका स्यात्। [c]) यदा तु देवदत्ताय रोचते मोदक इत्ययमर्थो देवदत्तं

---

[f]) A °भ्यासयोगत्वात्. A फलाव्याप्तेः. BIEO तादर्थ्यंच°. A गणप. B °पाठते. A भविष्यतीत्यर्थः.

(125) [a]) B °न्यपूर्वं शा°. A व्याख्यातम्. I इत्यन्यक°. A °काभिली°. B रुचेरर्थ. A °संज्ञाभावे°. A याश्च प्र°. A ins. मोदकः. and om. अभिलाप ... इत्यर्थः (after रोचते). [b]) A om. कर्मणि ... स्वातन्त्र्य. A ज्ञाने (for हाने). A गोऽर्थस्येति. A °श्रयावधिकस्य. हेतुशब्दो°. I °कस्य क्रि°. A om. शब्द व्यापारानपेक्षायां ... वास्तव. [c]) A°णयति तथा°. A इति सज्ञिविशे°. I om. प्राप्तायां. A शंस्यमा°.:A °संज्ञः प्राप्तो. A °ख्याने वा. A ज्ञानेनाप्य°. I °संज्ञा क°. B होत्यादीना. B °ज्ञापनवाचित्वात्. I संज्ञिनिवि°.

मोदकः प्रीणयतीति, तथा च प्रीयमाण इति विशेषणं तदा कर्मसंज्ञायां प्राप्तायां सम्प्रदानसंज्ञारंभः। धातोरर्थान्तरे हि वृत्तौ सकर्मकत्वम्। एवं 'देवदत्ताय श्लाघते' इति गुणोत्कर्षेण देवदत्तः शस्यमानो गुणवत्तया तत्समर्थाचरणादध्यारोपितप्रयोजकभावो हेतुसंज्ञां प्राप्तो गुणाख्यानेन वा ज्ञापयितुमिष्टो ज्ञापनेनाप्यमानत्वात् कर्मसज्ञ इति

'श्लाघह्नुङ्' (P. 1.4.34.)

इत्यादिना सम्प्रदानसंज्ञः कथ्यते। एवं ह्नौतिप्रभृतीना यथायोगं वाच्यम्। ह्नौतिप्रभृतयो ह्यत्र स्वार्थोपसर्जनज्ञापनवचनत्वात् सकर्मकाः। तथा च ज्ञीप्स्यमान इति संज्ञिविशेषणमुपात्तम्। [d]) 'देवदत्ताय शतं धारयति' इति स्वरूपेऽवतिष्ठमानं शतमवस्थापयत्यधमर्णो धारयति। अत्रोत्तमर्णो देवदत्तो दानक्रियाद्वारेण निमित्तं धारणस्य। यतोऽसौ ददाति शतं न च तत्र ददातिक्रिया श्रूयते इत्यश्रूमाणक्रियाविषयेऽत्र कारकशेषे षष्ठयां प्राप्तायां

'धारेरुत्तमर्णः' (P. 1.4.35.)

इति सम्प्रदानसंज्ञा। यथासंभवं हि हेत्वादित्रयं प्राप्तमुच्यते न तु प्रत्येकम्। 'पुष्पेभ्यः स्पृहयति' इति पुष्पाणामीप्सिततमत्वात् कर्मसंज्ञाप्रसङ्ग उक्तः। द्रुह्यादौ तु कर्मसंज्ञाप्रसङ्गः। द्रोहस्यापकारत्वात् तदर्थाः सकर्मकाः। एवमीर्ष्यासूयार्था अपि। [e]) 'देवदत्ताय राध्यति, ईक्षते इति तु दैवं पर्यालोचयन्तं गणकं देवदत्तः प्रयुङ्क्ते इति हेतुसंज्ञायां प्राप्तायां

'राधीक्ष्योः' (P. 1.4.39.)

इति सम्प्रदानता। 'देवदत्ताय गां प्रतिशृणोति, आशृणोति' इत्यत्र तु देवदत्तो याच्ञया गां प्रतिजानानं प्रयुङ्क्ते इति हेतुसंज्ञाया प्राप्ताया

'प्रत्याङ्भ्यां श्रुवः' (P. 1.4.40.)

इति सम्प्रदानता। पूर्वस्य हि धात्वर्थस्य याचनलक्षणस्य देवदत्तः कर्ता भवन् प्रतिश्रवेऽङ्गीकारे प्रयोजको भवति। 'होत्रेऽनुगृणाति, प्रतिगृणाति' इत्यत्रापि 'होतारं शंसनेन प्रोत्साहयति' इति होतुः कर्मसंज्ञाप्रसङ्गे

'अनुप्रतिगृणश्च' (P. 1.4.41.)

इति सम्प्रदानता। [f]) 'शताय परिक्रीतोऽनुब्रूहि' इति साधकतमस्य परिक्रयणे नियतकालस्वीकारे सम्प्रदानता विकल्पेनोक्ता। तत्र रुच्यर्थादिष्विति आदिशब्दोपात्तस्य

---

[d]) A °संभवमिति. A हेतु त्वादि°. [e]) B देवदत्तं पर्यालो°. A om. आशृणोति. A प्रतिज्ञानात्; I प्रतिजानानः. B. E. O. प्रतिजानाना. A याचनफलस्य. B अनुगृह्णाति, प्रतिगृह्णाति. A शसिता. A हेतुकर्मसंज्ञा°. [f]) ·A कर्मसंज्ञा°. A °शेषाविव°. B om. सर्वत्रैव. A °स्वाश्रयेण. A णनादकथि°, A कर्मणाभिप्रै°, A रूच्यर्थेति°, A °मावाच्च शब्द, :A शाल्राय लौ°, A om. सम्प्रदानं,

सुज्ञानत्वात् करणसंज्ञाप्रसङ्गो नोक्तः। विशेषविवक्षाया अभावे चात्र सर्वत्रैव क्रियानिमित्तत्वमात्राश्रयेण शेषत्वे प्राप्ते सम्प्रदानतोदाहार्या। दुह्यादिपरिगणनाद्धि अकथितकर्मतात्र नास्ति। ननु च पूर्वमपि सम्प्रदानशास्त्रेणैवोक्तं

'कर्मणा यमभिप्रैति' (P. 1 4 32.)

इति। तत्कथमत्र शास्त्रेणेति विशेष्यभणितिः। उच्यते। अन्वर्थत्वाद् सम्प्रदानशब्दस्य लौकिक एव सम्प्रदानार्थः पूर्वमुक्तः। इह तु रुच्यर्थादिविषये तदर्थाभावाच्छब्दसंस्कारमात्रप्रतिपादनाय शास्त्रारंभसामर्थ्यात् सम्प्रदानत्वमुच्यत इति शास्त्रीयलौकिकभेदेन द्विविधं सम्प्रदानं व्याख्यातम्॥ १३०॥

[g]) इह श्राद्धाय निगल्हते, युद्धाय संनह्यते, पत्ये शेते इत्यकर्मकधातुविषये कर्मणोऽभावात्तेनाभिप्रेयमाणस्य सम्प्रदानता न सिद्ध्यतीति

'क्रियाग्रहणमपि कर्तव्यम्'

इति वार्तिकेऽभिहितम्। क्रिययाभिप्रेयमाणस्यात्र स्यात् सम्प्रदानसंज्ञा। एतद्भाष्ये प्रत्याख्यातम्।

क्रियापि क्रिययाप्यमानत्वात् कृत्रिमं कर्म। श्राद्धाय निगल्हते इत्यादौ च कया क्रियया क्रियाप्यमानेति सन्दर्शनादिक्रिययेत्युक्तम्। तत्र संदर्शनादिक्रियाया अभेदेन धातुनाभिधानात्। कथमभेदाश्रयः क्रियाकारकभावो युज्यत इति समर्थयितुमाह।

**भेदस्य च विवक्षायां पूर्वां पूर्वां क्रियां प्रति।**
**परस्याङ्गस्य कर्मत्वान्न क्रियाग्रहणं कृतम्॥ १३१॥**

(126) [a]) सन्दर्शनप्रार्थनाध्यवसायैराप्यमानत्वात् क्रियापि कृत्रिमं कर्म। तत्र प्रेक्षापूर्वकारिणः प्रवृत्तावावश्यकेन सन्दर्शनादयः सन्निहिताः प्रतीयन्त इति तेषां प्रधानक्रियाया भेदविवक्षायां पूर्वपूर्वक्रियापेक्षयोत्तरोत्तरस्याङ्गस्य प्रधानक्रियार्थस्य कर्मत्वमविरुद्धं पूर्वपूर्वक्रिययाप्यमानत्वादिति क्रियाया अपि कर्मतायां तयाभिसंबध्यमानस्य सूत्रेणैव सम्प्रदानता सिद्धेति **क्रियाग्रहणं** प्रत्याख्यातम्। ददातिकर्मणेत्ययं विशेषो नाङ्गीक्रियते। [b]) तदत्र धातुना प्रधानक्रियैवोच्यते। सामर्थ्यप्राप्तास्तु संदर्शनादयः ततो भिन्ना इति क्रियाकारकभावोपपत्तिः। तद्यथा। सार्थाद्धीयते इति प्रतीयमानं सार्थस्य

---

[g]) A साध्याय निगृह्यते. I अभिहित. A साध्याय निगृह्यते. I क्रिमाप्य°. A om. संदशनादिक्रिमयेति. A °याधीनभेदेन.

(126) [a]) A om. क्रियाप्रि कृत्रिमं ... पूर्वपूर्व. A °क्रियाभेदापेक्षया. A तयापि अभि°. [b]) B °भावोऽनुपपत्तिः, A om. कर्मत्वनिमित्तं ... °प्राप्ताभेदानां, B °कारजन्यभेदा°. A °मितप्रतीत्या.

स्वातन्त्र्यं कर्मत्वनिमित्तं यदि वा तादर्थ्यात् प्रधानक्रियया प्राप्ताभेदानां धातुभिरभिधानेऽपि न सर्वथैव भेदतिरस्कार इत्यभेदाख्यकार्यानुमितभेदप्रतीत्या कर्मतोपपत्तिः ॥ १३१ ॥

यद्येवमोदनं पचतीत्यादावपि क्रियाकर्मणाभिप्रेयमाणस्य सम्प्रदानसंज्ञा स्यात् । ओदनादेः कर्मसंज्ञा तु क्रियाकर्मसु सावकाशेत्यत आह ।

**क्रियाणां समुदाये तु यदैकत्वं विवक्षितम् ।**
**तदा कर्म क्रियायोगात् स्वाख्ययैवोपचर्यते ॥ १३२ ॥**

( 127 ) सन्दर्शनादिक्रियासमुदायः परस्परमङ्गाङ्गिभावमनापन्नः समकक्ष्यतया समुच्चीयमानरूपो यदैकफलत्वादभेदेन धातुनाङ्गीक्रियते तदा भेदनिबन्धनस्य क्रियाकारकभावस्याप्रतीतेरप्रतिलब्धकर्मभावया क्रियया संबध्यमानमोदनादिकर्म स्वाख्ययैव क्रियपेप्सिततमत्वनिमित्तभूतया कर्मसंज्ञयैव व्यवह्रियते, न तु सम्प्रदानसंज्ञयेत्यर्थः । समुच्चयेनाभिधानादङ्गाङ्गिभावाभावात् क्रियायाः कर्मरूपता नास्त्यत्र पक्षे ॥ १३२ ॥

भेदविवक्षायां तर्हि सम्प्रदानतात्र स्यादित्याशङ्क्याह ।

**भेदाभेदविवक्षा च स्वभावेन व्यवस्थिता ।**
**तस्माद्गत्यर्थकर्मत्वे व्यभिचारो न दृश्यते ॥ १३३ ॥**

( 128 ) लौकिकप्रयोगः प्रसिद्ध इति तमुद्दिश्यान्वाख्याने यथाप्रयोगमुपायपरिकल्पनया नियतभेदाभेदविवक्षेत्यर्थः । एवं च गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ अपि उभयविवक्षाश्रयेण सिद्धेति नार्थस्तदारंभेण । अन्यत्राभेदविवक्षानियमाद् व्यभिचारोऽतिप्रसङ्गो नास्ति ॥ १३३ ॥

एतदेवागमेन द्रढयति ।

**विकल्पेनैव सर्वत्र संज्ञे स्यातामुभे यदि ।**
**आरंभेण न योगस्य प्रत्याख्यानं समं भवेत् ॥ १३४ ॥**

( 129 ) [a]) भेदाभेदविवक्षानियमानाश्रयणे सर्वत्र कर्मसम्प्रदानसंज्ञयोर्भावान्नियमार्थं गत्यर्थकर्मणीत्यादिसूत्रं भाष्यकारो न प्रत्याचक्षीत । प्रत्याख्याने ह्यतिप्रसङ्गः स्यात् ।

---

का. १३२. E समुदायेषु.

( 127 ) B °भावमापन्नः. A समकक्ष°. A समुच्छ्रीयमाण°. A °प्रतिबद्धक°. A °ततमं निमित्त°. A क्रियाकर्म. A °दानता स्या°.

( 128 ) I लौकिकः प्र°. EI यथायोग°. A °ल्पनादानीयते. A अन्यत्र भे°. I °नियमाव्य°.

का. १३४. B योग्यस्य. I °ख्यातं.

( 129 ) [a]) A °नाश्रयेण. A °विषये विवक्षेयम्. A शास्त्रे निगदत. B om. तु. A °योरपि वाऽभेद°.

यदा तु विवक्षानियमश्चेतसि भाष्यकारस्य स्फुरति तदारंभप्रत्याख्यानयोरविशेषं मन्यमानो युक्तं यत् प्रत्याचक्षीत । तदेवं गत्यर्थविषये विवक्षाद्वयम् । श्राद्धाय निगल्हत इत्येवमादौ तु भेदविवक्षैव । पचत्योदनमित्यादावभेदविवक्षैव । चेष्टायामनध्वनीत्येतत्प्रत्युदाहरणयोरपि चाभेदविवक्षैव, मनसा पाटलिपुत्रं गच्छत्यध्वानं गच्छनीति । [b]) सूत्रारंभे च स्त्रियं गच्छत्यजां नयतीत्यतिप्रसङ्गे

'सिद्धं त्वसंप्राप्तवचनात्' (Vā on P. 2.3.12.)

इत्युक्तम् । असम्प्राप्तं गमनेनासंवद्धं यत्कर्म तत्र द्वितीयाचतुर्थ्यौ वक्तव्ये । अजास्त्रियौ तु सम्प्राप्ते कर्मणीत्यतिप्रसङ्गो न भवति । एवं च विशेषसूत्रारम्भे

'अध्वनश्चानपवादः' (Vā on P. 2.3.12.)

इत्युक्तम् । अध्वनीति प्रतिषेधो न वक्तव्यः । अध्वा हि सम्प्राप्तं कर्मेह प्रतिषेद्धुमभिप्रेतः । तस्य चासम्प्राप्तवचनादेव व्युदासः सिद्धः । अत एव भाष्येऽभिहितम् ।

आस्थितप्रतिषेधो वक्तव्यः (M. Bhā on P. 2.3.12.)

इति । आस्थितोऽध्वात्र प्रतिषेधविषयो विज्ञेयः ॥ १३४ ॥

तत्र किंरूपोऽसावित्याचष्टे ।

**त्यागरूपं प्रहातव्ये प्राप्ये संसर्गदर्शनम् ।**
**आस्थितं कर्म यत्तत्र द्वैरूप्यं भजते क्रिया ॥ १३५ ॥**

(130) [a]) 'अध्वन्यर्थग्रहणम्' (Vā on P. 2.3.12.)

इति वचनादध्वपर्यायेभ्योऽपि प्रतिषेधः, पन्थानं गच्छतीत्यादौ । आस्थित आक्रान्तो गमिक्रियया अध्वा । उदाहरणम् । प्रवृत्तगमनो हि मार्ग आस्थित इत्युच्यते । अत्र येयं गमिक्रिया सा द्विरूपा भवति, आक्रान्तस्य पथो योऽतिक्रमणीयो भागः तत्र त्यागरूपं हीनरूपं क्रियायाः । प्राप्ये त्वासादनीये भागे संसर्गरूपं प्राप्तरूपमिति त्यागोपादानलक्षणावयवभेदात् क्रिया द्विविधा [b]) तथा च त्यागोपादानरूपाविच्छिन्नप्रवाहगमिक्रियाक्रान्तोऽध्वा क्रियाविषयभावमात्रविधीयमानकर्मसंज्ञागोचरो न तु क्रियया कर्मभूतयाऽभिसंवध्यते क्रियाभेदाभावादिति सम्प्रदानसंज्ञाभावः । ग्रामादेरेव तदुपायप्राप्य-

---

[b]) A °रंभे स्त्रि°. A त्वप्राप्ताव°; B प्रसिद्धं च संप्रा°. A असङ्गगमनं°. A °सवन्धात् क्रमात्तत्र. A °स्त्रियोस्तु. A om. अध्वनचा ... अनध्वनिति. A अजाहि. A °प्तकर्मात्र. A °प्रेतं.

(130) [a]) BEIO ins. आस्थितोऽध्वात्र प्रतिषेधविषयो विज्ञेयः। तत्र किंरूपोऽसावित्याचष्टे (before अध्वन्यर्थ°). BI °षेधे. A उदाहरणप्रवृत्ता गमिक्रिया सा द्विरूपाभावमतिक्रान्तस्य पर्यायो भवति । क्रमाणा यो भागः तत्र°. A हीनरूपं. [b]) A °प्राप्यसाधनाध्वरूपस्य. A यस्तु नास्थितो. A तत्र. विभक्तिर्भवति. A कथं वान°. A यथोरा°. A om. पन्थानं गच्छाति.A तदेव सू°. A त्वविव°.

एतद् व्याख्यातुमाह ।

**द्रव्यस्वभावो न ध्रौव्यमिति सूत्रे प्रतीयते ।**
**अपायविषयं ध्रौव्यं यत्तु तावद्विवक्षितम् ॥ १३८ ॥**

( 133 )[a] ) ध्रुवं कूटस्थं निष्क्रियमिति **द्रव्यस्वभावो ध्रौव्यं सूत्रे न** प्रत्येतव्यम्, अपि त्वसंतुष्टचलनोऽत्र ध्रुवशब्दः । तथा ह्यपायसाध्ये यद्ध्रुवं तेनापायेनासंस्पृष्टमित्येषोऽर्थः । एवं च कृत्वा धावतोऽश्वात्पतति इत्यत्र पातस्याश्वकर्तृकत्वाभावात्तेनानावेशे ध्रुवताश्वस्य तत्रास्त्येव । संरब्धोदासीनसाधनसाध्यो ह्यपायः । तत्राश्व उदासीनः, अपेता तु संरब्धः । [b] ) ग्रामादागच्छति पथा पर्वतमिति तु पथः करणस्य पर्वतस्य कर्मणोऽपायेनानावेशाद् ध्रुवतायां सत्यामपि परत्वात् करणादिसंज्ञाभिर्बाधनादपादानसंज्ञा न भवति । तथा च वार्त्तिकम् ।

अपादानमुत्तराणि । धनुषा विध्यति, कंसपात्र्यां भुङ्क्ते, गां दोग्धि, धनुर्विध्यति ।

( Vā on P. 1.4.1. )

इति । तदेवमपायविषयस्याश्रयणादश्वस्यापायेनानावेशाद्वस्तुतस्तद्विषयमध्रौव्यमभवदेवाविवक्षितमिति वार्तिकार्थः ॥ १३८ ॥

तथा हि ।

**सरणे देवदत्तस्य ध्रौव्यं पाते तु वाजिनः ।**
**आविष्टं यदपायेन तस्याध्रौव्यं प्रचक्षते ॥ १३९ ॥**

( 134 )[a] ) **सरणे**ऽश्वसमवायिन्यां वेगितायां गतौ यथा **देवदत्तस्य ध्रौव्यं** तेन सरणेनानावेशात् तथा देवदत्तसमवेते **पाते** पतनक्रियाया **वाजिनः** अश्वस्य तयानावेशात् ध्रौव्यमिति दृष्टान्तदार्ष्टान्तिकभावान्तर्भावेनेदमुदाहरणम् । हेतुत्वेनापायानावेशो व्यतिरेकमुखेनोभयत्रापि ध्रौव्य उपात्तः । [b] ) यद्यपि चाश्वसरणे देवदत्तस्य ध्रौव्यं तथाप्यपादानसंज्ञा न भवति

' गतिर्विना त्ववधिना नापाय इति गम्यते ' इति वक्ष्यमाणत्वादवधिभावेन देवदत्तस्यानुपादानात् । तथोपादाने तु भवत्येव सरतो देवदत्ताद्धावत्यश्व इति ।

---

( 133 ) [a] ) A °त्वमंसृष्टवचनो°. A पतनीत्यत्र पतने स्वकर्तृकत्वाभावादेवानाविष्टधावनस्याश्वस्य. I ° तेनाविशात्. A अपाय'नुसंबद्धः. [b] ) A पथा पर्वतामति रूपः । काश°. A °पायेनावेशात्. B ° सज्ञाभिमाधना°. A दोग्ध्रि धनुपा वि°. A °पायेनावशादस्तु. A °व्य भवदेव.

का. १३९. A ध्रौव्ये. D वाजिना. E °अविष्टं. °तस्य ध्रौव्य.

( 134 ) [a] ) A तस्य स°. A °न्तिकाभावेनदमु°. A °पायोऽनावेशात्. [b] ) A om. चाश्वसरणे ... न भवति. A गति विना. A तत्रा प्यपादानभ°. A भवत्येव समानो देवदत्तः instead of सरतो देवदत्ताद्धावत्यश्व इति । A om. यत्र ... इत्याशङ्क्याह ।

यत्र तर्हि द्वावपि सपरिस्पन्दौ तत्र कथं ध्रुवाध्रुवविभागो निश्चेय इत्याशङ्कयाह ।

**उभावप्यध्रुवौ मेषौ यद्यप्युभयकर्मजे ।**
**विभागे प्रविभक्ते तु क्रिये तत्र विवक्षिते ॥ १४० ॥**

( 135 ) स्थाणोः श्येनोऽपसर्पतीत्यन्यतरकर्मजे विभागे स्फुटमेवापायेनानावेशात् स्थाणौ ध्रुवता निश्चीयते । अपसर्पतो मेषान्मेषोऽपसर्पतीत्यत्राप्युभयकर्मजे विभागे यद्यप्युभावपि मेषावपायावेशादध्रुवौ तथापीतरापायेनेतरस्यानावेशात् कर्तृभेदाद्भिन्ने एवापायलक्षणे क्रिये ॥ १४० ॥

ततश्च ।

**मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक् ।**
**मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक् पृथक् ॥ १४१ ॥**

( 136 ) इतरेतरक्रियमेतरेतरस्यानावेशादन्यक्रियायामन्यस्य ध्रौव्यं स्वक्रियायां तु कर्तृत्वं द्वयोरपि । यदा तु परस्परमवधिभावो न विवक्ष्यते, अपि त्वेकशब्दोपादाने द्विगतेऽपि क्रिये विवक्ष्येते ॥ १४१ ॥

तदाह ।

**अभेदेन क्रियैका तु द्विसाध्या चेद्विवक्षिता ।**
**मेषावपाये कर्तारौ यद्यन्यो विद्यतेऽवधिः ॥ १४२ ॥**

( 137 ) [a] ) मेषावपसर्पत इत्याख्यातपदेन कर्तृद्वयनिर्वर्त्या क्रियैक्येन प्रत्यायितेति द्वयोरपि मेषयोः क्रियावेशेन कर्तृत्वमपायेन त्वेकस्यावधित्वमित्यपादानता न भवति । एवं च कृत्वापायकर्तृत्वं मेषयोर्भवति यदान्यः पर्वतादिरवधिः ध्रुवलक्षणोऽत्र भवति । [b] ) तथा च तस्यापादानसंज्ञा पर्वतादपसर्पत इति परस्परतो मेषावपसर्पत इति । एवं त्वभिधाने मेषान्तरक्रियापेक्षमवधित्वं द्वयोः स्वक्रियापेक्षं च कर्तृत्वमित्युक्तम् । कर्तृभेदाद्यत्र क्रियाभेदानुमानमाख्यातादैक्येनापि प्रतीयते ॥ १४२ ॥

यद्यन्यो विद्यतेऽवधिः तदा मेषावपायकर्तारौ नान्यथेत्येतद् भाष्यग्रान्थसंवादेनोपपादयितुमाह ।

---

( 135 ) AD completely omit the commentary on Kā. 140. E स्थाणौ. B इयनो नापस°. E ° पायाभावदध्रु°. E तथापीतरेतरस्याना°. E °पायलक्षणं. O °भिन्न इवापा°.

( 136 ) A तदा.
का. १४२. BEIO °वपायकर्ता रौ.

( 137 ) [a] ) A °द्वये निर्वत्यक्रियापेक्षेण प्र°. A °थिते तद्व°. A मेष्पयोः क्रियाविशेषकर्तृ°. B om. कृत्वा. [b] ) °पर्वतादपावर्तत इति. A इत्येवमभि°. A द्वयोरेव क्रि°. A °पेक्षं सर्वक°. A कर्तृत्वमुक्तं. A °दाद्यत्र. A °देकेना. A प्रतीतिः. A तदा तेषामपाय कर्तरि.

**गतिर्विना त्ववधिना नापाय इति गम्यते ।**
**वृक्षस्य पर्णं पततीत्येवं भाष्ये निदर्शितम् ॥ १४३ ॥**

(138) [a]) कारकसूत्रे संज्ञिनिर्देशः कर्तव्यतया चोदितः, साधकं कारकमिति वक्तव्यम्, अन्यथा अक्रियानिमित्तस्यापि कारकप्रसङ्गः इत्यनिष्टप्रसङ्गः

'अपादानं च, वृक्षस्य पर्णं पततीति' (Vā. on P.1.4.23.)

इत्युदाहृतो वार्तिके । सवार्तिकं च भाष्यमिति भाष्य इत्याह । एतच्च गतेः सावधिकाय अपायत्वे न लिङ्गम् । अपि त्वस्य परिहाराय

'न वाऽपायस्याविवक्षितत्वात्' (Vā. on P. 1.4.23.)

इति । यदुक्तमित्यनेन भाष्यप्रबन्धोऽत्र निर्दिष्टः । [b]) अयं चात्रार्थः । वृक्षसंबन्धिनः पर्णस्य पातो वाक्यार्थो विवक्षितः इति वृक्षस्यावधित्वविवक्षात्र नास्ति । तथा चापायोऽयं न भवति । अपायत्वेनावध्यपेक्षारूपेणाविवक्षितत्वादित्यत्रापादानता वृक्षस्य न भवतीति, यदि त्वपायोऽत्र विवक्ष्यते तदा वृक्षस्यावधित्वात् वृक्षात् पर्णं पततीति भवति, ततश्च न ज्ञायेत कस्य संबन्धि पर्णं कङ्कस्य वा कुरस्य वेत्युक्तम् । तस्मात्पर्णविशेषणत्वेन वृक्षस्य विवक्षितत्वाद् वृक्षमत्यजत्यपि पर्णे शाखास्थे भूमिं स्पृशति प्रयोगोऽयं भवत्येवेत्यपायविवक्षोक्ता । [c]) एतस्माच्चावसीयते सावधिकगतिरपायो न शुद्धा, अन्यथावध्यविवक्षायामप्यत्रापायसम्भवादपादानत्वं स्यादेवेति ज्ञापकमेतत् । एवं च चापायेनैवावधेराक्षेपात्तस्यैव विशेषणम् । शब्दवत् संज्ञिप्रतिपत्त्यर्थं ध्रुवग्रहणं संरब्धोदासीनोभयसाध्यतामपायस्य दर्शयितुमिति व्याख्यातम् ॥ १४३ ॥

गतमदः । इदमिदानीं वक्तव्यम् 'अपादानमुत्तराणि' इति विप्रतिषेधः कात्यायनेनोक्तः । तथा चोक्तैः कारकैरपादानस्य बाधितत्वात् वलाहकाद् विद्योतते, वलाहके विद्योतते, वलाहको विद्योतते इति भाष्ये संज्ञासमावेशो दर्शितो विरुद्ध इत्याशङ्क्य भाष्यं समर्थयितुमाह ।

**भेदाभेदौ पृथग्भावः स्थितिश्चेति विरोधिनः ।**
**युगपन्न विवक्ष्यन्ते सर्वे धर्मा वलाहके ॥ १४४ ॥**

---

का. १४३. B °त्येतद्भाष्ये.

(138) [a]) O संज्ञिविशेषः. A कर्तव्यस्तथा चोदितं. D काननं. A °दाहृत वार्तिकंच भा°. A एतच्च ततः सा°. A तत्रापाय°. A [b]) प्रपंचार्थः A °वधिना विव°. A ज्ञायते. A पर्ण कं वृक्षस्य तान्यस्य वे°. A °क्षमत्यजदपि पर्णमात्रं भूमिं°. A °शति इति प्र°. [c]) A न श्रद्धाजन्ययाऽवध्यविवक्षयाऽप्यत्रा°. A एतच्चा°. I संज्ञिनि प्र°. A °हको वि. A °हके वि°

(139) [a]) धूमज्योतिःसलिलमरुतां संघातो वलाहकः, तत्रावयवस्य ज्योतिषो विद्योतनम्। तच्च ज्योतिर्यदा तस्मात् समुदायात्मनो वलाहकाद् भेदेन विवक्ष्यते तदा भेदविवक्षायां पृथग्भावेनैव वा विवक्ष्येत तत्रावस्थानेन वा। यदा पृथग्भावेन विवक्ष्यते तदा वलाहकोऽवधिः पृथग्भावलक्षणस्यापायस्येत्युपात्तविषयमिदमपादानं व्याख्यातम्— वलाहकाद् विद्योतते विद्युज्ज्योतीरूपेति वलाहकात् पृथग्भूय निःसृत्येति निःसरणाङ्गे विद्योततने धातुः। [b]) यदा तु निराधारस्य तेजसोऽवस्थानाभावाद् वलाहकोऽवस्थितिहेतुत्वादाधारभावेन विवक्ष्यते तदाधिकरणसंज्ञोऽसौ जायते 'वलाहके विद्योतते' इति, वलाहके स्थित्वा प्रकाशत इत्यर्थः। अविन्धनत्वाद्वैद्युतस्य जातवेदसो वलाहको जलपूर्णोऽप्याधारो युज्यते। [c]) एवमुदकसंभेदात् पार्थिवेन धूमेन चाविलीकाराद् वलाहकाद्भेदो नास्ति तावत्तेजसः प्रकाशकर्तृत्वाभाव इति भेदविवक्षायां शक्तिद्वयाविर्भावो वलाहके दर्शितः। पृथग्भावे स्थितौ च भिन्नविषये एव। यदा तु स्वच्छत्वाद् वलाहकद्रव्यस्य तत्रत्यमुदकादि तेजसः प्रकाशे प्रतिबन्धकं न भवतीत्यभेदेन वलाहकाख्यः समुदायस्तेजोऽवयववशाद्विद्योतनसमर्थो विवक्ष्यते तदात्र कर्तृशक्तिरेवोज्जृम्भते वलाहको विद्योतत इति। [d])अवयवनिबन्धना हि समुदायमनुपतन्ति व्यपदेशाः। तद्यथा किसलयितमुपवनमिति वृक्षसमुदायस्योपवनशब्दवाच्यत्वे तदवयवानां संजातकिसलयत्वे समुदायस्तथा व्यपदेशार्हः। तदेवं विवक्षाभेदात् पर्यायेण भिन्नशक्तिर्वलाहको भाष्य उदाहृतः, न तु युगपच्छक्तिविवक्षायामिति न विप्रतिषेधवचनेनास्य विरोधः कश्चित्॥ १४४॥

यत्तु विप्रतिषेधोदाहरणं तत्र युगपदेव शक्त्योर्विवक्षेत्याह।

**धनुषा विध्यतीत्यत्र विनापायविवक्षया।**
**करणत्वं यतो नास्ति तस्मात्तदुभयं सह॥ १४५॥**

(140) [a])धनुषा विध्यतीति परत्वात्करणसंज्ञाऽपादानसंज्ञा बाधत इत्युदाहृतम्। तत्र युगपद् प्राप्तिरावश्यकेन संज्ञयोरिति तद् द्वयं साधकतमत्वमपायश्च सहैकस्मिन् द्रव्ये वर्तते। यतोऽपायविवक्षामन्तरेण साधकतमत्वं व्यधने धनुषो नास्ति। न हि दण्डेनेव धनुषा विध्यति, अपि त्वपसर्पतः शरस्यवाधिभावमुपयद्धनुर्व्यधननिमित्तता प्रतिपद्यत

---

(139) [a]) BIEO तथा. A विवक्ष्येते. A °स्थानेनैव. B °तने धातुं. [b]) A स्थितिहे°. B ° तस्य तेजसो. [c]) A स्वस्योदकसं°. A घूमेन वाति°. OA नास्ति। नास्ति. A तत्रत्यात्रत्य°. [d]) A °दायमनुगत°. A °वाच्यत्वेन. A भिन्नशक्तिवलाद भाष्य उदाहृतः। ननुयु° A °क्षायामिति भषति प्रतिषेधवच°. A यत् विप्र°.

(140) [a]) A °प्राप्तिरव नैकस्य. A द्वयं साधकत्वम°. A वर्तेते. A विध्यते. A अपि तूत्सर्पच्छरस्या°. I °धनंनिमि°. A °वेशात् सनि°. A °कारोपनीते. A °शक्तिद्र°.

इति युगपदुभयविवक्षायां भिन्नविषययोरपि शक्त्योः निमित्तनिमित्तिभावेनावस्थानादेकत्र द्रव्ये समावेशात् स्वनिमित्तसंज्ञाद्वयहेतुत्वे युगपदेकस्मात् प्रातिपदिकात् तत्कार्यविभक्तिद्वयोत्पत्त्ययोगात् एकसंज्ञाधिकारोपजनिते विरोधे परत्वात् करणसंज्ञानिमित्ता विभक्तिर्भवति। [b]) शक्त्योर्हि नास्त्यत्र विरोधः, भिन्नविषयत्वात्। शरनिःसरणे ह्यपादानं व्यधने तु करणं धनुः। आविष्टशक्ति च द्रव्यमेव संज्ञाविषय इति तदनपेक्ष्यैकत्र प्राप्तिः। तथा हि विभक्तिविधाने 'अपादाने' 'करणे' इत्यादिसंज्ञाविशेषेण द्रव्यत्वमेव विशिष्यते। एकस्यानेकसंज्ञाप्रवृत्तावपि च नास्ति विरोध इति संज्ञाकार्यविभक्तिमुखेन विरोधोऽत्र व्याख्येयः। एतच्चोदाहरणमुपलक्षणार्थमुपात्तमित्यन्यत्रापि विप्रतिषेधोदाहरणे युगपदविवक्षा योज्या। [c]) तथा हि 'कंसपात्र्यां भुङ्क्ते' इत्यत्रान्नादनादिरूपाया भुजेः कंसपात्री धारयन्त्यन्नमत्राधारः। स चास्याधारभावस्तावन्नोपपद्यते यावदपादानता नास्ति। कंसपात्र्या ह्यन्नमुद्धृत्य भुज्यत इति भवत्यपादानम्। न हि पर्णपुटेन सहान्नमभ्यवहरतो हस्त्यादेस्तत्र भुङ्क्ते इति भवत्याधारसम्प्रत्ययः। यदि च कंसपात्री न भवेदन्नादानस्यावधिस्तदा भुजिर्नैव निष्पद्येतेत्यपायविवक्षया विनाधिकरणत्वाभावादुभयोर्युगपद्विवक्षाया संज्ञाद्वयप्रसङ्गे 'अपादानमुत्तराणि' इत्यधिकरणसंज्ञया परया पूर्वाऽपादानसंज्ञा बाध्यते एव। [d]) 'गां दोग्धि' इति क्षारणवचने दुहौ नान्तरीयकोऽपायः। न हि गोरनपयति पयसि क्षारणं सम्पद्यत इति अपादानतानान्तरीयका कर्मशक्तिः गोः परत्वात् कार्यं प्रयुङ्क्ते। एवं धनुर्विध्यतीत्यपायविवक्षां विना व्यधने धनुषः स्वातन्त्र्यं नास्तीत्युभयसंनिधौ 'अपादानमुत्तराणि' इति परा कर्तृसंज्ञैव भवति ॥ १४५ ॥

एवमत्र विषमे द्वे शक्ती अभ्युपगम्य नान्तरीयकत्वादेकत्र द्रव्ये समावेशे संज्ञाद्वयप्राप्तौ विभक्त्याख्यकार्यद्वारेण विरोधे सति परत्वेन व्यवस्थोक्ता। सम्प्रति शक्त्यभेदमाश्रित्य संज्ञयोरभिन्नविषयोपनिपातमाह।

**एकैव सा सती शक्तिर्द्विरूपा व्यवतिष्ठते।**
**निमित्तं संज्ञयोस्तत्र परया बाध्यतेऽपरा ॥ १४६ ॥**

(141) [a]) भिन्नक्रियाविषयापि द्रव्यस्यैकैव शक्तिः, तया हि तद् द्रव्यं क्रिया-

---

[b]) A तदपेक्ष्यैव च् प्रा°. :BI संख्याविशेषणं. ED संज्ञाविशेषणं. IBO एतच्चात्रो°. A °पात्तमन्यत्रो°. A °हरणमुभयविव°. [c]) A इत्पत्रास्वादना°. A स चाप्याधार°. A °पात्र्यामन्न°. A सहानभ्यव्यवहारोतोद्धस्योदस्तत्रं. [d]) A गोस्तनपीततपयसः. A शक्ती अभ्युपगम्ये ॥ नान्तरी°.

का. १४६. A निमित्तसंज्ञ°.

(141) [a]) A परा भिन्न°. A तथा हि न द्र°. A तन्न. A °करणादिसं°.A परसंज्ञया. B.om. अपरा पूर्वासंज्ञा. A साधकत्वशक्ताव°.

द्वयं सम्पादयति, इति तत्र क्रियाद्वयविषयेऽपादानकरणसंज्ञाद्वयं लभत इत्येकत्र शक्तौ संज्ञाद्वयप्राप्तौ **परया** संज्ञया न परा **अपरा** पूर्वा संज्ञा **बाध्यते** विरोधाद्, एकसंज्ञाधिकारनिमित्तादित्यर्थः। शरनिःसरणेऽवधिभावो धनुषः साधकतमत्वशक्त्यैवान्तर्भावितः। [b]) तेन विना तदयोगादिति तावत्येकैव शक्तिर्भण्यते। परस्परनिरपेक्षस्य कार्यद्वयस्य प्रविभक्तरूपशक्तिद्वयपरिकल्पकस्याभावात्। व्यधनक्रियाया हि शरापगमनक्रियात्र गुणभूतेति पृथगात्मनि शक्त्यन्तरं नाक्षिपति। केवलमेकैव शक्तिर्गुणप्रधानभूतक्रियाद्वयविषयतया भिन्नरूपेव चकास्ति। [c]) द्रव्यमेव तर्ह्येकं क्रियाद्वयं सम्पादयत् साधनमस्तु, किं शक्तिपरिकल्पनया। नैतदुपपद्यते। अभिन्नस्वभावत्वादस्य नानाक्रियाविषयतायोगात्। शक्तिस्तु सामर्थ्यमनेककार्यमपि भवति। यथोक्तम् —

"न शक्तीनां तथा भेदो यथा शक्तिमतां स्थितिः"

इति। यद्येवं पक्त्वौदनो भुज्यतामित्यत्राप्येकैव शक्तिरस्तु। नैतदुपपद्यते। अन्तर्भूतेनोपायेन पृथगात्मानलभमानेन स्वनिमित्तशक्तिभेदानाक्षेपादिति स्थितम्॥ १४६॥

पूर्वं तु गुणप्रधानभावानाश्रयेण क्रियाद्वयमात्रविषयं शक्तिद्वयमुक्तम्। ततेतदपादानं

'ध्रुवमपायेऽपादानम्' (P. 1.4.24.)

इत्यनेनैव लक्षितं सर्वमपादानपंचमीविषयः। अपरस्तु

**निर्धारणे विभक्ते यो भीत्रादीनां च यो विधिः।**
**उपात्तपेक्षितापायः सोऽबुधप्रतिपत्तये॥ १४७॥**

(142) [a]) "पञ्चमी विभक्ते" (P. 2.3.42.)

इति विभक्तविशिष्टे निर्धारणे गम्यमाने पञ्चमीलक्षणो यो विधिरुक्तः सोऽपेक्षितापायः, अपायस्यानुमीयमानस्यापेक्षणादित्यपादानसंज्ञयैव सिद्धः। तस्य हि माथुराः पाटलिपुत्रकेभ्य आढ्यतरा इत्येतदुदाहरणम्। अत्र निर्धारणस्य विभक्तविषयत्वादत्यन्तविभक्तताप्रतिपत्त्यर्थं विभक्तग्रहणमिति पृथग्भूता एव प्रतिपाद्यमाना एतस्य विषयः, न तु गवां कृष्णा सम्पन्नक्षीरतमेत्यादि, गोत्वेनापृथग्भावात्। [b]) तत्रात्यन्तविभागेऽपि विवक्षिते पूर्वमाढ्यत्वेन बुद्ध्या साम्यमवश्यापेक्ष्यम्। तथा ह्याढ्यत्वेन समानेन गुणेन बुद्ध्यैकत्वमा-

---

[b]) A तेन विनापायोऽपीति ता°. A शक्तिभेदात पर°. BO om. कार्य द्वयस्य. A व्यधनक्रियाया. A भूतेऽपि. A ग्रहणप्रधान°. A भिन्नरूपेण; B भिन्न रूपेव°. [c]) A क्रियाद्वयाद् द्वयं सं°. EI साधयत्. A °कल्पनेनेति. I नतदु°. A °नेकं कार्य. A तद्ययोक्तं. A नैवमुप°. A भूतेनापा°. A °भेदस्याना°.

का. १४७. A भीत्रार्थानां.

(142) [a]) A नम्यनामे. BO °संज्ञव सिद्धेः BI. तथा हि. I इत्युदा°. A °त्वादन्येन वि°. विषयः। ननु. A सम्पत्तिकरितमेत्या°.

पाद्यातिशयविशिष्टाढ्यतावशात् पृथक्क्रियेत्यस्ति बुद्धिसंश्लेषपूर्वको विश्लेषोऽपायाख्य इत्यपादान इत्येव सिद्धात्र पञ्चमी। अपेक्षितक्रियं ह्येतदपादानम्। [c]) तदुक्तं भाष्ये

'यस्तैः साम्यं गतवान् स एवं प्रयुङ्क्ते' (M. Bhā. on P. 1.4.24.)

इति। कारकाधिकारे तमब्ग्रहणादतिशयो न विवक्षित इति गौणेऽप्यत्र बौद्धेऽपायेऽपादनताविरुद्धा। तथा हि कारकव्यवहारो बुद्ध्यवस्थानिबन्धन एव सर्वः। तदुक्तं प्राक्—

बुद्ध्या समीहितैकत्वान् पञ्चालान् कुरुभिर्यदा।
पुनर्विभजते वक्ता तदापायः प्रतीयते॥

इति। [d]) एवं सामान्येनैव सिद्धे सूत्रारंभो बौद्धमपायमप्रतिपद्यमानं प्रति विवक्षानियमार्थम्, अपायविवक्षैवात्र कर्तव्येत्यर्थः। तथा

'भीत्रार्थानां भयहेतुः' (P. 1.4.25.)
'पराजेरसोढः' (P. 1.4.26.)

इत्यादिश्च यो विधिरपादानसंज्ञालक्षणः सोऽप्युपात्तो गुणभावेन विषयोऽपायलक्षणा क्रिया येन स एवंविध इति उपात्तविषयापादानभेदोदाहरणरूपः पूर्ववदबुधबोधनार्थ एव। [e]) तथा हि वृकेभ्यो भयं चोराद् बिभेतीति य एष मनुष्यः प्रेक्षापूर्वकारी भवति स बुद्ध्या पश्यति यदि मा वृकाः प्राप्नुयुर्ध्रुवमनिष्टापात इति पूर्वं बुद्ध्या वृकान् प्राप्य बुद्ध्यन्तरेण ततो विभागं प्रतिपद्यत इति भयपूर्विकाया निवृत्तौ बिभेतेर्वर्तनाद् अस्त्येवापायः। [f]) एवं चौरेभ्यस्त्रायत इत्यनर्थप्रतिघातवचने त्रायतावनर्थं चोरसंसर्गं बुद्ध्या निश्चित्य ततः स्वजनमपनयति सुहृदिति संभवत्यपायः। अध्ययनात् पराजयत इत्यध्ययनाभ्यासपरिखिन्नो गुरुपर्युपासनायासभीरुः। प्राप्याध्ययनं ततो निवर्तत इत्यस्त्येवापायः। पराजयतिश्चात्र खेदपूर्वके निवर्तने वर्तते, अध्ययनात् खिन्नः सन्निवर्तत इत्यर्थः।

पूर्वमेवाप्रवृत्तौ तु खेदो बुद्ध्या समीक्षितः।
कष्टेन तपसा नित्यं दृष्टोपचरतो गुरून्॥

---

[b]) A तत्रात्मनि विभागे°. BEO om. अपि (after विभाग). A साम्यमवस्थापेक्षम्. A °ढ्यत्ववशात्. A °त्यारते बु°. A °पायाख्य इत्येव सि°. A °क्रियं च ह्ये°. [c]) A सत्यं गत°. E गन्तव्यं स°. I कारणताधि°. A °ग्रहणसतिशयत्वेन DA विवक्ष्यत. E अबौद्धेऽत्रापाये. A हेत्वप्यादिकारकव्य°. A उक्त प्राक्. [d]) B °द्धेस्तत्रारंभो. A प्रतिपाद्य°. A °नियमार्थं. I इत्येवमादिश्च. EI °दानलक्षण उपा°. E गुणप्रधानभावेन. A °क्षणक्रिया°. A °विषयोपादा°. A पूर्वतादोऽबु°. [e]) I वृवेभ्योविभेति. A बुद्ध्या चितन्यति. A इत्येवं बु°. [f]) I चोरेभ्यः. A °तावनर्थचोदकत्वं. D °र्थवोत्तरस्य. A स्वमपन°. A सह इति. A संभाव्योऽपायः. A °परिश्रान्तो. A °पासनायां. (स नायासनारूपः प्रागिवाध्ययनं). B प्राप्याप्यध्य°. I निवर्त्येत. A om. अध्ययनात्. B °यनं खिन्नं नि° A समीहितः. AE एक (घतयसानित्यं).

इति [g]) यवेभ्यो गां वारयतीति यवसंप्राप्तो गवां यवविनाशकृतं प्रत्यवायमयं निवर्तयति तत इति मुख्य एवापाय: कूपादन्धं वारयति, अग्नेर्माणवकं वारयतीति बुद्ध्या कूपाग्निसंप्राप्तिमनिष्टहेतुं मन्यमानोऽनुकम्पया ततो निवर्तयतीति बुद्धिसंश्लेषपूर्वकोऽपाय: । [h]) उपाध्यायादन्तर्धत्त इत्युपाध्यायसमीपप्राप्तो प्रेषणोपालंभादिदु:खं बुद्ध्या निश्चित्य ततोऽपैतीत्यपाय: । उपाध्यायादधीते, आगमयतीति च ग्रन्थमादत्ते तत इत्यपाय: । उपाध्यायमुखोदीरिता हि शब्दा: सन्तानेन वर्तमाना: शिष्यमनुप्रवीशन्तीत्युपाध्यायादवधिस्थानीयात्तेषामपक्रमोऽवसीयते । तदुक्तं भाष्ये ।

'संततत्वात् ।' (M. Bhā. on P. 1.4.29.)

इति । अनुपयोगे तु नटस्य शृणोतीत्यपायो न विवक्ष्यते । न हि नटाद् ग्रन्थमादत्ते, अपि तु नटसंबन्धि शृणोतीत्येतावदत्रार्थसतत्त्वम् । [i]) शृङ्गाच्छरो जायत इति ततो नि:सरतीत्येवं लोकस्य प्रतिपत्तेरस्त्येवापाय: । शास्त्रे च

पदार्थो लौकिक: प्रविभज्यते

इत्युक्तमिति तीर्थिकपरिकल्पितप्रक्रियानादर: । तीर्थिकानां हि केषांचित् कार्यकारणयो: परिणामाश्रयेण भेद इति विभागभाव: । हिमवतो गङ्गा प्रभवतीति स्रोतोरूपा गङ्गा तत: प्रसर्पतीति मुख्य एवापाय: । [j]) गौणं चापायमाश्रित्य

'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्' (Vā. on P. 1.4.24.)

प्रत्याख्यातम् । तथाहि अधर्माज्जुगुप्सते विरमतीत्यास्तिक: परत्र दु:खानुबन्धिनमधर्ममवगम्य जुगुप्सापूर्वकं ततोऽपैतीत्यस्त्यपाय:। नास्तिक: पुनरिहैव क्लेशफलं धर्ममवगत्य तत: प्रमादेन निवर्तते इति प्रमाद्यतीत्युच्यत इति सर्वत्र पूर्वेणैवापादानसंज्ञायामुत्तरो विधि: प्रपंचार्थ: । [k]) लक्षणप्रपंचाभ्यां हि व्याकरणम् । यथोक्तम् तत एव विधय इत्यादीति सिद्धम् ॥ १४७ ॥

इति भूतिराजतनयहेलाराजकृते प्रकीर्णप्रकाशे साधनसमुद्देशेऽपादानाधिकार: ।

---

[g]) A om. संप्राप्तो ... निवर्तयति तत इति. A °हेतूभूता म°. A बुद्धिसंश्लेषको. [h]) A °दन्तर्हित. A मनसि नि°. B अर्तीते. A ग्रन्थम् इत्युपाध्याय°. A संवादिनि अनु°. I तु नास्य. A नटादग्रमादत्ते. A णोत्येता°. B °र्थस्तटत्वम्. [i]) A om. ततो. A इति निविकल्पिते प्रक्रियानादर:. A तीर्थिको न हि केषाचित्. A परिमाणाश्र°. A °भागभाव:. [j]) A° प्सापूर्वव तयाऽपै°. A °रिहैकक्ले°. [k]) A त एव वि°. I सिद्ध:.

(143) [a]) इदानीं विभक्तिविधानक्रमायातं षष्ठ्यर्थं शेषलक्षणमतिक्रम्य कारकविशेषप्रक्रमायातमधिकरणं सप्तम्यर्थं विचारयति ।

**कर्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम् ।**
**उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम् ॥ १४८ ॥**

लोकेऽधिकरणविशेषेण द्रव्यगुणक्रियाविषयमभिधीयते । शास्त्रे त्वस्मिन् कारकप्रकरणात् क्रियाक्षेपे क्रियायामेवोपकारविशेषेण धारणलक्षणेनाधिकरणसंज्ञावतिष्ठते । [b]) तत्र क्रिया कर्तरि कर्मणि वावतिष्ठत इति तयोः क्रियाधारणादधिकरणसंज्ञा वचनात् पर्यायेण स्यात् । कर्मस्थक्रियाविषया वा कर्तृसंज्ञा कर्तृस्थक्रियाविषया वा कर्मसंज्ञा स्यादिति तत्र यथायोगं कर्तृकर्मसंज्ञाभावेऽधिकरणसंज्ञा प्रसज्यत इत्याशङ्कयोक्तं **'कर्तृकर्मव्यवहिताम्'** इत्यादि । कटे आस्ते, स्थाल्या पचतीति कर्तृकर्मधारणात् तत्समवेताया क्रियायामुपकारकमधिकरणं पारम्पर्येण । [c]) असति ह्याधारे कर्तृकर्मणी क्रियोपकारं न प्रतिपद्येयातामिति तयोराधार उपकुर्वन् क्रियामपि तत्स्थामुपकरोति । कारकाधिकारे च तरतमयोगो नास्तीत्यत्र परम्परया क्रियाधारकेऽधिकरणसंज्ञाया सावकाशत्वात् साक्षात् क्रियाधारकयोः परत्वात् कर्तृकर्मसंज्ञे एव । कारकाणां च क्रियानिमित्तत्वं यथा तथापि भवदाश्रीयत इति व्यवधानेन क्रियोपकारकत्वमविरुद्धम् । **'व्यवहिताम्'** इत्युक्तेऽपि **'असाक्षात्'** इति वचनं लोकानुसारेणापि पदार्थव्यवस्थायामधिकरणस्य क्रियाधारण प्रति व्यवधानपरिपोषणार्थम् । [d]) तथा हि शब्दात् प्रतीयमानोऽर्थो लौकिकः संस्कारनिमित्तमुच्यते । पृथिव्यां शेते, स्थाल्या पच्यत इत्यादौ चाख्यातशब्दात् क्रियाविशिष्टे कर्तृकर्मणी प्रतिपद्येते, न क्रियामात्रं ततो निकृष्टरूपमिति क्रियाश्रयधारणादेव लोकेऽधिकरणस्य क्रियोपकारः प्रतीयते न साक्षात् ॥ १४८ ॥

इदानीमौपश्लेषिकादिभेदेऽप्यधिकरणस्य सामान्यमेतल्लक्षणमनुगतमित्याह—

**उपश्लेषस्य चाभेदस्तिलाकाशकटादिषु ।**
**उपकारास्तु भिद्यन्ते संयोगिसमवायिनाम् ॥ १४९ ॥**

---

का. १४८. B° कारयन्. B उपकुर्वन्.

(143) [a]) B °विशेषक्रमा°. B rep. षष्ठ्यर्थ ... यात. A °धिकरणे. B °गुणद्रव्याक्रिया°. A क्रियामे वोपकारविशेषेणाधारेण लक्षणनाधि°. BI. कर्मणि चाव°. [b]) BI °विषया च कर्म. A °संज्ञा नाधिकरण°. [c]) A असतीत्यारे. A °पकारं. A om. तयोरा ... क्रियाधारकयोः and inserts तद्योगो नास्तीत्याधारोपकार°. A यथापि तावदाश्री°. A न्यवधानात् क्रि°. [d]) A इत्यादौ साक्षात् श°. B कर्तकर्मणि A नाक्रिया°.

का. १४९. I °शघटादिषु.

(144) [a]) उपश्लेष आधारस्याधेयेन संबन्धः। यद्वशादसावाधारः। तस्य त्रिष्वप्यधिकरणेष्वभेदः। अन्यथा तु संयोगिन्याधारे संबन्धः, अन्यथा तु समवायिनीति संबन्धिभेदाद्भिन्नत्वेन व्यपदेशः। तथा हि कटे आस्ते देवदत्त इति संयोगिनः कटस्य सकलावयवव्याप्त्या देवदत्तोपश्लेषो न दृश्यते, अपि तु कतिपयावयवव्याप्तेत्यविशेषादौपश्लेषिक इति सामान्यसंज्ञयाधारोऽयमुच्यते। [b]) तिलेषु तैलमिति तु समवायिना तैलरसेन तिलानां समस्तावयवव्याप्त्या लोकप्रसिद्ध्या संबन्धाद् व्यापकमेतदधिकरणम्। खे शकुनय इत्यत्र ह्याकाशस्य तात्त्विकावयवाभावात् कल्पितप्रदेशतया संबन्धाद्वैषयिकमेतदधिकरणम्। अनन्यत्र भावश्चात्र विषयार्थः। एवं जले मत्स्या इत्याधारप्रदेशापेक्षया चैनदौपश्लेषिकमधिकरणम्। गुरौ वसतीति शिष्याणां गुर्वधीनायां वृत्तौ वैषयिकमधिकरणं गुरुः। [c]) उपश्लेषोऽप्यत्र बौद्धः। एवं युद्धे सन्नह्यतीति युद्धाभिसंबन्धिना सन्नहनस्य तनुत्रादिबन्धनरूपस्य प्रवृत्तेः युद्ध विषयः। गङ्गाया गाव इति गङ्गाशब्दः सामीप्यात् प्रदेशवृत्तिरित्यौपश्लेषिकमधिकरणम्। शत्रोरभावे सुखमित्यादावभावस्य बौद्धं कारकत्वमिति प्रागेव निर्णीतम् ॥ १४९ ॥

के पुनरुपकारा इत्याह।

**अविनाशो गुरुत्वस्य प्रतिबन्धे स्वतन्त्रता।**
**दिग्विशेषादवच्छेद इत्याद्या भेदहेतवः ॥ १५० ॥**

(145) [a]) **अविनाशः** तैलस्य तिलकृत उपकारः। तिलविनाशे हि तैलं विकीर्णं नश्येत्। पर्यङ्के शेत इति शयितुर्गुरुत्वप्रतिबन्धे स्वतन्त्रः कर्ता आधारः। अन्यथा गुरुत्वात् पतनं भवेत्। खे शकुन्तादय इत्यादौ खेन शकुन्तादीनामधरदिशा संबन्धस्यापावर्तनमित्ययमेव तस्याधेयोपयोगः। आदिशब्दाच्छकटादिनाधारेण देशविशेषसंप्राप्तिः। [b]) गुरुणा च शिष्याणां संस्कारातिशयः पर्यङ्कादिना च सौस्थित्यमित्येवमादय उपकाराः प्रतिपाद्यन्ते। प्राच्यामादित्य उदेति प्रतीच्यामस्तमेति दक्षिणस्यामगस्त्य उत्तरस्यां ध्रुव इति दिग्विशेषसंबन्धप्रतिपादनमात्रोपयोगमेतदधिकरणम् ॥ १५० ॥

---

(144) [a]) B °श्लेषस्याधा°. A °णेषु भेदः। A सबन्धभे°. I विद्यते. I °प्त्येति विशे°. A °न्यसंज्ञायाआ°. [b]) A व्यापकमधि°. A चाका°. B तादार्थकाव°. A अनन्यभावश्चात्रा°. A स्य मत्स्या. A गुर्वधिपानां नावृत्तौ दैशिकमधि°. B °धीनत्वायां. O °धीनतायां. [c]) A om. एवं (before युद्धे). A °भिसंबन्धिनः. B तनुत्रादिसंबधन°. A विषयाधिकरणम्. A °त्यादावस्य.

(145) [a]) B किलवि°. B शयितुर्गतत्व°. A °त्वातपन्नोभ°. A °न्तादे (र्वनावारदिशा). A °स्वाप्यवर्तन°. A °शेषसमाप्तिः. [b]) A चैकस्थित्य°. E मूर्तानामन्येषां सर्वे°.

c) ' उपान्वध्याङ्वसः ' ( P. 1.4.48. )

इत्युपादिपूर्वस्य वसतेराधारः कर्मसंज्ञ उक्तः । तत्र वार्तिककारः प्राह ।

' वसेरश्यर्थस्य प्रतिषेधः । ' ( Vā. on P. 1.4.48. )

इति । ग्राम उपवसतीति । यथा तिष्ठतिर्गतिनिवृत्तिविशिष्टमवस्थानमाह एवं भोजननिवृत्तिविशिष्टं वासमुपवसिरिति वार्त्तिककारो मन्यते । तथा चोपवसेस्तिष्ठतिवद् ग्रामेणास्ति संबन्ध इति प्राप्ता कर्मसंज्ञा निवर्त्यते । विवक्षानियमश्चानेन वार्तिकेनावेद्यते । नात्र ग्रामादेरीप्सिततमत्वेन विवक्षा, अपि त्वाधारभावेनेत्यर्थः । d) भाष्ये तु प्रत्याख्यातमेतद्वार्तिकम् ।

" नात्रोपपूर्वस्य वसेर्ग्रामोऽधिकरणम् । कस्य तर्हि ? अनुपसर्गस्य । ग्रामेऽसौ वसंस्त्रिरात्रमुपवसतीति । " ( M. Bhā. on Vā on P. 1.4.48. )

तत्रायमाशयो भाष्यकारस्य । इह कालविशेषावच्छिन्ना भुजिनिवृत्तिरुपवसेरर्थः । तत्र कालविशेषोऽन्तरङ्गः, प्राकृतमेव कर्म । अभुञ्जानस्य त्ववस्थानं निरधिकरणस्य नोपपद्यते, इत्याधारोऽपेक्षितो नियतः । स चोपपूर्वस्य वसेर्न संबन्धीत्यप्रसक्तैव कर्मसंज्ञा ॥ १५३ ॥

e) न ह्येवमपि यदा कालवद्देशोऽपि नियतोऽपेक्ष्यते तीर्थे उपवसतीत्यादौ तदास्त्येवोपवसेर्देशेन संबन्ध इति स्यात् कर्मसंज्ञेत्याशङ्क्य भाष्यं समर्थयितुमाह ।

**यद्यप्युपवसिर्देशविशेषमनुरुध्यते ।**
**शब्दप्रवृत्तिधर्मात्तु कालमेवावलंबते ॥ १५४ ॥**

( 149 ) a) तीर्थादिदेशविशेषमवलंब्य भोजनादिनिवृत्तावभिसंहिताया देशविशेषेणापि संबन्धो यद्यप्युपपूर्वस्य वसेरस्ति तथापि नासौ शब्दसामर्थ्योपनिपतितो

---

c) A कर्मसहः. A om. उक्तः. A आह. A बसतेरश्य°. A ग्राममुप°. A °ष्ठतिग°. A °शिष्ठ वा. O om. उपवसिः. A तथा चा वसेस्तु तिष्ठातिवत्तु. A ग्रामे जास्ति सवधि. A निवर्तवते विचक्षणैः। (अनेन वार्तिकेना अवेस्यतम. A om. नात्र ... भावेनेत्यर्थः. d) A om. भाष्ये तु .. वसेः. A °रणा. ABIED किं तर्हि. A अपि तु पूर्वस्य. BO अनुपूर्वस्य. I अनुपपूर्वस्य. The correct text अनुपसर्गस्य is not found in any of the manuscripts nor in A. It is, however, found in all the editions of the Bhāṣya. A °सौवासे. :A om. कालविशेष ...तत्र, A प्रकृतमेव. A प्रभुंजानस्य चावस्था न निश्चयेनोपप°. A तत्रोपपू° A न ग्रामस्याधिकरणत्वाभावात् कर्म°. e) A यदाकाशवद्. A °पेक्षितः. A °वसन्तीत्या°. A देश इति न कुतः कर्म°.

का. १५४. D °वासिर्वेदे.

( 149 ) a) I तेर्था°. A°षेण संब°. I ° षेणाभिस°. A °र्थ्येऽपि निप°. B °कालविशे०ान्तरङ्गो गर्मोकृत. शब्द एव. A °शेषोत्तर ( भीयुतः ) A शब्द एव. A °स्य वृतिरीभ°.

देशसंबन्धः । भोजननिवृत्तिमात्रं ह्युपवासार्थः । स चानियतकालो नोपपद्यत इति कालविशेषोऽन्तरङ्गो गर्भीकृतः शाब्द एव शब्दस्य प्रवृत्तिरभिधानव्यापारः, तस्या धर्मः स्वभावः, शब्दशक्तिरिति यावत् । [b]) देशस्तु देवदत्तसत्ताया निराधाराया अनुपपत्तेरभिसंहितोऽपि तीर्थादिः शब्दार्थे नान्तर्भवति, भोजननिवृत्त्या देशस्य संबन्धाभावात् । तत्र त्वङ्गभूतो यो वासस्तेनैव देशस्याभिसंबन्धः । तथा चाङ्गभूतवसतिक्रियाद्वारेणोपवासेऽधिकरणता देशः प्रतिपद्यते । साक्षात् कालेनैव तु तया योगः। भोजननिवृत्तेर्नियतकालत्वात् कालव्यवधिना भोजनरूपत्वात् तस्यां तदङ्गस्तु वासो नियतदेश इति तद्द्वारेणात्र देशोऽधिकरणम् । [c]) अत एव भाष्ये

'ग्रामे वसंस्त्रिरात्रमुपवसति' ( M. Bhā on P. 1.4.48. )

इति उपवासाङ्गस्य वासस्य ग्रामेण संबन्धो दर्शितो न तूपवासस्यैव साक्षात् । सा चात्र वसतिक्रियाङ्गभूतत्वादाक्षिप्तैवेति तद्द्वारेणेष्यते क्रियाकारकसंबन्धः । वसत्यङ्गा हि भोजननिवृत्तिर्नियतकाला उपवसेरर्थः । अतश्च ग्राम उपवसतीत्युक्तेऽङ्गभूतवसिक्रियापेक्षा देशस्याधिकरणता ॥ १५४ ॥

प्रधानभूतभोजननिवृत्त्यपेक्षा च कालस्याप्रयुज्यमानस्यापि कर्मता प्रतीयत इत्याह ।

**वसतावप्रयुक्तेऽपि देशोऽधिकरणं ततः ।**
**अप्रयुक्तं त्रिरात्रादि कर्म चोपवसौ स्मृतम् ॥ १५५ ॥**

( 150 ) [a]) भाष्य इति शेषः । श्रूयमाणोपवासक्रियासंबन्धानर्हत्वाद् ग्रामादिः सामर्थ्यप्राप्तायामप्रयुज्यमानामपि वसतिक्रियायामधिकरणम् । साधनं ह्यश्रूयमाणामपि योग्यां क्रियामाक्षिपति । तद्यथा प्रविश पिण्डीमिति भक्षिक्रिया कर्म । अत्र च विशेषप्रतिपत्तिनिबन्धनाभावादव्यभिचरितसंबन्धा सामान्यरूपेण सत्ता प्रतीयते । [b]) यस्य च ग्रामाधिकरणा सत्ता ग्रामेऽसौ वसतीति वासं प्रत्यधिकरणं ग्रामादिर्देशोऽवतिष्ठते । श्रूयमाणाया तूपवसतिक्रियाया काल एवान्तरङ्गोऽधिकरणमित्यप्रयुज्यमानमप्येतद्योग्यत्वादाक्षिप्यते प्रवेशनक्रिययेव गृहम् । तत्र च साक्षादुपवसत्याधारे कृतार्था कर्मसंज्ञाङ्गभूतवसतिक्रियाद्वारायातमाधारं ग्रामादिदेशलक्षणं नावगाहते, प्रधानाप्रधानयोः प्रधाने

---

[b]) I देश तु A °रपि संहितोऽपि A°र्थादिभि. श°. A °देरस्य B °ह्य संबन्धः. A यथा ( वाग्भूतवसति ) A तथास्या यो°. A ° यवधाने यो°. A तस्यास्तदन्ते वा°. B om. तद्द्वारेण. [c]) A ग्रामे मस्मि रात्रमु°. A वासेरण ग्रा°. A न रूपत्वात्स्वस्मेक. I om साक्षात् .. °सम्बन्धः । A वसत्यादेर्भा°. A गम्यतेवमति. A °क्षया देशस्याधि°. A त्रृत्यपेक्षया.

का. १५५. A घसतौ च प्र°. I ° युक्तस्त्रिरा°. B वर्मो वृत्तम्.

(150) [a]) A °क्रियाया चानर्ह°. A ग्रामादिमा°. A °या प्रयु°. A °रण मात्र°. A °णामन्वयशेग्यां. A om. तद्यथा. A °क्रिया कर्म. A °बन्धपामा°. D प्रतियेत. [b]) A चेष्टा अवि°. A ° रणा मत्ता. A °मादिदे°. A °णाया उप°. A °धायाः का°. A °योगादाक्षिप्य°. I °क्रियैव. A सा उप°. A °धार ( श्रुतायो ) ? A° द्वारां यातवा भाचारग्रामादिदेशलक्षणा ( नीवमाह ) ? प्र°.

मूर्तानां सर्वेषामन्याधीनायां स्थितौ मूर्तस्याधारस्याप्यपरमधिकरणमिति पर्यन्तवर्ति मुख्यमधिकरणं किमित्याह ।

**आकाशमेव केषांचिद्देशभेदप्रकल्पनात् ।**
**आधारशक्तिः प्रथमा सर्वसंयोगिनां मता ॥ १५१ ॥**

( 146 ) [a]) ग्रहनक्षत्रविमानादीनां तावदाकाशमेवाधिकरणं प्रसिद्धम् । येषामपि पृथिव्येकदेशो रथादीनामधिकरणं तेषामपि तस्य पृथिव्येकदेशस्याकाशाधरत्वात् पारम्पर्येणाकाशमेवाधार इति सर्वग्रहणेनाह । समवायिनां तु स्वावयवा आधारः । तत्रापि पर्यन्ते परमाणवः। तेषां चाकाशमेव देशप्रविभागकारणमाधार इति मुख्याधारशक्तिराकाशाश्रया भावानाम् । [b]) न चैवमेकदेशतया संकरः स्वावष्टब्धपरिमितदेशमुखकभाग प्रकल्पने भिन्नतयाकाशं देशभावं प्रतिपद्यते यतः । तदुक्तम् '**देशभेदप्रकल्पनात्**' इति । संयोगिनां देशतया व्यवह्रियमाणस्याकाशभेदस्य तैरेव सयोगिभिरव्यापकैः परिकल्पनादाकाशं सर्वेषामसङ्करेणाधिकरणमित्यर्थः । 'केषाचित्' इति, ये ह्याकाशमभ्युपयन्ति संसर्गवादिनस्तेषां मत इत्यर्थः । [c]) तत्रैतत् स्यात्, किमिदमनध्यक्षमाणमाकाशं नाम । शब्देन गुणेन गुणी सोऽनुमीयत इति चेदाकाशगुणत्वस्यैवासिद्धेः शब्दस्यानन्वय्येतत् । न स्पर्शवद्विशेषगुणः शब्दः । अयावद्द्रव्यभावित्वादाश्रयादन्यत्रोपलब्धेरित्यादिहेतूपन्यासो वायं रूपादीनामपि ॥ १५१ ॥

[d]) सत्यप्याश्रये निमित्तान्तरात् परिवृत्तिदर्शनादाकाशस्य च द्रव्यत्वासिद्धौ शब्दाश्रयत्वस्य विवादास्पदत्वाद् यावद्द्रव्यभावित्वं शब्देऽसिद्धं कर्णशष्कुल्यवच्छिन्नाकाशदेश एवोपलब्धेश्चाश्रयादन्यत्रोपलभ्यमानत्वमसिद्धम्, समानेन्द्रियग्राह्यक्षणिकानेकविशेषगुणोयोगित्वमपि स्पर्शवनां स्वकृतान्ननियतमित्याशङ्क्याकाशसद्भावे लोके प्रसिद्धं लिङ्गमाह ।

**इदमत्रेति भावानामभावान्न प्रकल्पते ।**
**व्यपदेशस्तमाकाशनिमित्तं संप्रचक्षते ॥ १५२ ॥**

---

का. १५१. A आकाशसिव.

( 146 ) [a]) A प्रसिद्धमेवमन्यत्रापि. A सर्वग्रहेण. A स्वावयवे. B आधारा; A om. तत्रापि ... विभागकरणम् ।. [b]) A चैकदेश°. A अपरिमितदेश मुख्य भाग कल्पने. A °देशभावं. A om. इति ( after केपाचित् ). A °वादिना तेपा. [c]) °ध्यक्षमाण आकाशे । A गुण्यंशोऽनु°. A सिद्धेः । शब्दस्थानमप्येतत्. A अपावद्द्र°. A °पलंभा. A न्यासोवायं न्यायरूपा°. I°न्यासो यो रूपदीना°.
[d]) A °न्तरातप्रवृत्ति°. A °द्रव्यत्वात् सिद्धौ. A एवपनोश्रस्वाव. A लभ्यमानत्वामसिद्धसमातेन्द्रि°. A °ग्राह्यलाक्षणिक. A °गुणयोगित्व°. A स्पर्शवभावस्वकृतात नियमित्शाशङ्कया.

(147) [a]) इहाधारशक्तिरेवान्यथानुपपत्तेराकाशसद्भावं गमयति। तथा हि शब्दप्रमाणाकानां शब्दार्थोऽर्थः। अस्ति चायं शब्दः—इदं नक्षत्रमत्र तिष्ठतीति। अत्र इति यन्निर्दिष्टं तत्किंचन वस्तु भवत्, पृथिव्यादेरन्यत्वादाकाशाख्यामवलंबते। न चावस्त्वेतत्, सर्वसामर्थ्यविरहलक्षणादवस्तुन एवंविधव्यपदेशाभावात्। [b]) निरूप्य हि व्यपदेशो निरूपणा च वस्तुनिबन्धना, शाब्दे व्यवहारे निरूपितस्यैव वस्तुत्वात्। अत एव शत्रोरभावे सुखमित्यादौ निरूप्यमाणस्याभावस्याधाराभाव इत्यस्ति लोकप्रसिद्धव्यवहारनिमित्तमाकाशमाधारभावापन्नम्। पदार्थानां परमार्थविचारे तु सर्वं प्रपंचरूपमसत्, अद्वयस्यैव सत्वात्, इत्यविचारितरमणीयलौकिकपदार्थाश्रया लक्षणप्रवृत्तिरेव विरुद्धेत्याशयः॥ १५२॥

आकाशस्य सर्वभावाधारत्वं यदुक्तं तत् सिद्धस्वभावविषयं साध्यस्वभावविषयं तु कालस्याधारत्वमित्याह।

**कालात् क्रिया विभज्यन्ते आकाशात् सर्वमूर्तयः।**
**एतावांश्चैव भेदोऽयमभेदोपनिबन्धनः॥ १५३॥**

(148) [a]) 'प्रतिबन्धाभ्यनुज्ञाभ्यां तेन विश्वं विभज्यते' इति वक्ष्यमाणनयेन जन्मस्थितिनिरोधप्रविभागेन भावेषूपकुर्वन् कालः क्रियास्वाधारभावोपगमनेन प्रविभागमवस्थापयति। आकाशं त्वसर्वगतद्रव्यपरिमाणपदार्थसंयोगाहितप्रविभागमसङ्करेणाधारभावमुपयन्नियतदेशतया पदार्थव्यक्तीर्विभजते। [b]) मूर्तिक्रियाविवर्त्तरूपं चेदं विश्वं भेदावभासबहुलं लभ्यते व्यवहारे यथायथमाद्यायां दशायामभिन्नमपीत्येनदपेक्षया कालाकाशाख्यामेदनिमित्तः। कालाकाशाख्योऽभेद उपनिबन्धनं निमित्तमस्य मूर्त्तिक्रियाविवर्त्तस्येत्यर्थः। दिक्शक्तिनिमित्तोऽपि हि मूर्त्तिभेदः पूर्वापरदेशात्मकत्वादाकाशाधारप्रविभागेन निष्ठामुपैति। कालाकाशयोरपि च भेदः शक्तित्वादत्यन्ताभिन्नपरब्रह्मनिमित्तः। तस्माद्धि ते शक्ती पृथक्क्रियेते इत्युपपादितं प्रथमकाण्डे।

---

(147) [a]) B धारशक्तेरे° B ° शासंभवं°. B °त्रमवति°. I °त्रचक्रमत्र°. A °त्रेति यं निर्दिष्ट तीस च न व°. A °काशामवन्वता° मेघा वस्त्वे°. B °दयस्तु. A सर्वविधव्य°. [b]) A निरूपण वस्तुनिवद्वावहानि° D om. न ... वस्तु. A माघारापन्नमत्र परमा°. A °दव्यय°. B °र्णायलोकपदार्थ°. A °दार्याश्रव लक्षण°. Oसिद्धस्त भावभावेवि° OI °स्वभावभाववि°.

का. १५३. D विमज्यते. D मेददो. D om. मभेदोप.

(148) [a]) A om. विश्वं. A विभज्यन्त. A जनास्थि°. A आरादष्युपकु°. D आवपकु°. A आकाशत्वं म°. A पदार्थे संयोगादि तु प्रवि°. A °भाव (मुपपामियत देशे तया तपदार्थव्यक्तिविंभज्यते. [b]) A °हुल (लक्षेते व्यवहारे) O rep. सर्वगत ... नियत. A °मिनमतित्येतदपेक्षण°. A °मितकाला°. A °शयोरभेद°. A मुक्तियाविधस्तस्येत्यर्थ. A om. दिक्शक्ति ... निष्टामुपैति. A ins व्यक्तिः। दशायाममिनमभीव्येंपोदये क्षमा. A कालकाशाख्याभेद. A om. शक्तित्वाद ... परब्रह्म. A तस्याधि ते पक्षी यथा क्रियेते. I उपपादितः.

कार्यसम्प्रत्ययात् [c]) कारकाधिकारे च तमब्ग्रहणात् साक्षात्कारकशक्तीनां प्रकर्षो नाद्रियते, न तु क्रियासंवन्धनिमित्तान्तरङ्गवहिरङ्गभावानादरोऽन्यथा स्वव्यापारे स्वातन्त्र्यात् कर्मणः कर्तृसंज्ञा स्यात्। कर्मसंज्ञायाः सन्दर्शनादिभिरीप्सिततमायां क्रियायां सावकाशत्वात्। यदा च वासविशेषस्यैवोपशब्देन द्योतनाद्वास एव विशिष्ट उपवसत्यर्थः तदा कर्मसंज्ञा देशेऽपि चरितार्था ग्राममुपवसति, अधितिष्ठतीत्यर्थः। [d]) अतश्च भोजननिवृत्त्यर्थतायामुपवसेः साक्षात्काल आधारः कर्मसंज्ञः, देशस्त्वभिसंहितोऽप्यङ्गभूतवसिद्वारेणैवाधारो न साक्षादिति स्थितम्। यस्तु निवृत्तिरूपत्वादुपवसेराधारेणासंवन्ध इति व्याचष्टे तस्य कालेनाप्याधारेणासंवन्धोऽत्र स्यात्। अस्ति च गतिनिवृत्तिवचनस्यपि तिष्ठतेराधारेण संवन्धः। सर्वव्यापारोपरमलक्षणस्य ग्रामे तिष्ठति, ग्राम आस्ते इति निवृत्तेः क्रियान्तरमपावर्तयन्त्याः क्रियात्वमविरुद्धमेव। कारकाणां हि प्रवृत्तिविशेषः फलानुमेयः क्रिया। स चात्र नियतकालभोजननिवृत्तिरूपः स्फुट एव। [e]) न चापि संकल्पविशेष एव मानसो व्यापारो निवृत्तिः। सन्दर्शनादीनां प्रधानक्रियया सह भेदाभावाद् युद्धाय संनह्यते इत्यादावेव भेदविवेक्षेत्युक्तम्। तथा चात्र संकल्पपूर्वकः कर्तृव्यापारो नियतकालव्यवधिना भोजनादिरूपो धातोरुपवसेरर्थः। क्रियात्मेत्यस्याधारसंवन्धे सत्यपि साक्षाद्देशलक्षणे नाधारेण संवन्धोऽङ्गभूतवसतिक्रियाद्वारेणायोगादिति नान्तरीयककालाख्याधारसंवन्ध एव कर्मसंज्ञाविधिरिति सिद्धम्॥ १५५॥

इति भूतिराजतनयहेलाराजकृते प्रकीर्णप्रकाशे साधनसमुद्देशेऽधिकरणाधिकारः॥

---

(151) [a]) इदानीं षष्ठ्यर्थः सप्तमः कारकभेदो विचार्यते। स च शेषलक्षणः संवन्धः। तस्य कथं कारकभेदत्वं कथं च शेषत्वमित्येतदुपपादयितुमाह।

**संवन्धः कारकेभ्योऽन्यः क्रियाकारकपूर्वकः।**
**श्रुतायामश्रुतायां वा क्रियायां सोऽभिधीयते॥ १५६॥**

[b]) **कारकेभ्योऽन्यः** कर्मादिविशेषलक्षणेभ्यः षड्भ्योऽन्यो यः संवन्धः स शेष इत्युपयुक्तेतरवचनशेषशब्दाश्रयेण।

---

[c]) A कारकान (for तमब्ग्रहणात्). A° काणां (प्रवज्ञो)? A ननु. A° रङ्गभावो न देशेऽन्यथा. A° संज्ञासंद°. A° काशा यदा° A वा विशेषस्य आदिशब्देन. A आस्त एव वि°. A° सतीति अधि°. [d]) A° सतेः साक्षा°. A°ज्ञादेस्त्वभि°. A° हितोऽप्यौ वसि°. A स्थितम्। A° धारेसंब°. A° लेनाधा°. A° रेण सं°. A° स्तिचनि°. A° स्यापि उपवसेराधा°. A° क्षश्रवासः। ग्रामे° A ins. ग्रामक्रिया सहभेदावभासकद्वय आस्ते°. A नियतकालभोजननिवृत्तेश्च क्रियात्वमुपावर्तन्त्याः क्रियात्वमविरुद्ध. मेव। A°मेयः। क्रियासत्ता. A°रूपस्फुटवचनापि सं°. [e]) स चात्र व्या°. A°र्वककर्तृ°. A°व्यवधिमाह- A°नादिरूपोपादानादिति नान्तरी°. A om. °रूपोधातोरूपवसेरर्थः। ...वसतिक्रियाद्वारेणायोगाद्.

(151) [a]) A om. सप्तमः [b]) A °न्योऽयं सं°; I °ड्भ्यो न्यायः सं°. A °युक्तोभिन्नवच°. The actual Bhāṣya passage is : कर्मादीनामविवक्षा शेषः। A °रकपूर्व इ°. O °याविशेषवि°. A °न्ध इदं ददाति च्छित्तिजनादिक्रियाप्रविमोत)? पू°. O जन्यादिप्रभा°. A कारके।

" कारकाणामविवक्षा शेषः " ( M. Bhā on P. 2.3 50 )

इति भाष्यं व्याख्यातम् । ' **क्रियाकारकपूर्वकः** ' इत्यनेन कारकत्वं व्याचष्टे शेषस्य । तथा हि-राज्ञः पुरुषो वृक्षस्य शाखा पशोः पादः पितुः पुत्र इत्यादावश्रूयमाणक्रियाविषये स्वस्वामिभावावयवावयविभावजन्यजनकभावादौ संबन्धे ददातिस्थितिजन्यादिक्रियाप्रभाविते पूर्वभाविकारकत्वमुत्तरावस्थायामप्यनुगतमिति भवत्येव शेषः कारकम् । *c* ) राजा हि पुरुषाय ददाति यतस्ततो राज्ञः पुरुष इति स्वस्वामिभावोऽवतिष्ठति । तत्र क्रियाकारकसंबन्धः कारणभूतः शेषसंबन्धस्तु फलभूतः । क्रियाकारकसंबन्धो हि वृत्तः स्वाश्रये शेषसंबन्धं फलं निवेश्योपरमते । *d* ) तत्र पूर्वं कर्तृसंप्रदानरूपौ राजपुरुषावभूताम् । शेषसंबन्धकाले तु कर्त्रादिविशेषरूपतानवगम इति तच्छेषभूतं सामान्यं कारकत्वमवतिष्ठते । करणादिसाधनभेदोपाख्यानिमित्ताभावात् । **कारकेभ्योऽन्यः** कारकाणामविवक्षा शेषः । कारकपूर्वक इत्यत्र च कारकत्वैकार्थसमवायिन. करणादयः साधनभेदाः कारकशब्देनोच्यन्ते, न तु कारकसामान्यमपि । *e* ) द्रव्याणा हि सिद्धस्वभावानामयःशलाकाकल्पानां परस्परसंबन्धाभावात् क्रियाकृत एव सः । क्रिया हि निःश्रयणीव द्रव्याण्युपश्लेषयति ! तथा च भाष्यम्—

" प्रातिपदिकार्थानां क्रियाकृता विशेषा उद्भवन्ति कर्म करणमित्यादि "

( cf M. Bhā on P. 2,3.50, )

*f* ) तत्र कर्मादिरूपव्यतिरेकेणान्यस्य विशेषस्यादृष्टः शेषाख्यः संबन्धः कर्मादिरूपोऽवतिष्ठमानोऽनुभूतकर्मादिविशेषे स्वाधारे पदमुपनिबध्नन्नविवक्षितकर्मादिभेदरूपमात्मानमुद्दर्शयति । ततश्च राजपुरुषयोर्वर्तमाने दातृत्वसम्प्रदानत्वे एव फलावस्थायामनुद्रिक्तस्वस्वरूपे सामान्यरूपेण संबन्ध इति व्यपदेशमर्हतः । *g* ) तथा चानुल्लिङ्गितविशेषरूपा सप्तमीयं कारकयोनिः परिगण्यते, शब्दार्थसम्प्रत्ययभेदात् । अन्यो हि सम्प्रत्ययो राजा पुरुषाय ददातीति । न ह्यस्मान्नियमेन स्वस्वामिभावनिमित्त दानं प्रतीयते । करणादिनापि निमित्तेन दानसंभवात् । अन्यस्तु राज्ञः पुरुष इति, स्वस्वामिभावावग-

---

*c* ) A राजादि पुरु°. A ददाति । अत्र राज्ञः°. A °न्धफल. B° न्धः फलं. B °श्यापर°. *d* ) A om. तु. BIO °तावगम°. A °मान्यकारक°. A °तिष्ठत्येव. A °भावात् कार°. A °केभ्योऽनु का°. A° पूर्व इत्यत्र. *e* ) IO °काकल्पना P °काक (ल्प ? ल्पा) ना A क्रियाकर एव. The Bhāsya passage runs as follows–" प्रातिपदिकार्थनां क्रियाकृता विशेषा उपजायन्ते तत्कृताश्चाख्याः प्रादुर्भवन्ति कर्म करणमपादानं संप्रदानमधिकरणम् – इति । *f* ) A °मान्यविशे° B °षस्यादृष्टः. A °न्धन्नपिविव° A मुपदर्शयति. A° मानत्वसम्प्रदानत्वे एकफला° O °फलभूतावे° O om. सामान्य रूपेण A °स्वरूपसामान्यरूपे म°.

मात्। h) अतश्च प्रतीतिभेदादन्यत्वे सिद्धे कर्मादिविशेषेणैव शेषान्येनाप्यनेन प्रातिपदिकार्थो भिद्यमानोऽभिधीयते। तदयमश्रूयमाणक्रियाविषयः संबन्धः स्वस्वामिभावादिनिमित्तानां दानादिक्रियाणामश्रुतेः। संबन्धलक्षणकार्यान्यथानुपपत्त्यानुमीयमानाश्च दानादिक्रियाः संनिहिता एवेति तन्मुखेन समन्वयोपपत्तिः संबन्धिनोः फलस्यापि च संबन्धस्य क्रियानिमित्तत्वं कारकत्वनिबन्धनमस्त्येव कर्मण इवेति सर्वमुपपद्यते। i) ग्रामस्य समीपादागच्छति, वृक्षस्य पर्णं पतति, इत्यादावप्यस्त्येव समीपसमीपिभावादौ संबन्धे क्रियाकारकपूर्वकत्वम्। समीपस्य हि ग्राम आश्रयः एवं पर्णस्य वृक्ष इति। अयमेव सर्वत्र न्यायः। आगमनादिक्रियां प्रति तु ग्रामादेरकारकत्वमुच्यते। श्रूयमाणक्रियाविषयस्तु संबन्धः कारकभेद एव, अविवक्षितकर्मादिविशेषः संबन्धसामान्यस्वभावः क्रियाकारकसंबन्ध एव स इति न तत्पूर्वकः। j) तद्यथा नटस्य शृणोतीत्यादि। करणादिसंज्ञानामत्र निमित्ताभावादप्रवृत्तेः। दुहादिपरिगणनाच्चाकथितकर्मत्वाभावात्। कारकेभ्योऽन्योऽयं शेषः कारक एव। तथा चोपयोगग्रहणमर्थवदित्युक्तम्। एवं मातुः स्मरति, न माषाणामश्नीयात्, सर्पिषो जानीत इत्यादौ कर्मादिकारकभेद एवाविवक्षिततद्रूपः शेष इत्युक्तम्। अत्र च शेषे षष्ठीविभक्तिरुक्ता। संबन्धस्य द्विष्ठत्वाच्च द्वाभ्यामपि संबन्धिभ्यां षष्ठीप्रसङ्ग इति चोदितम्—

" षष्ठी शेष इति चेद्विशेष्ये प्रतिषेधः ( Vā on P. 2.3.50. )

इति। k) राज्ञः पुरुष इति पुरुषशब्दादपि षष्ठीप्रसङ्गे प्रतिषेधः कार्य इत्यर्थः। संबन्धस्य चोद्भूतत्वात् प्रथमा विशेष्यान्न प्राप्नोतीति सापि विधेयेत्युक्तम्—

" तत्र प्रथमाविधिः " ( Vā on P. 2.3.50. )

इति। अत्रोभयत्रापि परिहाराय

" उक्तं पूर्वेण " ( M. Bhā on the above two vārtikas )

इत्यभिहितम्। प्रातिपदिकार्थसूत्रे

" पदसामानाधिकरण्य उपसंख्यानमधिकत्वात् " ( Vā on P. 2.3.46. )

इति चोदिते

g) I राजपुरु°. A°वावयवान्नूनम्। h) A °भेदानन्यत्वे. A विशेषेणैव. A °प्यनेनेव प्रा°. O om. भिद्यमानोऽभिधीयते. B °तदेवमश्रूय°. BO om. संबन्धः. A °मानास्वादानादिक्रियासंनि°. A om. तन्मुखेन ... इवेति. i) A ins. आगमनक्रिया प्रति तु ग्रामादेराणि between पततीत्यादौ and अस्त्येव. A समीपभावादौ. BO °भावादेरसंबन्ध°. A °पूर्वत्वम्. O °दत्वसपूर्वत्वम्. O °देरेकत्वमु°. A नैतत्पूर्वकः. j) A °णनादक°. B °न्योऽय विशेषः. A °क्षितरूपः. A इत्युक्तः. I शेष एव इत्युक्तम्. A अत्र च शेषषष्ठीप्रसङ्गे प्रतिषेध कार्य इत्यर्थविभक्तिरुक्ता. A °प्रसङ्गे इति चो° k) A विशेष्ये प्रथमान प्रा°. A साविधे°. A तत्प्रथमावि°. B °मधिकरणत्वात्.

" न वा वाक्यार्थत्वात् ( Vā on P. 2.3.46. )

इत्युक्तम् । तदेवात्रातिदेशायानूदितम् । [l]) राज्ञ इत्येतत्पदसमन्वयवशेन पुरुषस्य संबन्धित्वमवगम्यत इति वाक्यार्थोऽत्र संबन्धोऽन्तरङ्गे पदार्थमात्राश्रये संस्कारे निमित्तं न भवति, बहिरङ्गत्वादिति वीरः पुरुषो नीलमुत्पलमित्यादिवदत्र षष्ठ्यभावः प्रथमा च सिद्धेत्यर्थः । यद्येवं राजशब्दादपि वीरादिशब्दादिवानेन न्यायेन षष्ठी न स्यात् । प्रथमा च स्यात् । [m]) नैतदस्ति विशेष्यगतस्यैवाधिक्यस्य वाक्यार्थत्वात् । तद्धि प्रधानं प्रथममजहत्स्वरूपमेवोपकार्यतामपेक्षिते गुणे समापद्यत इति तस्यैवाधिक्यं वाक्यार्थः कथ्यते । गुणस्य तु प्रधानोपकाराय प्रवर्तमानस्य स्वात्मप्रतिष्ठत्वोपकारकत्वासंभवादुपक्रम एव प्रधानोपयोगक्षमं संबन्धिसामान्यापेक्षया रूपान्तरं विपरिवर्तते । तदुक्तं भाष्ये—

" अर्थरूपमेवैतदेवंजातीयकम् "....( M. Bhā on P. 2.3.50. )

इति । तथा च गुणाच्छेपषष्ठी न्याय्या । समानाधिकरणं तु विशेषणं नीलादि प्रधानेनोत्पलादिना सहैकात्म्यमिवापद्यमानं न व्यतिरेकं भजत इति न तत्र षष्ठी भवति ॥ १५६ ॥

एतद्वस्तुसतत्त्वं प्रतिपादयति—

**द्विष्ठोऽप्यसौ परार्थत्वाद् गुणेषु व्यतिरिच्यते ।**
**तत्राभिधीयमानः सन् प्रधानेऽप्युपभुज्यते ॥ १५७ ॥**

( 152 ) [a]) द्विष्ठ एकः संबन्धः । तत्र चैकैव षष्ठी न्याय्या । षष्ठीद्वये संबन्धद्वयं प्रतीयेत । सा चैकैव षष्ठी भवन्ती गुणादेव भवति न प्रधानात् । यस्मादसौ संबन्धो द्वयोरपि संबन्धिनोः स्थितः, तयोर्गुणप्रधानभावेनैकवाक्यत्वात्, प्रधानानुरोधित्वाद् गुणानामेव रूपपरिवर्तनस्यौचित्यात् तत्रैव फलतीति गुणादेव संबन्धकार्या षष्ठी न्याय्या । [b]) तथा हि गुणेषु व्यतिरेकमाधिक्यं दर्शयति संबन्धः । प्रधानं तु स्वरूपादप्रच्यवमानमेव सबन्धमनुभवति । एवं हि तस्य प्राधान्यं भवति यदि गुणानुरोधेन

---

[l]) A °तत्सबन्धसमन्व°. A पदार्थभावाश्रये. BO om. सस्कारे. A om न before भवति A ins न after भवति. A °रङ्ग इति. A प्रधातसिद्ध इत्यर्थः. A om. प्रथमा च स्यात्. [m]) A °तामाक्षिपति. A °त्मप्रतिष्ठस्यो°. A om. भाष्ये. A °मेवैतज्जाती°.

का. १५७. A °मिधीयमानश्च. A °युज्यते.

( 152 ) [a]) A तत्र एकैव. I °द्वय सं°. A प्रतीत्यते. A तथा चैका ष°. O om. भवन्ती. B प्रभवति. I स्थितयोः गु°. P °णानामेकत्वरूपपरि°. E om. यस्मादसौ ... गुणादेव. [b]) A तथा च. A व्यतिरिक्तमाधि°. P °क्यमुद्दर्श°. A संबन्धस्वरूप । प्रधा°. A इदं हि. B रूपपरिवर्तमान; E °विपरिवर्तमानं. A षष्ठ्याः. A स्पष्ट°. BO प्रधानस्याधि°. A प्रतीयते.A om.पदसमूहस्य.

रूपपरिवर्तनं नासादयति । गुणाश्रयतया च संबन्धस्याभिधाने षष्ठ्या प्रधानगतमपि रूपमुपभुक्तं स्पृष्टमेवाभिहितमेवेत्यर्थः । एतत्तदुच्यते प्रधानगतस्याधिक्यस्य वाक्यार्थत्वं गुणसंबन्धेन प्रतीतेः । परस्परसाकाङ्क्षस्य पदसमूहस्य वाक्यत्वात् । [c]) राज्ञ इति हि स्वामित्वमवगम्यमानमन्यथानुपपत्त्या पुरुषेऽपि स्वत्वलक्षणमतिरेकमावेदयते । तथा च पुरुषादन्तरङ्गात् प्रथमैव भवतीति बहिरङ्गस्य संबन्धस्य पदान्तरसमन्वयान्यथानुपपत्त्यैव गमितत्वात् प्रातिपदिकार्थ एवाधिकास्यानुप्रवेशात् । यदा तु विशेषणविशेष्यभावे कामचारात् पुरुषस्य राजेत्युच्यते तदा गुणात् पुरुषादेव षष्ठीति न व्यभिचरति लक्षणम् ॥ १५७ ॥

[d]) उक्तमिदं क्रियाकारकपूर्वकः संबन्ध इति । तत्र क्रियाकारकसंबन्धोऽस्य निमित्तम्, स च फलभूतात् संबन्धादनुमीयमानो न विशेषेणानुमातुं पार्येत, अपि तु सामान्येन, एवंस्वभावत्वादनुमानस्येति कुतोऽयं विशेषावसाय इत्याह—

**निमित्तनियमः शब्दात् संबन्धस्य न गृह्यते ।**
**कर्मप्रवचनीयैस्तु स विशेषेऽवरुध्यते ॥ १५८ ॥**

( 153 ) [a]) पितुः पुत्रः, पशोः पाद इत्यादौ संबन्धिस्वरूपविशेषावधारणादेव नियतस्थितिजननादिक्रियाप्रभावितत्वं संबन्धस्य प्रतीयते । राजपुरुष इत्यादौ तु याञ्चाविनिमयापहारप्रभृतिभिरपि स्वस्वामिभावस्य संभवाद्यद्यपि नियतनिमित्तत्वं नावधार्यते तथापि दानादीनामन्यतमाविनाभावात् क्रियानुमीयत एव संबन्धिस्वरूपादिति नायं कर्मप्रवचनीयविषयः । [b]) क्वचित्तु शब्दसामर्थ्यान्निमित्तविशेषो नावधार्यते । निमित्तसामान्यावधारणं तु । सोऽयमेवंविधो विषयः कर्मप्रवचनीयानाम् । तैरन्वादिभिर्निमित्तनियमेनावच्छिद्यते संबन्धः । तथा हि शाकल्यस्य संहितामनु प्रावर्षदित्यत्र संहिताप्रवर्षणयोर्हेतुहेतुमद्भावो निशमयतिक्रियाजनित इत्यनुनावद्यते । तथा क्रियायास्यान्यत्रानुनिशम्येत्यादौ साहचर्योपलब्धेः । कर्म प्रोक्तवन्त इति च कर्मप्रवचनीये-

---

[c]) I °गम्यमानो, न्यथा°. A ins. गमितत्वात् प्रातिपदिकार्थ मैवाधिक्यं सा । ननु प्रवेशात् मत्या before पुरुषे. B °न्तरसंबन्धान्यथानुपपत्त्यैव निमित्तत्वात्. A °धिक्यं सा न तु प्र°. B न ह्यभिच°. [d]) A पार्यते. I °नुमीयमानस्येति.

का. १५८. A °षेऽनुरुध्यते. B °षेण कथ्यते.

( 153 ) [a]) A पशोः पदं. E बियतस्थि°. A °याभावन्वितत्वं. E °प्रभाविकत्वं. A तु अन्वादिभिमपापहारप्र°. A °वाद्यदपि नि°. A °यानुमितस्वसंबन्धिस्व°. B °स्वरूपा इति. [b]) निवृत्तानियम एव च क्रियते संबन्धः. A निशामयति°. BE निगमर्यातीक°. A वेद्यते. A तथा क्रि°. A °यान्यत्रानु° A °प्रकाशतां ( प्रीयकारान् ). A न ह्येव भवति.

त्यतिक्रान्तक्रियाप्रकाशनाङ्गीकारात् संप्रति क्रियामयं न द्योतयति । c) क्रियापदस्य चाश्रुतेः द्योत्याभिधायकाभावे तन्निष्ठद्योतकत्वाभावात् । स्वरूपेण तु संबन्धो विभक्त्यैव प्रतिपाद्यते इति नापि तद्वाचकः । क्रियापदाक्षेपे तु नास्य सामर्थ्यम्, कारकविभक्त्यभावादिति संबन्धविशेषावद्योतकत्वं स्थापितं कर्मप्रवचनीयानाम् । तदुक्तमनन्तरकाण्डे

" क्रियाया द्योतको नायं न संबन्धस्य वाचकः ।
नापि क्रियापदाक्षेपी संबन्धस्य तु भेदकः ॥

इति । d) एवमपि " अधि ब्रह्मदत्ते पञ्चालाः " इति परिपालनादिक्रियानिमित्तत्वं स्वस्वामिभावस्याधिनावेद्यते । " अभिमन्युरर्जुनतः प्रति " इति परपराजयनादिक्रियाकृतोऽनुकार्यानुकरणभावोऽर्जुनाभिमन्य्वोः संबन्ध इति प्रतिना प्रकाश्यते । एवमन्यत्रापि यथायोगमनुगन्तव्यम् । तदयमश्रुतक्रियाविषये संबन्धे कर्मप्रवचनीयाना महिमा । श्रुतक्रियाविषये तु श्रूयमाणैव क्रिया नियतं निमित्तमवधार्यत इति ॥१५८॥

e) तत्र त्विदं विचार्यते । शेष इत्येवं सिद्धायां षष्ठ्या ' अधीगर्थ ' इत्यादिना पुनर्विधानं किमर्थम् । ' कर्मणि शेषे ' इति च सामानाधिकरण्येन विशेषणानुपपत्तिः [ कर्मत्वविवक्षाया हि न शेषः, कारकाणामविवक्षा शेष इत्युक्तेः । फलभूतशेषविवक्षायां च तिरोहितत्वात् कर्मत्वस्येत्याशङ्क्याह—

**साधनैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः ।**
**प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये ॥ १५९ ॥**

( 154 ) a) कर्मादीनि साधनानि शेषस्य व्यपदेशार्थान्यत्रोपादीयन्ते न तु स्वार्थम् । शेषे षष्ठी । कस्मिन् शेषे ? । कर्मणि करण इति वा भूतावस्थागतकर्मत्वादिरूपाश्रयेण शेषस्य विशेषणात् कर्माद्येकार्थसमवायिनि फलभूते शेष इत्यर्थोऽवतिष्ठते । तथा च विशेषणोपपत्तिः । b) षष्ठी तु सिद्धापि प्रतिपदमधीगर्थेत्यादिना नियतविषयतया विधीयते, पुनर्विधानेन समासो यथा निवर्त्येतेति । पुनः श्रुतिर्हि नियमार्था । तथा च षष्ठ्येव भवतीति वाक्यार्थः । नियमे चान्यनिवृत्तिः प्रधानम्, अन्यश्च प्रति-

---

c) A ins नापि तद्वाचक before क्रियाप°. A °श्रुतिस्तेभ्योऽभिधायकत्वाभावात् नियमद्योतकत्वाभावात्. A °चकक्रिया°. A °पेऽनुशब्दस्य सा°. A क्रियाद्योतको न सं°. A °पदाक्षेपात्. A भेद इति. d) A om. अधि. A क्रियायानि°. A वेद्यते. A अभितः पुरजनेभ्य प्रतीति°. A °क्रियावृत्तेर नुनाभिन्न सं°. A महिमा क्रिया°. e) नन्विदं वि°. A कर्मत्वाविव°. A °त्युक्तफलभूतः शे°. A °क्षा अति°.

( 154 ) a) A स्वार्थशेषे. A °स्थानागत°. b) A °विषगा पुनः वि°. A om. पुनर्विधानेन. A निवर्तेतेति. A पुनपवृत्तिर्हि°. B तथा च शेषे ष°. A अन्यथा प्रतियोगं ष्यं°.

योगी व्यवच्छेद्यः । [c] स चात्र षष्ठ्यभावः स च समासे भवतीति सामर्थ्यात् समासनिषेधोऽयमवतिष्ठते । तदेतदुक्तम् प्रतिपदविधाना षष्ठी न समस्यते इति । सूत्रव्यापार एवानेन वार्तिकेन दर्शितो नापूर्वोऽर्थः । क्व पुनरयं समासप्रतिषेधः । यत्र समासस्य प्राप्तिः । क्व च प्राप्तिः । सुबन्तेषु मातुः स्मृतमिति ॥ १५९ ॥

तथा ह्यत्र ।

**निष्ठायां कर्मविषया षष्ठी न प्रतिषिध्यते।**
**शेषलक्षणया षष्ठ्या समासस्तत्र नेष्यते ॥ १६० ॥**

(155) [a] कृद्योगा च षष्ठी समस्यत इत्युक्तम् । तथा च

" कर्तृकर्मणोः कृति " ( P. 2.3.65. )

इति या षष्ठी तत्र भवत्येव समासः 'धर्मानुस्मरणम्, अर्थानुस्मरणम्' इत्यादौ । न ह्येष षष्ठ्या नियमः 'कर्तृकर्मणोः कृति' इति पुनः कर्मग्रहणाच्छेषग्रहणस्य निवृत्तेरित्यपूर्वविधानमिदम् । तेन षष्ठ्येवेति षष्ठीनियमद्वारेण समासप्रतिषेधमावेदयते । [b] मातुः स्मृतमित्यादौ निष्ठाप्रयोगे

" न लोकाव्यय "....( P. 2.3.69. )

इत्यादिना 'कर्तृकर्मणोः कृति' इतीयं षष्ठी निषिद्धेति

" अधीगर्थदयेशां कर्मणि " ( P. 2.3.52. )

इत्यनेनैव कर्मणि शेषत्वेन विवक्षिते षष्ठीति सामान्येन सिद्धायां पुनर्विधानात् समासप्रतिषेधार्था विज्ञायते । ननु च

" क्तस्य च वर्तमाने " ( P. 2.3.67. )

" नपुंसके भाव उपसंख्यानम् " ( Vā on P. 2.3.67. )

इत्यनेनात्र षष्ठी । [c] नैतत् ।

" शेषविज्ञानात् सिद्धम् " ( Vā on P. 2.3.67. )

इत्यस्य प्रत्याख्यानात् शेषषष्ठ्येवेयम् । पुनर्विधानेन समासाभावं ज्ञापयति । एवमपि मातुः स्मृतमिति प्रयोगानुपपत्तिः । स्मरतेः सकर्मकत्वात् कर्मणि निष्ठाप्रसङ्गा-

---

[c]) A स चासमा°. A °धो भवति षष्ठ्याः । तदुक्तं प्र°. A नापूर्वार्थः. E सुबन्धेषु. A तथा च.

(155) [a]) A धर्मस्मरणमनुस्मरणम्. A न शेषषष्ठीनि. A कर्तृकर्मग्र°. A °षग्रहणनि°. I ष्ठीनियमस्मरणस°. [b]) A कृतीतिष°. A °र्थं वि°. B om. ननुच. [c]) A स्मृतेः स°. A ins. अपि before इति.

न्मातृसामानाधिकरण्यान्माता स्मृतेति स्यात्। संबन्ध्यन्तरापेक्षायां तु मातुः स्मृताया इति प्रयोगो न्याय्यः । [d]) सत्यमेतत्।

" कर्मादिष्वकर्मकवद्वचनम् "

इति तूक्तम्। तथा चात्राकर्मकवद्भावे क्तप्रत्ययान्तेन कर्मणाभिधानाच्छेषविवक्षाया तत्र षष्ठी पुनर्विधीयमाना समासप्रतिषेधाय सम्पद्यत इति स्थितमेतत्। एवं

" ज्ञोऽविदर्थस्य करणे " ( P. 2.3.51. )

इत्यादौ प्रतिपदविधाने सर्पिषो ज्ञानं मधुनो ज्ञानमित्यादिः समासप्रतिषेध उदाहार्यः। ननु चात्र समासे कृते संबन्धमात्रं प्रतीयते, न तु करणपूर्वकः संबन्ध इति विग्रहवाक्यार्थाभिधाने सामर्थ्याभावादत्र समासो न भविष्यतीति किमनेन यत्नेन। [e]) नैतदस्ति। वाक्येऽपि न शाब्दः संबन्धविशेषावसायः, सादृश्यात्। तथा हि कर्मषष्ठ्यामपीदृशमेव वाक्यम्। तत्र यथार्थप्रकरणादिना जानातेर्विदर्थत्वसंप्रत्यये कर्मषष्ठ्या भवति समासः तत्त्वज्ञानं वर्णज्ञानमित्यादौ। तथा च सर्पिषो जानामीत्यत्रापि प्रकरणादेरविदर्थत्वसंप्रत्यये करणषष्ठ्या अपि भवेत् समास इति शेषग्रहणानुवृत्त्याऽत्रापि पुनर्विधानमाश्रित्य परिहरणीयः स इति स्थितम्। विभक्तिविधानस्य स्वादिविधिनैकवाक्यत्वेऽप्यवयववाक्याना स्वव्यापारस्य निवृत्तेः प्रतिपदविधानत्वे न काचिदनुपपत्तिः॥१६०॥

[f]) द्विष्ठः संबन्धो गुणेषु व्यतिरिच्यत इत्युक्तम्। गुणप्रधानभावस्य चैकत्र विरोधात् भाष्य उक्तम्—

" न तर्हीदानीमिदं भवति राज्ञः पुरुषस्येति ' ( M. Bhā on P.2.3.51. )

इति। तत्र प्रतिसमाधानमुक्तम्—

" भवति बाह्यमर्थमपेक्ष्य " ( M. Bhā on P. 2.3.51. )

इति। एतद्भाष्यं व्याचष्टे।

**अन्येन व्यपदिष्टस्य यस्यान्यत्रोपजायते।**
**व्यतिरेकः स धर्मो द्वौ लभते विषयान्तरे ॥ १६१ ॥**

( 156 ) राज्ञः पुरुषस्य कम्बल इत्यादौ राज्ञा विशेषणेन **व्यपदिष्टस्य** विशेष्य-

---

[d]) °ष्वक वद्व°. A °वे प्रत्यये तेन. A °क्षया तत्र. A पुनर्विधानाभावात्. A इति ग्रहवा°. A om. अत्र before समासः. A अन्येन यत्नेन. [e]) A om. नैतदस्ति. A स्ववाक्येऽपि. A यथा प्रक°. A °र्थस्य च संप्र°. A षष्ठ्या अपि भवेत् स.° A सत्वज्ञा°. A °वि करणा°. B °र्थत्वे संप्र°. A °धानेन का°. [f]) A गुणे व्य°. B om गुण....उक्तम्. A न ही दानीं.

का. १६१. A यत्रान्यत्रो°.

( 156 ) A राज्ञो. A विशेष्यत्वं तथापि तस्य. A om. पुरुषस्य. E समभिव्याप° BN om. सः.

तया ज्ञापितस्य पुरुषस्य प्रधानभूतस्य अन्यत्र कम्बलादौ प्रतियोगिनि प्रधाने व्यतिरेक आधिक्यं संबन्धो जायते इति स भिन्नविषयौ गुणप्रधानभावलक्षणौ द्वौ धर्मौ प्रतिपद्यते । 'व्यपदिष्टस्य' इति भूतकालोपादानेन संबन्धिद्वययोगो भिन्नकालगुणप्रधाननिमित्तो न विरुध्यत इत्याह ॥ १६१ ॥

ततश्च ।

**प्राधान्यं स्वगुणे लब्ध्वा प्रधाने याति शेषताम् ।**
**सहयोगे स्वयोगेऽतः प्रधानत्वं न हीयते ॥ १६२ ॥**

(157) [a]) अतो विषयभेदाद्धेतोः पुरुषस्य राजानं संबन्धिनं प्रति प्राधान्यं न निवर्तते । स्वस्मिन् हि तत्र गुणेऽप्रधाने राजलक्षणे प्राधान्यं पूर्वमेव तेन लब्धम् । कम्बलादौ त्वपरस्मिन् प्रधाने शेषभावं गुणत्वं यातीति तत्र स्वस्य कम्बलादियोगे पूर्वप्रतीतं प्राधान्यं नावगच्छति, विषयभेदात् । गुणप्रधानभावस्यैकत्राविरोधादित्यर्थः । [b]) 'सहयोगे' इति प्रसङ्गान्निदर्शनमभिन्नयोगक्षेममाह ।

" सहयुक्तेऽप्रधाने " (P. 2.3.19.)

इत्यनेनाप्रधानात् तृतीया विधीयते पुत्रेण सहागत इति । तत्र पुत्रो देवदत्तस्येति यथा विशेष्यमाणस्तदपेक्षया प्रधानमप्यागमने सहार्थसामर्थ्यादागतसंबन्धादनुमीयमानागमनसंबन्धोऽप्रधानमिति भवति ततोऽप्रधानलक्षणा तृतीया । तथा पुरुषो राजापेक्षया प्रधानमपि स्वविशेष्यापेक्षयाप्रधानत्वाद्राज्ञः पुरुषस्य धनमिति षष्ठीं प्रतिपद्यत इति सिद्धम् ॥ १६२ ॥

इति भूतिराजतनयहेलाराजकृते प्रकीर्णकप्रकाशे साधनसमुद्देशे शेषाधिकारः ॥

---

(158) [a]) एवं तावत् कारकात्मा विभक्त्यर्थो विचारितः । प्रथमा तु

" अभिहिते प्रथमा " ( M. Bhā on 2.3.46. )

इत्येवं कैश्चिद् विहिता । तिङादिभिरभिहिते कर्मादौ कारके प्रथमा । पच्यते ओदनः, मांसपचनो वह्निः, गोघ्नोऽतिथिः, प्रस्कन्दनः स्तंभः, निशा नीशाणा, पचति देवदत्तः इति यथाक्रमं कर्मादिकर्तृपर्यन्तकारकाभिधानं तिङादिनोदाहृतम् । [b]) कृतः

---

का. १६२. B प्राधान्येस्वे गुणे B ° गे तं.

(157) [a]) E राज्ञा न संबन्धिना. B गुग अनुप्रधाने A पूर्वमेवा तेन लब्धकम°. A च परस्मिन्. B °गे प्रतीत. E °वं गुणत्वाद्यातीति. E योगपूर्व प°. [b]) A ins. योग इति ( before प्रसङ्गा.° ) E सहयोगे प्रधान इ°. E न क्रिया वि. A °क्षयाऽप्रधा°. B °मिति तत्र भवन्ति ततो°. A °क्षया प्रधा°.

(158) [a]) E गोन्घोतिथिः. B °घ्नोऽमिः. BN तिङन्तादिना. [b]) I कृतकट°. A द्विगु रितिस°. B °पदनिबन्धनया प°. A °साने सतीतरनिबन्धनया.

कट इति कृता कर्माभिधानम्, औपगव इति तद्धितेन संबन्धाभिधानम, चित्रगुरिति समासेन । राज्ञः पुरुष इत्यत्र परस्परापेक्षयोः संबन्धमात्रे वाक्यपर्यवसानेऽन्यतरपदनिवद्धया षष्ठ्या द्विष्ठसंबन्धाभिधाने परस्मादभिहितलक्षणैव प्रथमा । c) अत्र तु लक्षणे चोदितम्-

" अभिहितलक्षणायामनभिहिते प्रथमाविधिः " ( Vā on P. 2.3.46. )

इति । वृक्षः पर्वतः इत्यादौ तिङादिभिरनभिहिते कस्मिंश्चित् कारके प्रथमा न प्राप्नोति । विधेयेत्यर्थः । अत्र परिहारः ।

" अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति "

( M. Bhā on the above Vārtika. )

इत्युक्तः । क्रियानुषङ्गमन्तरेणाव्यवहार्यः पदार्थ इति सामान्यरूपाव्यभिचरितसंबन्धा सर्वत्रास्तिक्रिया सन्निधीयत इति वृक्षोऽस्तीति वाक्यप्रयोगादभिहिते तिङा कर्तरीयं प्रथमा । d) तदुक्तं भाष्ये—

" न सत्तां पदार्थो व्यभिचरति "

इति । अवधृतपदार्थाधिकरणत्वाच्छब्दप्रयोगस्यावधारणस्य च सत्तापेक्षत्वादुपचारसत्तासमाविष्टः सर्वः पदवाच्योऽर्थ इत्यर्थः ।

तथा च प्रागुक्तम्

प्रवृत्तिहेतुं सर्वेषां शब्दानामौपचारिकीम्
एतां सत्ता पदार्थो हि न कश्चिदतिवर्तते ॥

इति । e) नास्ति बध्यते नीयते इत्याद्यनुषङ्गोऽपि निरूपितस्य सतो भवति इत्यौत्सर्गिकी सर्वत्रेयं सत्ता ॥ तथा च विरोधिभिरविरोधिभिश्च धर्मैरेतस्यामवस्थित एव शब्दः समन्वेतीति प्रागेवोक्तं तत्रैव च निर्णीतम् । एवमपि

" अभिहितानभिहिते प्रथमाभावः " ( Vā on P. 2.3.46. )

इति चोदितम् । 'प्रासाद आस्ते' इत्यादावासिक्रियापेक्षयाधिकरणशक्तिर्नाभिहिता ।सदिक्रियापेक्षया त्वभिहिता कृता। ततश्चाभिहितलक्षणा प्रथमा प्राप्नोति । f) तथा 'फलिता वनस्पतयः', 'तारस्वराः परभृताः' इत्यादौ समानाधिकरणसंबन्धे प्रातिपदिकार्थव्यतिरेकाभावान्न किंचित् केनचिदभिहितमित्यभिहितलक्षणा प्रथमा

---

c) A °क्षणमनभि°. A वृक्षः पचते इ.° A प्रथमा पा°. A विधेयस्यार्थः, A °पुरुषेऽप°. A °न्तरेण हार्यः. A संविधीयते. d) E °र्थत्वाधिक°. A °च्योऽर्थः शब्दार्थः°. A °नामनपायिनीम.:BO मनपयिनाम्. e) A om. विरोधिभिः ... प्रथमाभावः. E °वमैरेकस्याम°. B त्रैव निमित्तम्. A om. साद ... कृता and ins सा च क्रियापेक्षा त्वभिहिता. f) A वनस्य तरवः स्वराः प°. A °संबन्धमा°. A om. केनचित्. I °दाव्या हा°. A °इति अन°.

न स्यात्। 'उच्चैः' 'नीच्चैः' इति चास्तिपदाध्याहारेणाधिकरणशक्तिप्रधानस्याव्ययस्यासंबधान्न केनचिदभिधानमिति कथं प्रथमा [g]) एवं

" तिङ्समानाधिकरणे प्रथमा " ( M. Bhā on P. 2.3.46. )

इत्येतदप्यनेनैव दृष्टान्तेन लक्षणमलक्षणम्। अपरमप्यत्र दूषणमुक्तम्—

" शतृशानचोश्च निमित्तभावात्तिङोऽभावस्तयोरपवादत्वात् "

( Vā on P. 2.3.46. )

इति। इह विभज्यान्वाख्यानपक्षे 'देवदत्त पच् ल्' इति स्थिते यावत्तिङ उत्पत्तिर्नास्ति तावत् तिङ्समानाधिकरणत्वाभावात् प्रथमा न प्राप्नोति। [h]) तथा च देवदत्तशव्दादविशेषविहिताः सर्वे स्वादयः स्थिता इति लटः स्थाने द्वितीयाद्यन्तपदसामानाधिकरण्ये विधीयमानौ शतृशानचौ प्राप्नुतोऽपवादभूतौ, न तु तिङः। तेषां तु लिङादिरवकाशो भवेत्। स एव च प्रथमाया अपीति 'पचति देवदत्तः' इति लट्समानाधिकरणः प्रयोगः प्रथमान्तो न स्यात्। तदेवं लक्षणान्तरे प्रत्याख्याने

' प्रातिपदिकार्थलिङ्गपरिमाण....( P. 2.3.46.)

इत्याद्याचार्यीयमेव लक्षणं न्याय्यमवस्थापितम्। [i]) तत्र विचार्यते। ङ्याप्प्रातिपदिकस्य स्वादिप्रवृत्तित्वेन विज्ञातत्वात् प्रातिपदिकस्यैवार्थ इति लब्धेऽर्थे विशेषणं प्रातिपदिकग्रहणं नोपयुज्यते। तथा च तदसंयुक्तमेवार्थशब्देन। अनर्थकात प्रथमां विधातुम् 'अध्यागच्छति, पर्यागच्छति' इत्यनर्थकस्यापि निपातस्य प्रातिप्रदिकसंज्ञोपसंख्याता। यद्येवं संज्ञासामर्थ्यात् प्रथमा भविष्यति। न हि विभक्तिविधानादन्यप्रातिप्रदिककार्यस्यात्र संभवः। [j]) किं च

अधिपरी अनर्थकौ ( P. 1.4.93.)

इति गतिसंज्ञाबाधनार्थात् कर्मप्रवचनीयसंज्ञाविधेर्लिङ्गादर्थवत्त्वमेषां भवतीत्यनुमीयते। अन्यथा क्रियाविशेषद्योतकत्वाभावे गतिसंज्ञाप्राप्तिरेव न स्यात्। स्वादिविधाने च भिन्नवाक्यतापक्षेऽविशेषणोत्पद्यमानाः स्वादयः सिद्धा एव। अत्रैकवाक्यतापक्षेऽपि

---

[g]) A om. एव. A °करणा प्रथमेत्येतदप्यास्ताम्। च दृष्टान्तेन°. A रात्रभावस्तयोरप°. A पदविभज्यान्वा°. A पचते इतिस्थि°. E देवदत्त इति स्थिते. [h]) A °शेषे विहि°. A °षा तुतिङा°; E तु लङादिर°. A °माया अप्यस्ती°. A °दौ तिङ्स°. A लक्षणन्तस्य च प्र°. [i]) A इति प्रकृतेर्वि°. E यद्येवं सामर्थ्यात्. A पद्येवमसंभवात् सामर्थ्यात्. [j]) A °संज्ञाविधानलिङ्गा°. A °ङ्गादर्थवत्त्वमे°. A एव। अत्र°. A प्रत्ययविषमे. A A प्रकृत्यपेक्ष°. A करण इत्यर्थः। स्वादिस्यावृत्तेरेव.

प्रत्ययनियमे प्रकृत्यपेक्षत्वात्तियनस्य कर्मण्येव द्वितीया न तु करण इत्यनर्थकाद्व्यावृत्तिरेव । अर्थनियमो वाश्रयणीयः कर्मणि द्वितीयैवेत्यादिः । [k]) एवं च कृत्वाव्ययेभ्यो निःसंख्येभ्यः स्वादयो विधन्त इत्युच्चैर्नीचैरित्यप्यत्र नोदाहृतम् । अव्ययाल्लुग्वचनमप्यत्र ज्ञापकमस्ति । क्रमव्यतिक्रमे च प्रयोजनाभावात् पाठक्रमायाता प्रथमैवात्र । तस्मादर्थविशेषणमेव प्रातिपदिकग्रहणम् । सामर्थ्यलब्धमपि व्याप्त्यर्थं प्रातिपदिकमात्रार्थे प्रथमां विधत्ते, नाव्ययादेव । [l]) तत्र प्रातिपदिकसामान्येन विशेष्यमाणोऽर्थः सत्तेति केचिदाहु. । सा हि सर्वत्रार्थेष्वव्यभिचरितसंबन्धा प्रथमं प्रतीयमाना विभक्त्यादिसंबन्धनिरपेक्षस्य प्रातिपदिकमात्रस्यार्थ इति व्यवस्थाप्यते । कल्पितान्वयव्यतिरेकवशेन हि शास्त्रीयार्थनिर्णयः । तत्र च शुद्धस्य प्रातिपदिकस्य वृक्षं वृक्षेणेत्यादौ विभक्त्यर्थानुगमेऽपि सत्तामात्रानुगमात् तदर्थनिश्चय· । [m]) निरधिकरणा च सत्ता न संभवतीति द्रव्याधिकरणैव तदर्थः तावति हि निरपेक्षः शब्दः । लिङ्गादौ प्रत्ययापेक्षणात्मात्रग्रहणाच्चेहेयानर्थौ व्यवस्थाप्यते । ततश्च पंचकपक्षेणास्याविरोधः । येनाप्युक्तं प्रातिपदिकार्थः सिद्धेनेति तेनापि नामपदानामाख्यातपदवैलक्षण्येन सिद्धस्वभावार्थाभिधायित्वमुक्तं न तु साधनसंपादता सिद्धतास्याभिप्रेता । येन शब्दान्तरप्रयोगसमधिगम्यत्वात्तस्याः प्रातिपदिकमात्रार्थता न भवेदिति चोद्येन । [n]) धर्ममात्रे च शब्दस्य विश्रान्त्यभावान्निमित्तेनात्मरूपतामापादितो निमित्ती प्रातिपदिकार्थ इति केचित् स्फुटमेवाचक्षते । निमित्तं जातिगुणक्रियाः निमित्ती तदाश्रयः समवायवशात् तिरोहितरूप एव । अत एव निमित्तेनात्मरूपतामिवापादित इत्युच्यते । न तु भावतो रूपान्तरापत्तिरत्र विवक्षिता । तदाच्छुरणमात्रं तु तथैवाध्यवसायात् । न चात्र विरम्य व्यापारः उपाध्युपरक्तस्यैव द्रव्यस्य शब्दात् प्रतीतेः । [o]) न तु प्रतिपाद्य प्रातिपदिकाच्छुद्धं द्रव्यं पश्चादुद्भूतं लिङ्गादिविशेषं प्रतीयते । एवं ह्येकपदोपात्तेनापि तेनापत्यादिनेव प्रातिपदिकार्थो व्यतिरिच्येत । न चैवम, तस्माद्विशिष्टस्यैवार्थस्य प्रातिपदिकवाच्यत्वाल्लिङ्गोपरक्तस्यापि प्रातिपदिकार्थत्वात् मात्र-

---

[k]) A तत्त्वव्ययेभ्यो. A om. स्वादयो विधीयन. A om नीचैः. A अन्यथा लुग्व°. A °र्थ्यलक्षण मपि. E °र्थ्यमपि लब्धमपि. P °र्थ्यमलब्ध मपि. A धार्थपदं प्रा°. A °र्थेऽवधत्ते ना°. [l]) A सर्वार्थैः व्यभिचरितसंबन्धा. A ° त्क्याविस°. A °रेके च शा° E वृक्षं वृक्षे वृक्षेणे°. A °र्थानिनुग°. [m]) A ° पेक्षः शब्दलिङ्गादौ. A °हणापेक्षयार्थो. A °स्याविशेषः. E °र्थःसिद्ध इति सेनापि. A °तिनापिनामप°, A °नसपातीसि°. A °कमत्रार्थत्वान्न भवेदिति । चोद्येचध°. [n]) E ° त्तेनानात्मरू°. A निमित्तं प्रा°. A °टमेव चक्ष°. A निमित्ता सत्ता तदाश्रया समाविष्टः समयवशात्. E °रूप इव. A भावनारूपा°. A °त्तिरविव°. A °मात्रे तु तया. A उपाध्य परिमित शुद्धस्यैवद्र°. B पतीयते. [o]) A ननु. A पचकेऽपि प्रत्ययादुद्भूत. A तेन माना दिपदेनेव. A °स्यैवास्य. A °च्यत्वे लिङ्गः. A °दासेन कु°. A कर्माद्यधिक प्रा°. A °विधानलिङ्गात्, A °ङ्गाधिक्ये.

ग्रहणादधिकव्युदासे कुमारी वृक्षः कुण्डमिति लिंगग्रहणस्योदाहरणं दत्तम् । यथा हि कर्माधिके प्रातिपदिकार्थे प्रथमा न भवति मात्रग्रहणात् संबोधने प्रथमाविधेश्च लिङ्गात् तथा लिङ्गाधिकेऽपि न स्यादिति लिङ्गग्रहण क्रियते । [p]) परिमाणग्रहणं प्रस्थादीनां परिच्छेदकनिमित्तस्तद्वत्यभेदेन प्रयोगः साधुर्यथा स्यादिति, प्रस्थः परिमाणमेषा व्रीहीणां प्रस्थो व्रीहयः खारी आढकमिति । सोऽयमित्यभेदोपचारे हि भेदावहानां मानमेयसंबन्धो न प्रतीयते । आनन्तर्यादिसंबन्धान्तरमपि वा प्रतीयेतेति परिमाणाधिके प्रातिपदिकार्थे मानमेयसंबन्धनिमित्ताभेदोपचाराभिव्यक्त्यर्थं प्रथमा विधीयते । असति तु प्रथमाविधानेऽस्मिन्

‘ तदस्य परिमाणम् ’ ( P. 5. 1. 57. )

इति योगविभागात् तद्धितः, पक्षे वाक्यं स्यात् । [q]) इदानीं तु वचनसामर्थ्यात् त्रयमपि भवति । तदेतत् वक्ष्यति—

मानमेयादिसंबन्धविशेषेऽङ्गीकृते तथा ।
प्रस्थादीनामसाधुत्वं तद्धितेन विना भवेत् ॥
तद्धितो योगभेदेन वाक्यं वा स्याद् विभाषितम् ।
परिमाणाधिके तत्र प्रथमा शिष्यते पुनः ।

इति । क्रियानिमित्तस्य चात्र परिमाणशब्दस्याश्रयणादुन्मानादेरपि ग्रहणम् । [r]) शुक्लादीनां मतुब्लोपात्तद्धितवृत्तावभेदविवक्षायामेव प्रातिपदिकग्रहणादेव प्रथमासिद्धिः। एवं विंशत्यादीना गुणिनिवृत्तौ । वचनशब्देन पूर्वाचार्यप्रसिद्धया सङ्ख्योच्यते । तेन संख्यायामभिहितायामपि प्रथमानेन विधीयते । तद्यथा एको द्वौ बहवः । द्वितीयादयस्तु यथायथं कर्मादिष्वेभ्यः सिद्धाः । कर्मादिविशिष्टानामेकत्वादीनामेभिरप्रत्यायनात् । मात्रशब्दोऽवधारणार्थ इति कर्मादिविशिष्टे प्रथमा न भवति । तत्र वा द्वितीयादयो बाधकाः। संबोधनविशिष्टे प्रथमाविधानाद्वा लिङ्गात् कर्माद्यधिके तदभावसिद्धिः । [s]) न ह्यतिरेकवति प्रातिपदिकार्थे प्रथमाया भावे संबोधने विधिरुपपद्यते, अनेनैव सिद्धत्वादिति मात्रग्रहणं प्रत्याख्यातम् । मीयतेऽनयेति मात्रा संख्या । तस्याः समाहारद्वंद्वेन निर्देशः।

---

[p]) A औपश्लेषिकाभेदे पदकार्यमात्रेऽवश्यं संबन्धनिमित्त°. [q]) E °र्थ्याश्रयणमपि म°. A °र्थ्याद्‌द्वय मपि न भ°. A तदेततदत्यक्त. A °षींगीश्लने तथा. A. प्रसहीनष्ठुत्वम्. A विनाभावेन °द्धिते घोरेङ्गभेदेन. A शेतुमल्लब्धोपात्त इति. A om. क्रियानिमित्तस्य ... ग्रहणम्. [r]) E मतुब्रोपीत्त् इति वृत्तावभेद°. P तद्धित श्रृताव°. A गुणिवृत्तौ. A °शब्दे चार्थप्रसिद्धया. A om. उच्यते. A °दिभ्य एव । सिद्धकर्मा°. A °रेकैर प्राप्यमाणो. A कर्मादिषु प्र°. A तत्रतावद् द्वि. A बाधिकाः. [s]) E न हि व्यतिरे° A न व्यतिरे°. E °या अभावे. A °णं व्याख्यातम्. A एकार्थिभ्यो.

तत्र संख्यायामभिहितायामेकादिभ्यो यथा स्यादिति मात्रग्रहणस्य प्रयोजनं वचनग्रहणेनैव सिद्धमिति ।

" अन्यतरच्छक्यमवक्तुम् " ( M. Bhā on P. 2.3.46. )

इत्युक्तं भाष्ये । [t]) साकल्यार्थं तु मात्रग्रहणं परिमाणशब्दस्य रूढित्वाशंकापनोदनेनोन्मानादिग्रहणार्थमिति केचित् । अवधारणार्थत्वेन स्थिते मात्रशब्दे

" पदसामानाधिकरण्ये उपसंख्यानमधिकत्वात् " ( Vā. on P. 2.3.46. )

इत्युक्तम् ।

" न वा वाक्यार्थत्वात् " ( Vā on P. 2.3.46. )

इति चात्र परिहारोऽभिहितः । अनपेक्षितेतरेतरपदार्थसमन्वयव्यतिरिक्त एव प्रातिपदिकार्थे प्रथमाविधिर्वीरः पुरुष इत्यादाविित्यर्थः । तदेवं यथान्यासमेव प्रथमाविधिर्युक्तः।

( 159 ) [a]) संबोधनेऽपि प्रथमोक्ता । तत्र च संबोधनरूपं व्याचष्टे ।

**सिद्धस्याभिमुखीभावमात्रं संबोधनं विदुः ।**
**प्राप्ताभिमुख्यो ह्यर्थात्मा क्रियासु विनियुज्यते ॥ १६३ ॥**

परिसमाप्तरूपस्य पदार्थस्य क्रियायां विनियोगार्थं यदभिमुखीकरणं तावन्मात्रं संबोधनं प्रातिपदिकार्थाधिकं रूपम् । मात्रग्रहणेन कर्मादिसाधनरूपतां संबोधनस्यापावर्तयति । [b]) य एव हि गमनादौ नियुज्यते कर्ता स एवाभिमुखीकृतः संबोधनाधिकः । अभिमुखीकृतस्य च नियोगोत्तरकालं क्रियासाधनात् परम्परया क्रियोपकारकतामनुभवति संबोधनं न तु साक्षात्कारकम् ॥ १६३ ॥

क्रियापक्षेऽपि संबोधने विशेषणविशेष्यभाववद् वाक्यार्थता नास्ति, अपि तु कर्मादिसाधनवत् पदार्थत्वमेवेत्याह ।

**संबोधनं न वाक्यार्थ इति वृद्धेभ्य आगमः ।**

( 160 ) [a]) निश्चायकं प्रमाणम् **आगमः** । इतरपदैरपेक्ष्येण संबोध्यतावगतेः पदार्थ एव संबोधनं क्रियाकाङ्क्षित्वेऽपि । तद् यथा कर्मादीनां नानपेक्षितक्रियाणा साधन-

[t]) A °ङ्कानोदेति.

( 159 ) [a]) A °न स्वयं व्या°. A पदस्य क्रि°. [b]) E य येवमपि ग°. A °मुखो जातः संबोधनाभिमुखाधिकः. A °मुखीनः तस्य च गमनोत्तर°. A °यासाधन. A विशेषणेऽपि सं°. A °ष्यमावाद् वा°. A °साधनमेव तत्पदा° BN °नभेदवत्.

( 160 ) [a]) E निश्चाय प्र°. A संबोधनताव°. A °ङ्क्षितोऽपि. A °क्षिता क्रिया साधनमव°. A समापमितव्या क्रि°. A न वा नो वा°. A ins. संबोध्यमानतावगत्तेः पदार्थ एव सबोधनम् । क्रियाकाङ्क्षितस्यापि before गम्यगा°. A °नक्रियात्व एक°. A इत्यादिवाक्यार्थोऽपि स°.

त्वमत्रकल्पते इति समाश्रयितव्या क्रिया न चानो वाक्यार्थत्वम्, एवं संबोधनस्यापि। गम्यमानक्रियं चैकपदमपि वाक्यं वृक्ष इत्यादिवदिति वाक्यार्थोऽपि संबोधनं भवत्येव।

इदानीं प्रकृतं निगमयति

**उद्देशेन विभक्त्यर्था वाक्यार्थात् समपोद्धृताः ॥ १६४ ॥**

[b]) संक्षेपवचनमुद्देशः। तेन हेतुना विभक्तीनामर्थाः कर्मादिकारकस्वभावाः पारमार्थिकादखण्डाद् वाक्यार्थादनेककारकविशेषणविशिष्टक्रियास्वभावात् पृथगपोद्धारबुद्ध्यान्वयव्यतिरेकाभ्यामपोद्धृताः। यथा हि वाक्यादखण्डात् पदापोद्धारस्तथा वाक्यार्थात् पदार्थापोद्धारः। [c]) विभक्त्यर्थश्चापि पदार्थ एव। तत्रापि त्वपोद्धारे पदार्थात् विभक्त्यर्थापोद्धारो व्याख्येयः वाक्यार्थ एव तु स्थितलक्षणोऽसत्यस्तु पदार्थ इति '**वाक्यार्थात्**' इत्याह। अन्ये त्वाहुः। '**उद्देशेन**' वाक्यार्थावयवेनोपलक्षिताद् '**वाक्यार्थात्**' इति वाक्यार्थैकदेशभूतात् पदार्थादेव विभक्ता इत्ययमेव स्पष्टोऽर्थः ॥ १६४ ॥

इदानीं विभक्त्यर्थस्य प्रातिपदिकार्थादन्यत्वे शास्त्रीयं लिङ्गमाह।

**विभक्त्यर्थेऽव्ययीभाववचनादवसीयताम्।**
**अन्यो द्रव्याद् विभक्त्यर्थः सोऽव्ययेनाभिधीयते ॥ १६५ ॥**

(161) [a]) अव्यय विभक्ति....(P. 2.1.6.)

इति विभक्त्यर्थे वर्तमानमव्ययं समर्थेनोत्तरपदेन समस्यत इत्युक्तम्, 'अधिस्त्रि' इति। तत्र यदि द्रव्यमेव विभक्त्यर्थो भवेत् तदा स्त्रीशब्देनैव तस्योक्तत्वादव्ययमप्रयोगार्हमेव। तदस्याप्रयुज्यमानस्य कुतः समासः। तस्माद् विभक्त्यर्थेऽव्ययीभावशासनाद वसीयते प्रातिपदिकमेव कर्मादीनि साधनानि नाभिधत्त इति। [b]) तथा ह्यधिकरणशक्तिमव्ययपदमभिदधदुत्तरपदेनानुभवति समासम्।

" दृष्टो ह्यव्यतिरेकेऽपि व्यतिरेकोऽन्वये सति।'

इत्यादिना पूर्वमन्वयव्यतिरेकाभ्यामयमर्थः साधितः। संप्रति लिङ्गदर्शनेनोपोद्बलितः। ननु च पंचकप्रातिपदिकार्थपक्षे विशिष्टस्य निर्भागस्य द्रव्यस्य प्रातिपदिकेनोक्तत्वाद्

---

का. १६४. A समुपोद्धृताः. E समवोद्धतां.

[b]) A विभग्त्थोवार्थः A °द्धया तदन्वय°. A °र्थात् पदापोद्धा°. [c]) A पदार्थविभक्त्यर्थोऽपोद्धारो व्या°. A °देशात् पदा°. A विशिष्ट इत्ययमेकः स्पष्टोऽर्थः।

(161) [a]) E अव्ययं विभक्त्यर्थे°. A °र्थे वचनमव्य°. A सामर्थ्येनोत्त°. A यद द्रव्यमेव. A °र्थोऽशब्दे नैव. A om. न before अभिधत्ते. [b]) A °क्तिमबाधादितरपदेनानुभ°. A °भास इष्टोऽस्य व्यतिरेकेऽपि. A द्रव्यस्य कृत्ताद्विद्योषद्योतनम् ?। सविभक्तपदवाच्यमपि प्र°.

विशेषद्योतनाय विभक्तय इव अव्ययमपि प्रयोगार्हं स्यात् । द्योतकानां नियमाभावादिति कथमेतल्लिङ्गमुच्यते । [c]) सत्यमेतत् । किं तु त्रिकपक्षे लिङ्गमिदमुपन्यस्यते । तथा हि 'अव्ययं विभक्ति ....' इति विभक्त्यर्थ उपलक्षितः । पंचकपक्षे तु द्रव्यात्मभूतस्य विशेषस्य विभक्तिभिः प्रकाशनात् पदेनैवार्थ उपलभ्येत, समुदायवाच्यत्वात्तस्य, न केवलया विभक्त्या । पंचकपक्षेऽपि वा नियतस्य शक्त्यात्मनो विशेषस्य प्रातिपदिकमात्रादप्रतीतेर्विभक्तीनामेवासौ विषयः । [d]) तथा च प्रातिपदिकवाच्यादनियतशक्तेर्द्रव्यादन्यो नियतशक्तिर्विभक्त्यर्थ इति युक्तमुच्यते । एवं च कृत्वान्वयव्यतिरेकाभ्यां पूर्वाभिधाने द्योतने वा यथायोगं पक्षद्वये व्याप्रियेते ।। १६५ ।।

ननु च समानकर्तृकयोः पर्णौ कर्तरि इत्येवमादेर्लिङ्गाद् द्रव्यस्य साधनत्वावगमात् कथं द्रव्यादन्यो विभक्त्यर्थ इत्याशंक्य शक्तेः साधनत्वमुपपादयितुमाह ।

**द्रव्यं तु यद् यथाभूतं तदत्यन्तं तथा भवेत् ।**
**क्रियाभेदेऽपि तस्यासौ द्रव्यात्मा नावहीयते ।। १६६ ।।**

(162) सर्वावस्थास्वनपायादेकस्वभावं द्रव्यं सदैवाचलमिति वृक्षं वृक्षेणेत्यादौ साधनवैचित्र्यनिर्निबन्धनं स्यात् । वृक्षं पश्य वृक्षेण फलितमित्यादिक्रियानानात्वनिमित्तो द्रव्यस्य भेद इत्यपि मिथ्या । क्रियानानात्वेऽपि ध्रुवं द्रव्यं स्वरूपान्न प्रच्यवते । संबन्धिभेदमात्राद् वस्तुनोऽन्यथात्वायोगात् ।। १६६ ।।

एवं च कृत्वा

**तस्माद् यत् करणं द्रव्यं तत् कर्म न पुनर्भवेत् ।**
**सर्वस्य चान्यथाभावस्तस्य द्रव्यात्मनो भवेत् ।। १६७ ।।**

(163) [a]) करणभावेनावधृतं द्रव्यं कर्मतया न प्रख्यायते । उपलक्षणं चैतत् कारकान्तरेषु । कर्मतया चावगतं शेषतया न विज्ञायेत । एकत्वाच्च द्रव्यस्य साधनस्य

---

[c]) E अवरमि°. A om. विभक्ति before विभक्त्यर्थः. A पचात्मभूतस्य विशे°. A om. केवलया A वा निर्भागस्य. [d]) A om. तथा च. A तत्वादन्वय व्यतिरेकाभ्यतेनैव. BE व्याप्रियते. I व्याह्रियते A °र्तीरस्य तत्त्वावगमात् द्रव्या°.

का १६६. A तदन्यच्च.

(162) A °देवाभिन्नमिति. E °देवाचमिति. E °मित्यादौ क्रिया°. A °नानात्वमपि. A द्रव्यस्वरूप°.

का. १६७. A न तत् कर्म पुनर्भवेत्. B सर्वस्य चान्य°. A सर्वस्येवान्य°.

(163) [a]) A °न धृत. A प्रख्याप्यते. A °णं चेत् का° A om. द्रव्यस्य. A om. आसन्ने. A अधिकरणसप्तमी स्यात्. A कारकत्वे, A °पेक्षयाऽवि°. A °पक्षया मानभि°. A om. अभिहिता दन्यत्र. A पर्युदासाश्रयणास°.

प्रासादे आस्ते आसने शेते इति ल्युडभिधानादधिकरणस्य सप्तमी न स्यात्। शक्तेस्तु साधनत्वे क्रियाभेदेन तद्भेदात्सदिक्रियापेक्षायामधिकरणशक्तावभिहितायामप्यासिक्रियापेक्षायां तु तस्याभिहितादन्यत्रानभिहित इति पर्युदासाश्रयणात् सप्तमी सिध्यति। [b]) तथा च वार्तिकम्।

" अनभिहिते हि विधानम् " ( Vā on P. 2.3.1.)

अथ क्रियान्तरयोगे करणस्य कर्मात्मतया परिणामस्तदा सकलस्यैव द्रव्यस्वभावस्य वस्त्वन्तरापत्तिः स्यात्, न करणांशस्यैव, तस्य द्रव्यादन्यत्वात। शक्तेस्तु साधनत्वे क्रियाभेदेन तद्भेदेऽपि तदाधारस्य द्रव्यस्यान्वयिनोऽवस्थानात् शक्त्यन्तरत्यागोपादानयोगे युक्तः करणादिरूपतया संभवः। असमर्थस्य द्रव्यस्य क्रियासिद्धावनंगत्वात् सामर्थ्यमेव तदाधारं साधनं युक्तम्। [c]) न चैतावता द्रव्यस्यापि साधनाधारत्वात् साधनभावः कल्पयितुं न्याय्यः। न हि देवदत्तस्य पचिसाधनत्वे तदाधारस्य पीठस्यापि तत् कल्प्यत इति शक्तय एव साधनं न तु शक्तिमद् द्रव्यम्।

" समानकर्तृकयोः " ( P. 3.4.21 )

इति तु शक्त्याधारद्रव्यैकत्वाध्यारोपनिमित्तं समानत्वं कर्तृशक्त्योः। 'पशौ कर्तरि' हस्तिसूचकयोः कर्त्रोः इति पशौ द्रव्ये यः कर्ता हस्तिसूचकयोः द्रव्ययोः कर्तारौ इति व्याख्येयम्। [d]) अथवा कर्तृशक्त्याश्रयः पशुरेव कर्ता इति सामानाधिकरण्यम्।

" कर्मणि द्वितीया ' ( P. 2.3.2. )

इत्यादावपि शक्तीनां संख्यायोगात् तदाधारं द्रव्यमेव निर्दिश्यते। तेन कर्मैकार्थसमवेतायां संख्यायां विभक्तय इत्यर्थः। निराधारायाश्च शक्तेरनुपपत्तेः द्रव्यमेव शक्त्याविष्टं साधनं लकारवाच्यम्। तच्च विशेषात्मकमेव क्रियाकारि नियतेनात्मनानभिहितं पदान्तरेणाभिव्यज्यत इति देवदत्तः पचतीत्यादिसामानाधिकरण्येन प्रयोगोपपत्तिरिति सर्वं सुस्थम् ॥ १६७ ॥

इति भूतिराजतनयहेलाराजकृते प्रकीर्णकप्रकाशे साधनसमुद्देशः सप्तमः ॥

---

[b]) A सदा स°. E तथा स°. A °णाशत्वात्; E °णाशस्येव. A °न्वायितावस्था°. A °द्ध्यनन्तगम्यत्वात्. A °धारम्। साधववतो. [c]) A om. न चैतावता A भवत्याधारत्वे. A °रस्य परस्यावि. E कल्पते. A कर्तृशरराया. A om. द्रव्ययोः after हस्तिसूचकयोः. [d]) A दृश्यते. E क्रियाकारकं. A °न्तरेऽमिव्य°.

# APPENDIX I

Index of half-verses in Vākyapadīya, Kāṇḍa III, Pt. 1. Reference is to the number of the verse in a particular samuddeśa.

## त

प

# APPENDIX II

## Index of quotations in the commentary of Helārāja on Vākyapadīya, Kāṇḍa III, Pt. I

| *Quotation* | *Page and line* | *Source* |
|---|---|---|
| अनभिधानाद्रमणीयादिषूत्पत्तिर्न भविष्यति। | 219. 12. | M. Bhā. on P. 5.1.57, 58 |
| अनभिहिते हि विधानम्। | 370. 5. | Vā. on P. 2.3.1. |
| अनागमश्च सोऽभ्यासः समयः कैश्चिदिष्यते। | 145. 6. | |
| अनादिमव्यवच्छिन्नां... | 23. 21. | Vāk. b I. 100. |
| अनाश्रिते तु व्यापारे निमित्ते हेतुरिष्यते। | 295. 16. | Vāk. III. सा. 24. |
| अनुप्रतिगृणश्च। | 334. 23. | P. 1.4.41. |
| अनुर्लक्षणे | 251. 4; 253. 7. | P. 1.4.84. |
| अनुर्लक्षणे वचनानर्थक्यं सामान्यकृतत्वात्। | 253. 9. | Vā. on P. 1.4.84. |
| अनेकद्रव्यसमवायाद्रूपविशेषाच्च रूपोपलब्धिः। | 241. 5. | Vai. Sū. 4.1.8. |
| अन्यतरच्छक्यमवक्तुम्। | 367. 3. | M. Bhā. on P. 2.3.46. |
| अन्यार्थे च। | 338. 21. | Vā. on P. 6.3.2. |
| अन्वर्थमिति चेदकर्तरि कर्तृशब्दानुपपत्तिः। | 245. 20. | Vā. on P. 1.4.23. |
| अपह्नवे ज्ञः। | 304. 15. | P. 1.3.44. |
| अपादानं च। वृक्षस्य पर्णं पततीति | 342. 5. | Vā. on P. 1.4.23. |
| अपादानमुत्तराणि। | 89. 7; 288. 1; 289. 12. | Vā. on P. 1.4.1. |
| अपादानमुत्तराणि। धनुषा विध्यति, कंसपात्र्यां भुङ्क्ते, गां दोग्धि, धनुर्विध्यति। | 340. 10. | Vā. on P. 1.4.1. |
| अपादानादीनां त्वप्रसिद्धिः। | 248. 18. | Vā. on P. 1.4.23. |
| अभिसंबन्धस्तत्र क्रियते। | 328. 8, 16. | M. Bhā. on P. 3.1.26. |
| अभिहितलक्षणायामनभिहिते प्रथमाविधिः। | 363. 4. | Vā. on P. 2.3.46. |
| अभिहितानभिहिते प्रथमाभावः। | 363. 21. | Vā. on P. 2.3.46. |
| अभिहिते प्रथमा। | 362. 21. | M. Bhā. on P. 2.3.46. |
| अर्थरूपमेवैतदेवंजातीयकम्। | 357. 10. | M. Bhā. on P. 2.3.50. |
| अर्थवत् प्रातिपदिकम्। | 195. 18. | Vā. on P. 1.4.1. |
| अर्थवतो नमः शब्दस्य ग्रहणम्। न च नमस्यतिशब्दे नमः शब्दोऽर्थवान्। | 305. 23. | M. Bhā. on Vā. on P. 3.1.19. |
| अर्थविशेष उपाधिः तदन्तवाच्यः समानशब्दो यः। अनुपाधिरतोऽन्यः स्यात् श्लाघादिविशेषणं यद्वत्॥ | 10). 8. | Quoted by Kaiyaṭa in his Pradīpa on P. 3.1.1. |
| अर्थानादेशनात्। | 184. 4. | M. Bhā. on P. 2.1.1. |
| अर्थी कर्ता। | 313. 17. | व्याकरणान्तर. |
| अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात्। | 79. 9. | Mī. Sū 3.1.6.12. |
| अर्हतो नुम च। | 196. 9. | Vā. on P. 5.1.124. |

| *Quotation* | *Page and line* | *Source* |
|---|---|---|
| अव्यतिरेकात् सिद्धम् | 197. 10. | Vā. on P. 5.2.94. |
| असंभवे प्रतिनिधिर्माभूत् ... | 10. 14. | Vāk. a II. 70. |
| अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति। | 363. 7. | M. Bhā. on P. 2.3.46. |
| अस्तीत्युत्पन्नस्यात्मधारणमुच्यते। | 156. 19. | C/o Ni. I. 2.10. |
| आकृत्यभिधानाद्धैकविभक्तौ वाजप्यायनः। | 21. 17. | Vā. on P. 1.2.64. |
| आख्यानात् कृतस्तदाचष्टे ... | 236. 6. | Vā. on P. 3.1.26. |
| आ च तुमुनः समानाधिकरणे | 298. 18. | Vā. on P. 3.4.26. |
| आचार्यप्रवृत्तिर्ज्ञापयति सर्वं एव तद्धितः सापेक्षाद्भवतीति यदयं नञो गुणप्रतिषेधे सम्पाद्यर्हत्यादिकमाह। | 201. 15. | |
| आत्मसंयोगेऽकर्मकर्तुः कर्मदर्शनात् | 314. 10. | Vā on P. 3.1.87. |
| आत्मा ज्ञातव्यो मन्तव्यो निदिध्यासितव्यः | 53. 1. | Bṛh. Up. 2.4.5. |
| आत्मैवेदं सत्यम् | 118. 15. | |
| आदित्यसम्प्रयोगात् भूतपूर्वाद् भविष्यतो भूताच्च प्राची। | 210. 19. | Vai. Sū. 2.2.14. |
| आश्रयाश्रयिणोर्वाक्यन्नियमस्त्ववतिष्ठते। | 6. 8. | Vāk. III. जा. 75. |
| आस्थितप्रतिषेधो वक्तव्यः। | 337. 12. | M. Bhā. on P. 2.3.12. |
| इत इदमिति यतस्तद्दिशो लिङ्गम्। | 210. 4. | Vai. Sū. 2.2.10. |
| इतरथा ह्यकुर्वत्यपि कारयतीति स्यात्। | 323. 20. | Vā. on P. 1.4.54. |
| इवार्थे चायं तद्धितः | 279. 10. | Vā. on P. 3.2.60. |
| इह कस्मान्न णिज् भवति पृच्छतु मा भवान् | 330. 1. | M. Bhā. on P. 3.1.26. |
| इह कस्मान्न भवति, पूर्वस्मिन् देशे वसति। | 215. 6. | M. Bhā. on P. 5.3.27. |
| इह मा भूत् ईषद् गार्ग्यः | 199. 19. | M. Bhā on P. 2 2.7. |
| इह हस्तदक्षिणः पन्थाः, इह हस्तवामः | 214. 12. | M. Bhā. on P. 1.3.2. |
| ईप्सितस्य कर्मसंज्ञायां निर्वृत्तस्य कारकत्वे कर्मसंज्ञाप्रसङ्गः क्रियेप्सितत्वात्। | 301. 11. | Vā. on P. 1.4.49. |
| ईषदकृता। | 199. 11. | P. 2.2.7. |
| ईषद्गुणवचनेन। | 199. 13. | Vā. on P. 2.2.7. |
| उक्तं पूर्वेण। | 356. 21. | M. Bhā. on Vā. on P. 2.3 50. |
| उदश्चरः सकर्मकात्। | 286. 17. | P. 1.3.53. |
| उपमानानि सामान्यवचनैः। | 24. 11. | P. 2.1.55. |
| उपसर्गाच्छन्दसि धात्वर्थे। | 231. 1. | P. 5.1.118. |
| उपान्वध्याङ्वसः। | 352. 1. | P. 1.4.48. |
| उभयं वै प्रातिपदिकार्थः। | 202. 17. | |
| ऋषीणामपि यज्ज्ञानं तदप्यागमपूर्वकम्। | 54. 24. | Vāk. b I. 30. |

| *Quotation* | *Page and line* | *Source* |
| --- | --- | --- |
| कर्मादिष्व कर्मकवद्वचनम् | 361. 3. | |
| कारक इति संज्ञानिर्देशश्चेत् संज्ञिनोऽपि निर्देशः। इतरथा ह्यनिष्टप्रसङ्गो ग्रामस्य समीपादागच्छतीत्यकारकस्य। | 250. 10. | Vā. on P. 1.4.23 |
| कारकाणामविवक्षा शेषः। | 355. 1. | M. Bhā. on P. 2.3.50. |
| कार्योपादानविकल्पपरिगृहीतःशब्दार्थः। | 162. 17. | |
| कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्। | 282. 6. | Vā. on P. 1.4.51. |
| कालाध्वनोरत्यन्तसंयोगे। | 283. 8 | P. 2.3.5. |
| किं च भो वर्तमानाया एव क्रियायाः कर्त्रा भवितव्यम्, न भूतभविष्यत् कालायाः | 328. 5. | M. Bhā. on P. 3.1.26. |
| कृदर्थानुपपत्तिस्तु। | 279. 6. | Vā. on P. 3.2.60. |
| केषांचित् साहचर्येण जातिः शक्त्युपलक्षणम्। | 80. 12. | Vāk. III. जा. 3. |
| क्तक्तवतू निष्ठा। | 108. 17. | P. 1.1 26. |
| क्तस्य च वर्तमाने। | 360. 19. | P. 2.3.67. |
| क्रियाग्रहणमपि कर्तव्यम्। | 244. 10. | M. Bhā. on Vā. on P. 1.4.32. |
| क्रिया चैव हि भाव्यते, स्वभावसिद्धं द्रव्यम्। | 296. 1. | M. Bhā. on P. 1.3.1. |
| क्रियापि कृत्रिमं कर्म। | 244 12. | M. Bhā. on P. 1.4.32. |
| क्रियाप्रधानमाख्यातम्। | 58. 5. | |
| क्रियाया द्योतको नायं न संबन्धस्य वाचकः। नापि क्रियापदाक्षेपी संबन्धस्य तु भेदकः॥ | 359. 5; 5. 16. | Vāk. a. II. 204. |
| कृञो हेतुताच्छील्यानुलोम्येषु। | 327. 12. | P. 3.2 20. |
| क्रुधद्रुहोरुपसृष्टयोः कर्म। | 267. 10. | P. 1.4.38. |
| क्लृपि सम्पद्यमाने चतुर्थी वक्तव्या। | 319. 14. | M. Bhā. on Vā. on P. 2.3.13. |
| गडेः कड च। | 200. 6. | |
| गतिदिविहेतुमत्सु च ग्रहणम्। | 297. 11; 326. 19. | |
| गतिबुद्धि ... | 330. 12. | P. 1.4.52. |
| गतियुक्तेष्वपादानसंज्ञा नोपपद्यते, अध्रुवत्वात्। | 339. 21. | Vā. on P. 1.4.24. |
| गां दोग्धि ... | 288. 2. | M. Bhā. on Vā. on P. 1.4.1. |
| गामभ्याज शुक्लाम् | 75. 15; 77. 5. | M. Bhā. on P. 1.1.1. |
| गुणकर्मणि लादिविधिः पूर्वं गुणकर्मणा भवति योगः। मुख्यं कर्म प्रेप्सुर्यस्माद्ध्येव यतते प्राक्। तस्माच्छुद्धस्य दुहेर्भवति गवा पूर्वमेव संबन्धः। गोर्दुहिना-पयसस्तु प्राक् तस्माल्लादयस्तस्मिन्। | 287. 8. | M. Bhā. on P. 1.4.51. |

| *Quotation* | *Page and line* | *Source* |
|---|---|---|
| गुणः प्रकर्षहेतुर्यः स्वातन्त्र्येणोपदिश्यते तस्याश्रितगुणादेव प्रकृष्टत्वं प्रतीयते ॥ | 205. 7. | Vāk. b. I. 64. |
| गुणवचनं च । | 195. 19. | Vā. on P. on 1.4.1. |
| गुणवचनब्राह्मणादिभ्यः ... | 195. 16. | P. 5.1.124. |
| गुणवचनेभ्यो मतुपो लुक् । | 197. 7. | Vā. on P. 5.2.94. |
| गुणसमुदायः साधनम् । | 232. 15. | M. Bhā. on P. 3.2.115. |
| गुणानां च परार्थत्वादसंबन्धः समत्वात् स्यात् । | 298. 3. | Mī. Sū. 3.1.12.22. |
| गोत्रचरणात् .. | 196. 16. | P. 4.3.126. |
| गौरित्यत्र कः शब्दः । | 126. 14. | M. Bhā. at the beginning of पस्पशाह्निक |
| ग्रन्थिकेषु कथम् । | 236. 12. | M. Bhā. on P. 3.1.26. |
| ग्रहैर्जुहोति । | 67. 6. | |
| ग्रामे वसंस्त्रिरात्रमुपवसति । | 353. 9. | M. Bhā. on P. 1.4.48. |
| ङ्याप्प्रातिपदिकात् । | 91. 7. | P. 4.1.1. |
| चतुर्भिरादत्ते | 62. 16. | |
| चित्रगवीर्बध्नाति | 67. 9. | |
| चैतन्यं पुरुषस्य स्वरूपम् | 224. 12. | |
| चोदनासु च तस्यारंभात् । | 9. 11; 40. 8. | Vā. on P. 1.2.64. |
| चोदिते तु परार्थत्वाद्यथाश्रुति प्रतीयत । | 76. 7. | Mī. Sū. 3.1.7.15. |
| जननेन प्राप्यते इति जातिः । न चैतस्यार्थस्य प्रकर्षापकर्षौ स्तः । | 204. 14. | M. Bhā. on P. 5.3.55. |
| जनयित्वा क्रिया काचित् | 5. 1; | Vāk. a. II. 197. |
| जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम् । | 61. 14; 185. 11. | P. 1.2.58. |
| जायतेऽस्ति विपरिणमते | 43. 19. | Ni. 1.2.8. |
| जीवितपरिमाणे चेत्यनर्थकं वचनम् । कालादिति सिद्धत्वात् । | 219. 7. | Vā. on P. 5.1.57, 58. |
| जुगुप्साविरामप्रमादार्थानामुपसंख्यानम् । | 347. 16. | Vā. on P. 1.4.24. |
| जोऽविदर्थस्य करणे । | 361. 6. | P. 2.3.51. |
| डित्थत्वं त एतत् । | 194. 1. | M. Bhā. on P. 5.1.119. |
| णेरणौ यत्कर्म ... | 275. 21. | P. 1.3.67. |
| ततोऽपायेन युज्यते । | 44. 6. | M. Bhā. on P. 1.4.51. |
| तत्प्रयोजको हेतुश्च । | 326. 16. | P. 1.4.55. |
| तत्र निरतिशयं सर्वज्ञबीजम् । | 54. 20. | Y. Dar. 1.25. |
| तत्र प्रथमाविधिः । | 356. 19. | Vā. on P. 2.3.50. |